1847/2

Bhagavata tippanī

Vol - 3

'Yadupati'

28.01

अ। 131 : III

॥ अथ श्रीमद्भागवतटिप्पणी यदुपतिविरचिता प्रारभ्यते ॥

॥ तृतीयः स्कंधः ॥

॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ सुखज्ञानादिसद्रत्नः शुकयोगींदुसंभवः ॥ व्यासदेवामृतांबोधिर्भूयाद्भूत्यै ममानिशं ॥ १ ॥ आसीद्यदुरात्पद्ममित्यादिना पाद्मकल्पकाललक्षणादिकं यत्परीक्षिता पृष्टं तस्य सर्वस्योत्तरं विदुरमैत्रेयसंवादमुखेनैव वक्ष्यामीत्याशयेनाह ॥ एवमेतादिति । यथाऽहमेतत्पाद्मकल्पकाललक्षणादिकमुद्दिश्य त्वया पृष्ट एवं । तथा ऋद्धिमदैश्वर्यवत्स्वगृहं त्यक्त्वा । अनेन तस्य वैराग्यं सूचितं । क्षत्रा विदुरेण पृष्टो मैत्रेयस्तस्मै यदुत्तरमुक्तवांस्तत्तुभ्यं । अभिधास्य इति शेषः ॥ १ ॥ ननु विदुरः कस्मिन्समये वनं प्रविष्ट इत्यपेक्षायामाह ॥ यदेति । वः पांडवानामर्थे मंत्रकृद्राज्यदानोपयोगिविचारकर्ता । द्रुपदपुरोहितादिसाम्यव्यावृत्त्यर्थं तु शब्दः । पौरवेंद्रपुरं हस्तिनापुरं । आत्मसात्कृतं स्वाधीनमुपप्लाव्यं प्रविशेश । तदा वनं प्राविष्टेनेति पूर्वेणान्वयः । नन्वेवं विदुरो युद्धकाले नागपुरे नासीदिति प्राप्तं । तथात्वे प्रथमस्कंधे तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजामिति युद्धकालसमाप्त्यनंतरं धृतराष्ट्रसांत्वनकाले विदुरावस्थानस्योक्तत्वेन दशमे युधिष्ठिरस्य राज्याभिषेकानंतरं कृष्णस्य द्वारावतीप्रयाणकालेऽपि विदुरावस्थानस्य वक्ष्यमाणत्वेन तद्विरोध इत्याशंकां प्रमाणेनैव परिहरति ॥ युद्धकाल इति । तु शब्दोऽवधारणे । युद्धकाल एव । न सर्वदा गतोऽपि प्राय आस्ते इत्यनेनेदं सूचयाति । संधानार्थमागतः श्रीकृष्णो यदा नागपुरं हित्वोपप्लाव्यं गतस्तदनंतरं युद्धारंभात्पूर्वमेव विदुरस्तीर्थयात्रामुद्दिश्य गतोऽपि न दूरं गतः किंतु समीपस्थान्येव तीर्थानि गत्वा युद्धसमाप्तिपर्यंतं पुनर्हास्तिनपुरप्रांतमेवायातीति । प्राय इत्यनेन समीपस्थतीर्थगमनमपि न प्रातिदिनामिति सूचयाति । गजपुरे गजपुरप्रांते किमर्थमास्त इत्यत उक्तं ॥ पांडवानां व्यपेक्षयेति । तद्विजयविवित्सयेत्यर्थः । यद्वा । अस्मिन्समये विदुरेण दूरं न गंतव्यमिति पांडवानां विशिष्टापेक्षयेत्यर्थः ॥ २ ॥ क्षत्रा पृष्टो मैत्रेयो यदाह तत्तुभ्यं वक्ष्यामीत्युक्ते राजा विदुरमैत्रेयसंवादः कुत्र कदा जात इति देशकालविशेषविवित्सया पृच्छतीत्याह ॥ कुत्रेति । कस्मिंस्तीर्थविशेषे कस्मान्निमित्ताद्वनं प्राविष्ट इत्यप्यत्र ग्राह्यं ॥ ३ ॥ स्वस्य तदुभयश्रवणे च रतिं सूचयितुं तत्प्रश्नप्रतिवचनरूपं संवादं स्तौति ॥ नहीति । तस्मिन्मैत्रेये वरीयसि गुरौ । न प्रतीति यावत् । तस्य मैत्रेयस्य परिहार इत्यपि ग्राह्यं । हि यस्मात्साधूनां विष्ण्वादीनां वादेन कथयोपबृंहितः पूर्णः । तत्प्रतिपादक इति यावत् । तस्मादल्पस्यार्थस्य

प्रयोजनस्योदयः प्राप्तिर्यस्मात्स न किंतु संपूर्णप्रयोजनजनक एवेत्यर्थः ॥ ४ ॥ सुबव्हतिपूर्णो भगवान् तं वेत्तीति सुबहुवित् । सुष्टुसर्वज्ञ इति वा । श्रूयतामित्युक्त्वा । अभिमुखीकृत्येति यावत् ॥ ५ ॥ आदौ तावद्विदुरस्य वनप्रवेशे निमित्तं दर्शयति ॥ यदा त्वित्यादिभिरेकादशश्लोकैः । अत्र यदा शब्दानां कालार्थत्वे बाधकं दर्शयन् विवक्षितमर्थांतरं दर्शयति ॥ यदेति । केशाभिमर्शः प्राप्तः प्रसक्त इत्येतद्वक्ष्यमाणश्रीकृष्णवचनाकरणविदुरागमनतद्वचनतदवमानतद्गमनानामप्युपलक्षकं ॥ ततश्चायमर्थः ॥ यद्यत्र यदा शब्दाः कालवाचिनस्तदा यस्मिन् काले लाक्षाभवने तदाह तस्मिन्नेव काले तदुत्तरत्रोक्तानां केशाभिमर्शनं श्रीकृष्णवचनाकरणविदुरगमनतद्वचनतदवमानांतानां निमित्तानां तन्निमित्तकस्य विदुरस्य च समावेशः प्राप्तः । न चासावुपपद्यते । अतो यदा शब्दोऽत्र हेत्वर्थोऽभिमत इति । यदा शब्द इत्येकवचनं जात्यभिप्रायेण । यदा शब्दस्य हेत्वर्थे प्रमाणं दर्शयति ॥ यदेति । तदेति तच्छब्दग्रहणेन मूले यदा शब्दोऽपेक्षिततयाऽवश्यमध्याहार्यस्तदा शब्दोऽपि हेत्वर्थ इति सूचयति ॥ ततश्चायं मूलार्थः ॥ राजा धृतराष्ट्रो विनष्टदृष्टिर्विगतधर्मज्ञानः । तु शब्दोऽवधारणे । अधर्मेणेत्यत्र संबध्यते । धर्मविरुद्धकर्मणैव । यविष्ठस्य कनिष्ठस्य पांडोर्विबंधून्पितृरहितान्यदा यस्माददाह तदा तस्मादयादिति वक्ष्यमाणेनान्वयः । एवमेवाग्रेतनानामपि यदा शब्दानामन्वयो द्रष्टव्यः ॥ ६ ॥ यदा यस्मात्कुरुदेवस्य कुरुश्रेष्ठस्य युधिष्ठिरस्य देव्या राजाभिषिक्तस्त्रियः केशाभिमर्शरूपं गर्ह्यं निंद्यं सुतस्य दुःशासनस्य कर्म नृपो धृतराष्ट्रः । कथं भूतायाः । स्नुषायाः पुत्रभार्यायाः । पुनः कथं भूतायाः । अस्त्रैर्दुःखोद्रेकेण निर्गतनेत्रजलैः कुचयोर्लिप्तकुंकुमानि । कुंकुमकेशरयुक्तगंधलेपमिति यावत् । हरंत्याः क्षालयंत्याः । अनेन विशेषणद्वयेन धृतराष्ट्रस्यातीवनिर्घृणत्वं सूचयति ॥ ७ ॥ द्यूते त्विति । तु शब्दोऽवधारणार्थः । अधर्मेणेत्यनेन संबध्यते । सत्यावलंबस्य सत्यं सत्यवचनमेवावलंब आधारयष्टिर्यस्येत्यर्थः । वनागतस्य वनादागतस्य वनं गतस्येति पाठे वने क्लेशितस्येत्यर्थः । साधोरित्यादीन्यजातशत्रुविशेषणानि तस्य दायदानयोग्यतोपपादकानि । समयेन द्यूतपरिकल्पितकालविशेषसमापनरूपेण निमित्तेन याचितः । नृप इति वर्तते । दायं पितृधनं । तमोजुषाणस्तामसपुत्रासक्तः । यद्यस्मात्तस्मात् ॥ ८ ॥ यदा यस्मात्पार्थेन युधिष्ठिरेण प्राहितः प्रेषितोऽमृतायनानि मोक्षादिसकलपुरुषार्थसाधनानि तु विशेषेण जगादेत्यन्वयः । राजा धृतराष्ट्रोऽनुमेने

आनुकूल्येन ज्ञातवान् । हृतः पुण्यलेशो यस्य स तथोऽक्तः । अनेन गुरुमात्रस्यापि वचनं नोल्लंघ्यं किमुत जगद्गुरोरतोऽतीवपापं प्राप्तं । यच्चाल्पं पुण्यं संपादितं तदपि नष्टमिति सूचयाति ॥ ९ ॥ यदा यस्मात् । अथोपप्लाव्यं प्राति कृष्णमगनानंतरं पूर्वजेनाग्रजेन मंत्राय विचारायोपहूतः सन् भवनं प्रविष्टो विदुरस्तं धृतराष्ट्रं प्राति मंत्रदृशां विचारज्ञानिनां वरीयान् श्रेष्ठः । मंत्रदृग्वरीयस्त्वं कुत इत्यत उक्त ॥ यन्मंत्रिण इति । यद्यस्मादन्ये मंत्रिणो वैदुरिकं विदुरेणोक्तमेव स्वराजादिकं प्रति वदंति तस्मात् । राजनीतिसंप्रदायप्रवर्तकत्वादित्युक्तं भवति ॥ १० ॥ किमाहेत्यत आह ॥ अजातशत्रोरिति । प्रतियच्छ प्रदेहि । दुर्विषहं विशेषेण दुःसहं । अगोऽपराधं । तितिक्षतः सहमानस्य । अप्रदाने किं बाधकमित्यतो भीमार्जुनाभ्यां भवदीयवध एवेत्याशयेनाह ॥ सहानुज इति । यत्र युधिष्ठिरपक्षे । हि शब्दो हेत्वर्थः । स्वशत्रुहा स्ववैरिसंहारसमर्थः । तदेव कुत इत्यत उक्तं ॥ यामिति । यमर्जुनसहितभीमं प्राति ॥ ११ ॥ श्रीकृष्णद्रोहेऽपि बाधक इत्याशयेनाह ॥ यदा त्विति । यदा यस्मात्तु गृहीतवान् विशेषेणात्मीयत्वेन स्वीकृतवान् तस्मादायं प्रतियच्छेन्यन्वयः । मुकुंद इत्यनेन भक्तानां मोक्षमपि संपादयाति किमु राज्यमिति सूचयाति । क्षितिदेवा ब्राह्मणा देवा इंद्रादयः । तैः सहित इत्यनेन देवब्राह्मणानुग्रहोऽपि युधिष्ठिरेऽस्तीति तद्द्रोहोऽपि भविष्यतीति सूचयाति । सोऽपि तत्समीप एवास्तीत्याह ॥ आस्त इति । स्वेषां पांडवानां पुर्व्यामुपप्लाव्यनगरसंज्ञायां यदुदेवानां यादवश्रेष्ठानां च देवः पूज्यः । अनेन यादवद्रोहोऽपि तव भविष्यतीति सूचयाति । सोऽन्यत्र न व्यासक्त इत्याह ॥ विनिर्जितेति। विशेषेण निर्जिता नृदेवा राजानस्तेषां देवाः श्रेष्ठा येन स तथोक्तः ॥ १२ ॥ औरसपुत्रमनतिक्रम्य कथं युष्ठिराय राज्यं मया देयमित्यत आह ॥ स एष इति । हे अग्रज । त्वं यमपत्यमत्या न पतति कुलं यस्मात्तदपत्यामिति बुद्ध्या पुष्णासि राज्यदानादिना वर्धयासि स एष दोषः सर्वदोषाभिमानी कलिः स्वयमेव त्वत्पुत्ररूपेण गृहान् प्रविष्ट आस्ते । कुतः । यतः पुरुषो भगवान् तं द्वेष्टीति पुरुषद्विट् । एतदपि कुतः । यतः कृष्णाद्विमुखस्तदाज्ञाऽकरणात् । अत एव गतश्रीर्लक्ष्मीकटाक्षरहितोऽथ तस्मादेनं । आशु कालक्षेपमंतरेण त्यज । पुत्रः कथं त्याज्य इत्यत आह ॥ कुलस्य कौशलायेति । त्यजेदेकं कुलस्यार्थे इति न्यायमनेन सूचयाति ॥ १३ ॥ इत्यनेन प्रकारेण धृतराष्ट्राय हितमूचिवान्विदुरः । तत्र धृतराष्ट्रपुरोदेशे स्फुरितश्चलितोऽधरोष्ठो

यस्य तेनासत्कृतो धिक्कृतः सद्भिः स्पृहणीयमपेक्षणीयं शीलं यस्य सः ॥ १४ ॥ धिक्कारप्रकारमेवाह ॥ क इति । दास्याः सुतामित्याक्रोशे षष्ठी । उपजुहावाहूतवान् । जिम्हं कपटिनं । यस्य मे बालिना दत्तेनान्नेन पुष्टस्तस्मिन्मयि प्रतीपो विरोधकृत् । परेषां मद्वैरिणां । पांडवानां कृत्ये कार्ये तत्संपादनार्थमास्ते यस्मात्तस्मात्पुरान्निर्वास्यतां बहिः स्थाप्यतां श्वसानः श्वासमात्राव-शेषः । अनेन सम्यक् ताडनपूर्वकमिति सूचयति ॥ १५ ॥ एवमुक्ते विदुरः किं व्यथितो जातो नेत्याह ॥ स इति । कर्ण-बाणैः कर्णयोर्बाणतुल्यैर्वचनैर्भ्रातुर्धृतराष्ट्रस्य स्मयन्मंदस्मितं कुर्वन् मायां हरेः पुत्रादिस्नेहापादिकां बंधकशक्तिमुरु बहु मानयानः । अहो आश्चर्यं । कथमीश्वरबंधकशक्तिर्जगद्विमोहिकेत्यादि वदन्निति यावत् । तन्निःसारणात्पूर्वं स्वयमेवायात् । वनं प्रतीति शेषः । किं कृत्वा तस्य द्वारि धनुर्निधाय पांडवान्संगत्यास्माभिरयं योत्स्यतीति तेषां शंकां परिहर्तुं धनुर्निधानमिति ध्येयं ॥ १६ ॥ वने किं व्यर्थमेवायुर्नीतं नेत्याह ॥ स निर्गत इति । तीर्थपदो हरेः पदानि स्थानानि । क्षेत्राणीति यावत् । अनुक्रमेणैवाक्रमद्गतवान् । पुण्यचिकीर्षुर्हरिप्रीतिजनकपुण्यसंपादनेच्छुर्यानि क्षेत्राणि । सहस्रमूर्तिर्भगवान् ॥ १७ ॥ कथमेकस्य समग्ररूपेणावस्थानमिति शंकापरिहारायेदमिति ज्ञातव्यं । एतदेवविशदयति ॥ वनेष्विति । वनेषु पुण्यवनेषु । पुण्यानि यान्युपवनानि ये च पुण्यादयो यानि च पुण्यानि कुंजानि लतादीनि गूढस्थानानि तेष्वयं कं शुद्धं तोयं येषु तेषु । अनंतलिंगैर्हरिप्रतिमाभिः सम्यगलंकृतेषु तीर्थायतनेषु तीर्थेष्वायतनेषु क्षेत्रेषु चानन्य एकाकी ॥ १८ ॥ चरणसमये तस्य स्थितिं दर्शयति ॥ गामिति । गां भूमिं मेध्यैः शुद्धैर्विविक्तैर्वृक्षात्पतितैः पत्रादिभिर्वृत्तिर्वर्तनं जीवनं यस्य स तथोक्तः । मेध्ये शुद्धे विविक्ते एकांतस्थले वृत्तिर्वर्तनं यस्येति वा । अधः शयनेनावधूतो रजोरूषितदेहः स्वैः स्वकीयैरलक्षितोऽदृष्टोऽवधूतोऽवज्ञाय त्यक्त उन्मत्तादिस्तद्वद्वेषो यस्य स तथोक्तः । अवधूतकेश इति पाठेऽवधूता वायुना कंपिताः केशा यस्येति व्याख्येयं ॥ ३९ ॥ भारतमेव वर्षं नान्यत् । अन्यस्य कर्मभूमित्वाभावात् । कालेन केनचित्कालेन । यावद्यदा तावत्तदा । एकं चक्रमाद्या यस्यां तां । एकमात-पत्रं यस्यां तां । अजितेन श्रीकृष्णेन निमित्तेन । पार्थो युधिष्ठिरः ॥ २० ॥ अथ प्रभासप्राप्त्यनंतरं तत्र प्रभासे सुहृदां विनष्टिं विनाशं शुश्राव । नन्वत्र सुहृच्छब्देन के विवक्षिताः । न च दुर्योधनादयस्तन्नाशस्य पूर्वमेव श्रुतत्वात् । नापि पांडवा यादवा

वा तेषां तदा विनाशाभावात् । अन्यथाऽजितेन पार्थः शशासेत्युक्तविरोधात् । अतोऽत्र विवक्षितं तात्पर्यं दर्शयति ॥ सुहृद्विनष्टिमिति । तथा च सुहृच्छब्देन यादवा एव विवक्षिताः । तेषां विनष्टिरेष्याऽनागताऽत्र विवक्षिता तामेव शुश्राव । न तु जातां तदानीं जातं तज्जनकं विप्रशापमेव शुश्रावेत्यर्थः । अतो न कोऽपि विरोध इति भावः । ननु विप्रशापोऽपि यमुनाया- मुद्धवाच्छ्रुत्वेत्यग्रे स्पष्टमतः कथमिदानीं स श्रुत इति व्याख्यायत इत्यतोऽत्र प्रमाणमाह ॥ विदुरस्त्विति । तु शब्दोऽवधारणे । संक्षेपत इत्यनेन संबध्यते । वर्तमानयदुविनष्टिपरत्वेन व्याख्याने भारतविरोधं चाह ॥ भारतेति । अन्यथा विनष्टेरेष्यत्वाभावे ॥ ततश्चायं श्लोकार्थः ॥ यथा संस्पर्धया संघर्षविशेषेण वेणुजवह्निसंश्रयं वनं दग्धं भवति तथा संस्पर्धयाऽन्योन्यनर्मवचनजनि- तस्य स्पर्धाविशेषेण भविष्यंतीं सुहृदां यदूनां विनष्टिं तज्जनकं विप्रशापं संक्षेपत एव शुश्राव । अथ श्रवणानंतरमनुशोचन् तान्प्रति शोकं कुर्वन् प्रत्यक् सरस्वतीं पश्चिमदिग्वाहिनीं सरस्वतीसंज्ञां नदीमियाय जगाम ॥ २१॥ तस्यां सरस्वत्यां विद्यमानां त्रितस्य तन्नामकस्य ऋषेस्तीर्थमिति प्रत्येकं षष्ठ्यंतेन संबध्यते । यत्त्रितादीनां तीर्थं तत्स विदुर आसिषेवे सम्यक् सेवितवान् ॥ २२ ॥ इह सरस्वतीतीरे द्विजदेवा ब्राह्मणोत्तमा देवा ब्रह्मादयस्तैः कृतानि विष्णोरायतनानि विष्णुक्षेत्राण्यासिषेव इत्यन्वयः । कथं भूतान्यायतनानि । प्रत्यंकमुख्यांकितमंदिराणि । पुनः कथं भूतानि । एषां तीर्थानां क्षेत्राणां दर्शनात्सेवनात् कृष्णमनुस्मरं- त्यंतःकरणशुद्ध्या हरिध्यानवंतोऽधिकारिणो भवंतीत्यर्थः । अत्र प्रत्यंकमुख्यशब्दमप्रतीत्या व्याख्याति ॥ प्रत्यंकेति । प्रति शब्दः सम्यगर्थः । तथा च प्रति सम्यगंकानि लक्षणानि यस्य सः प्रत्यंको ब्रह्मा तस्मादप्यतिशयेन सम्यग्लक्षणवान्विष्णुः प्रत्यंकमुख्य शब्देनोच्यत इत्यर्थः । अत्र प्रमाणमाह ॥ ब्रह्मेति । प्रतीत्यनुवादेन सम्यगिति व्याख्यानं । तथा च प्रति सम्य- गंकवान् ब्रह्मेत्यन्वयः । बहुव्रीहिलब्धार्थप्रदर्शनाय मतुपःप्रयोगः । सम्यगित्यस्योत्तरत्रापि संबंधः । तथा चातिशयेन सम्य- ग्लक्षण इति सम्यग्लक्षणवत्तम शब्देन विष्णुरुच्यत इत्यर्थः । सम्यग्लक्षणवत्तमत्वमेव प्रत्यंकमुखत्वमतः प्रकृतसंगातिरिति ध्येयं । तथा च प्रत्यंकमुख्यः सम्यग्लक्षणवत्तमो विष्णुस्तेनांकितानि चिन्हितानि । विष्णुप्रतिमाचिन्हितानीति यावत् । मंदिराणि येषु तानीति मूलं व्याख्येयमिति भावः ॥ २३ ॥ विदुरस्य तीर्थसेवायामेव रतिर्न राष्ट्रसेवन इति दर्शयितुमृद्धमपि सुराष्ट्रादिक-

मतिव्रज्येत्युक्तं । कुरुजांगलदेशोऽपि कुरुदेशांतर्गतः । अतः कुरुजांगलानीत्युक्तं । कालेन केनचित्कालेन । तावदादावुद्धवं ददर्शेत्यन्वयः । प्रश्नान्मैत्रेयमपि द्रक्ष्यतीति भावः ॥ २४ ॥ स विदुरः प्रतीतं प्रख्यातं वासुदेवानुचरं प्रशांतं प्रकर्षेण भगवन्निष्ठायुक्तं बृहस्पतेः सकाशात्प्राक्तनयमधीतनीतिशास्त्रमुद्धवं प्रणयेन स्नेहेन गाढं यथा स्यात्तथाऽऽलिंग्य स्वानां स्वीयानां यदूनां भद्रं कुशलं भगवान् प्रजागुप्तौ येषां ते तथोक्तास्तेषां ॥ २५ ॥ कच्चिच्छब्दो यद्यपि कुशलप्रश्नार्थः । तथाप्यत्रोत्तरत्र च कुशलादिशब्दानां पृथक् सत्वात्प्रश्नमात्रार्थः । तथा च कुशलमास्त इत्यर्थः । स्वनाभ्यपद्मेत्यत्र नाभिसंबंधिपद्मस्य जडत्वेनानुष्टत्ति शब्दोक्तप्रार्थनाऽसंभवात्पद्मशब्दविवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ पद्मो ब्रह्मेति । तथा च स्वो विष्णुस्तस्य नाभ्यो नाभिसंबंधिपद्मजः पद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनया कृतक्षणौ कृतावसरौ । उर्व्याः कुशलकरणकाले तयोरवसरो नाभूदिति भावः । अत्र कुशलमास्ते किमिति भगवत्कुशलप्रश्नाभिप्रायं प्रमाणेनाह ॥ लोकानामिति । कुशलं पृच्छ्यते । पुराणेष्विति शेषः । इतरदेव कुशलप्रश्नः किं न स्यादित्यतः प्रतीतार्थे बाधकमाह ॥ सततेति । तथा च भगवत्यकुशलप्रसक्तेरभावात्तस्यैव कुशलप्रश्नो न घटत इत्यर्थः । तथा च शूरगेहे लोकानां कुशलं यथा स्यात्तथा । सुखं कुर्वाणाविति यावत् । आसाते किमिति मूलं व्याख्येयमिति भावः ॥ २६ ॥ कुरूणां नो भामः पूज्यो यद्वा मामो भगिनीभर्ता संबंधे विचारिते देवक्याः पांडुभगिनीस्थानीयत्वात् । शौरिर्वसुदेवः स्वसॄणां कुंत्यादीनां वरान्वरणीयान्पदार्थान्वदान्यो दानशीलः । वरतर्पणेनेत्येतदप्रतीत्या व्याचष्टे ॥ वरतर्पणेनेति । तथा च वर शब्दः स्वसॄणां ये भर्तारः पतयस्तत्परस्तत्तर्पणेन सहेति व्याख्येयं । स्वसॄणां तत्पतीनां च तृप्तिं करोतीति भावः ॥ २७ ॥ वरूथाधिपतिः सेनाधिपतिः । आदिसर्गे पूर्वजन्मनि स्मरं कामं संतं । विप्रानाराध्येति वचनं लोकशिक्षणपरं ॥ २८ ॥ सात्वतादिशब्दवाच्यानां यादवविशेषाणामाधिप उग्रसेनो यमुग्रसेनमभ्यषिंचत् । राज्य इति शेषः । शतपत्रं पुंडरीकं तद्वदायते नेत्रे लोचने यस्य स तथोक्तः । नृपासनाधिं सिंहासनविषयकमाधिं दूरात्परिहृत्येत्यत्राधि शब्देन सिंहासनं मम नाभूदिति मानसीव्यथा प्रतीयते । आधिस्तु मानसी पीडेत्यमरोक्तेः तां परिहृत्येति व्याख्याने भगवन्मनसीतरपुरुषमानसीव व्यथाप्रसक्तिरायाति । न च सा युक्ताऽतोऽत्र विवक्षितमाधि शब्दार्थं प्रमाणेनैव दर्शयति ॥ आधिरिति ।

तथा चात्राधि शब्दो मनःपरो न तु तद्गतपीडापरो नृपासनं मम भूयादित्याधिं तद्विषयकं मनो दूरादेव परिहृत्येति मूलार्थ इति भावः । न चात्रापि भगवन्मनसि नृपासनविषयकत्वप्रसक्तिः । तस्या दोषत्वभावात् । तत्त्यागेन वैराग्यलक्षणगुणालाभाच्चेति ध्येयं ॥ २९ ॥ सद्दक्षः पुत्रत्वयोग्यः साधु कुशलमास्त इत्यन्वयः । अग्रे पूर्वजन्मन्यंबिकया पार्वत्या धृतः पुत्रत्वेन पालितः ॥ ३० ॥ युयुधानः सात्यकिः फल्गुनादर्जुनात् । गतिं ज्ञानं । अत्र धनुर्विद्यारहस्यत्वं भगवत्स्वरूपज्ञत्वं च प्रष्टव्योपपादकतयोक्तं । एवमग्रेऽपि तत्तद्विशेषणानि प्रष्टव्यत्वोपपादकानीति द्रष्टव्यं ॥ ३१ ॥ अनमीवो निष्पापः श्वफल्कपुत्रोऽक्रूरो मार्गस्थपांसुष्वचेष्टत लुंठनरूपां चेष्टां चकार । कथं भूतः । प्रेम्णा भक्त्युद्रेकेण विभिन्नं विनष्टं धैर्यं राजभृत्येन मया मार्गपांसुषु लुंठनं न कार्यमिति मनोदार्ढ्यं यस्य स तथोक्तः ॥३२॥ नाम्ना देवकः कुलेन भोजो भोजश्चासौ देवकश्च देवकभोजस्तस्य पुत्र्या देवक्या देवमातुरदितेरिव विष्णुः प्रजापुत्रो यस्याः । त्रयी श्रुतिः । यज्ञविस्ताररूपमर्थं यज्ञो विष्णुस्तद्वितानं तद्विस्ताररूपं माहात्म्यं तल्लक्षणमर्थमिति वा । यथा बिभर्ति प्रतिपादयति तथा या स्वगर्भेण देवं बभार । वा इत्यनेन तस्याः पुण्यातिशयप्रसिद्धिं दर्शयति ॥ ३३ ॥ अपि स्वित् किं स्वित् । वा शब्दोऽप्यर्थः । अनिरुद्ध इत्यनेन संबध्यते । यं शब्दयोनिं शब्दैकसमधिगम्यं मनोमयं ज्ञानपूर्णं सत्वं वासुदेवमपेक्ष्य तुरीयं चतुर्थरूपमामनंति श्रुतयः । इदं शब्दयोनिमित्यादिकं बलभद्रे पुराणपुरुषत्वाद्युक्तिवदनिरुद्धे आविष्टहरिरूपापेक्षयोक्तमिति ज्ञातव्यं ॥ ३४ ॥ निजात्मदैवमनागंतुकस्वदेवतारूपं कृष्णं सत्यात्मजः सत्यभामातनूजो भानुनामा । चारुदेष्णो रुग्मिणीतनूजो गदो वसुदेवपुत्रः ॥ ३५ ॥ एवं यादवानां कुशलं पृष्ट्वा पांडवानां तत्पृच्छति ॥ अपि स्विद्दोर्भ्यामित्यादिना । विजयाच्युताभ्यां विजयाऽव्यभिचारिभ्यां । अथवा । स्वदोर्भ्यां बाहूवद्वर्तमानाभ्यां विजयोऽर्जुनोऽच्युतः कृष्णस्ताभ्यामित्यर्थः । धर्मेण धर्ममार्गेण धर्मो धर्मपुत्रः सेतुं धर्ममर्यादां तत्सभायां यस्य युधिष्ठिरस्य सभायां विजयो दिग्विजयस्तमनुवृत्तिर्वर्तनं यस्याः सा तथा तया श्रीमदादितरेषां धर्मसेत्वतिक्रमः संभावितः सोऽस्य नास्तीति प्रश्नबीजं ॥ ३६ ॥ भीमः कृताघेषु कृतापराधेषु दुर्योधनादिषु किं वाऽघं व्यमुंचदित्यत्र स्वनिष्ठं पापं तेष्वमुंचादित्यन्यथाप्रतीतिवारणायात्र विवक्षितमघशब्दार्थं दर्शयति ॥ अघमिति । पुनरपराधबुद्धिं प्रत्यपकारबुद्धिं । तथा चात्राघ शब्दस्य प्रत्यपकार-

वाचकस्य दीर्घतमं बहुकालमनुवर्तमानमित्यनेन व्यमुंचदित्यनेन चान्वयस्वारस्याय स्वबुद्धिलक्षकत्वे प्रत्यपकारः कर्तव्य इति बहुकालीनां बुद्धिं किं वा व्यमुंचत्तां बुद्धिं मुक्त्वाऽऽस्ते किं स्वकर्तव्यत्वेन बहुकालचिंतितं प्रत्यपकारं कृतवान् किमित्यर्थः । अंघ्रिपाते निमित्तमाह ॥ मार्गमिति । गदाया गदायुद्धस्य विचित्रं विविधं मार्गं चरत इत्यन्वयः ॥ ३७ ॥ रथयूथपानां मध्ये यशोधाः कीर्तिधारी । उपरता अरयो यस्मात्सः । यस्य शरकूटेन बाणसमूहेन गूढ आच्छन्नो माययेच्छया किरातो गृहीतकिरातवेषः ॥ ३८ ॥ यमौ नकुलसहदेवौ । उत स्वित् किं स्वित् । च शब्दोऽप्यर्थे । माद्रवत्यास्तनयावपि पार्थैः पृथापुत्रैः । अक्षिणीपक्ष्मभिरावृतौ रक्षितौ । मणीवादित्वादक्षिणी वेति संबंधः । मृधे युद्धे स्वरिक्थं स्वराज्याख्यधनमुद्धृत्याच्छिद्य वज्रिवक्त्रादिंद्रमुखात्सुपर्णौ गरुडाविव । अभूतोपमा । यदि द्वौ गरुडाविंद्रमुखादमृतमानयेतां तर्हि तद्वदित्यर्थः ॥ ३९ ॥ पृथायाः किं नु कुशलं पृच्छेयं यतस्तस्याः पांडुना विना जीवनमेवाश्चर्यमित्याह ॥ अहो इति । ध्रियते । प्राणैरिति शेषः । जीवतीति यावत् । न चात्याश्चर्यं यतोर्भकाणां पुत्राणामर्थे ध्रियते न भोगार्थं । यद्वा । ध्रियते । पुत्रैरिति शेषः । तेन विनाऽपि याऽर्भकार्थं एवासीत् । न माद्रीवत्सहगमनं कृतवतीत्यर्थः । तेन पांडुना चतस्रः ॥ ४० ॥ धृतराष्ट्रस्तु न कुशलप्रश्नयोग्यः किंतु शोच्य एव । यतोऽधःपतनसाधनपापकारीत्याह ॥ सौम्येति । हे सौम्य सोमार्ह । तं धृतराष्ट्रं जीवंतमनुशोचामि । कस्मात् । अधःपतंतं तत्रापि परेताय मृताय भ्रात्रे पांडवे तत्पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान् । किंच जीवतो ममापि अपकारस्तेन कृत इत्याह । येन सुहृद्भ्रात्राऽहं च स्वपुर्याः सकाशान्निर्यापितो विवासितः ॥ ४१ ॥ पुरान्निर्यापितस्य तव मनसि किं खेदो नेत्याह ॥ सोऽहमिति । यो निर्यापितः सोऽहमित्यर्थः । विधातुर्हरेः कृष्णस्य प्रसादात्तस्य पदवीं माहात्म्यं पश्यन् । कथं भूतस्य । नृणां दृशो हरिरेव भूभारहरणायात्रावतीर्ण इति । चित्तवृत्तीर्मर्त्यविडंबनेन स्वमाहात्म्याच्छादकेन मनुष्यानुकरणेन चालयतो भ्रामयतः । श्रीकृष्ण एव स्वमाहात्म्यमाछाद्य स्वस्मिन्मानुष्यभ्रममुत्पाद्य धृतराष्ट्रदीन्पापभागिनः करोत्येवं तन्माहात्म्यं पश्यन्नहं गतविस्मयश्चित्तविकाररहितस्तत्प्रसाद एवायमिति मत्वा सुखेनैव चरामीत्याशयः ॥ ४२ ॥ ननु भूभारहरणायावतीर्णः श्रीकृष्णः स्वभक्तपांडवद्रोहिणो दुर्योधनादीन् राज्यापहारानंतरमेव कस्मान्न हतवानित्यत आह ॥

नूनमिति । ईशस्तदैव हंतुं समर्थोऽपि भगवान् कृष्णो विद्यामदो धनमदस्तथैवाभिजनोमदः । एतेन मदांधानां त एव च सहतां दमा इति वचनाद्विद्याधनाभिजननिमित्तैस्त्रिभिर्मदैरुत्पथानां पंथानमपहाय वर्तमानानां च भूमिरष्टादशाक्षौहिणीगणिताभिर्मुहुर्महीं चालयतां नृपाणां वधान्निमित्तात्प्रपन्नार्तिजिहीर्षया प्रपन्ना भूमिस्तस्या आर्तिर्भारस्तन्निमित्तं दुःखं तज्जिहीर्षया कुरूणां दुर्योधनादीनामघमपराधमुपेक्षित इति नूनं तर्कयामि । तर्कनिश्चययोर्नूनमित्यभिधानात् । तदानीमेव तेषां वधे सर्वभूभारहरणं न स्यादित्याशयेन तदैव न हतवानिति भावः ॥ ४३ ॥ नन्वीश्वरस्य कृष्णादिरूपेण जन्म तावन्नोपपद्यते । तस्याजत्वात् । नापि कर्माणि संभवंति । तस्याकर्तृत्ववचनात् । परिपूर्णस्य जन्मनामकर्मभिश्च प्रयोजनाभावाच्चेत्यत आह ॥ अजस्येति । अत्राजस्य जन्मेत्यकर्तुः कर्माणीति च व्याहतमिव प्रतीयतेऽतः प्रश्नक्रमेण प्रमाणद्वयमुदाहृत्योभयं घटयति ॥ न देहयोग इत्यादिना । हि यस्माद्देहयोगो जनिर्न तस्माद्व्यक्तिर्जनिः स्मृतेत्यर्थः । न देहयोग इत्यनेन कोऽर्हति देहयोगमित्येतदपि प्रमापितमिति मंतव्यं । स्वभावेन कर्ताऽपि स्वस्य फलाभावेनाकर्तेति गौण्या वृत्त्या भण्यते व्यवह्रियत इत्यर्थः ॥ ततश्चायमर्थः ॥ अजस्य जीववत् त्रिगुणात्मकदेहयोगशून्यस्यापि जन्मोपपद्यते जन्मशब्दार्थतया प्रादुर्भावस्यैव विवक्षितत्वात् । उत्पथनृपशासनरूपप्रयोजनसद्भावाच्च । अकर्तुः फलाभावेनैवाकर्तृत्वेनोच्यमानस्य कर्माणि विहितानि नित्यनैमित्तिकादीनि संभवंति । यतः स्वप्रयोजनाभावेऽपि पुंसामधिकारिणां गृहणाय शिक्षणाय भवंति । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहमिति वचनात् । नन्वजत्वश्रुतेः स्वरूपापेक्षयाऽप्युपपत्तेरीश्वरस्यापि जीववद्देहयोगरूपमेव जन्म कर्म च किं न स्यादित्यत आह ॥ न त्वन्यथेति । अन्यथा प्रादुर्भावरूपजन्माद्यपेक्षया प्रकारांतरं गुणात्मकदेहयोगेन जननं विधिबंधकेन कर्म च न तु नैव । कुतः । यतो गुणानां परो गुणातीतः । नित्यमुक्त इति यावत् । को देहयोगं गुणात्मकदेहयोगरूपां जनिं कर्मतंत्रमुत कर्मविस्तारमप्यर्हति न कोऽपीत्यर्थः । नित्यमुक्तत्वाज्जीववज्जन्म विधिभयेन कर्म च नास्त्येवेति भावः ॥ ४४ ॥ उत्पथनृपशासनेनापि किं फलमित्यपेक्षायां तत्साध्यं फलं दर्शयन् स्वाभीष्टं फलं प्रार्थयते ॥ तस्येति । प्रपन्ना अनादिकालेन शरणं प्राप्ता येऽखिला लोकपाला इंद्रादयस्तेषां स्वे स्वीयेऽनुशासने श्रुतिस्मृत्यादिरूपेऽवस्थितानामन्येषां चार्थाय प्रयोजनाय । अनेन शिष्टप्रतिपालनमेवोत्पथनृपशासनप्रयो-

जनामिति सूचितं । वार्तां कथां । तीर्थवत्पुण्यकरकीर्तेः ॥ ४५ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ३-१ ॥ ॥

॥ हरिः ॐ ॥ भगवत उद्धवः प्रियः श्रीकृष्णस्तदाश्रयां तद्विषयकां नोत्सेहे नैव प्रयत्नं कृतवान् । औत्कंठ्याद्भक्त्युद्रेकात् । स्मारितो विदुरवचनचातुर्येणासंप्रज्ञातसमाधिविषयीकृत ईश्वरो येन स तथा । असंप्रज्ञातसमाधिं प्राप्तो यतोऽतः प्रतिवचने यत्नवान्न जात इत्यर्थः । एवमग्रेऽपि स्मरणमसंप्रज्ञातसमाधिरूपमेव ज्ञेयं ॥ १ ॥ इदमेव कैमुत्येनोपपादयति ॥ य इति । य उद्धवः पंचहायनः पंचवर्षः प्रातराशाय प्रातःकालीनभोजनाय तत्प्रातर्भोजनं सपर्यां मानसीं बाह्यां च रचयन्कुर्वन् । बाललीलामित्यनेन बाल्यावस्थापन्नस्य क्रीडारूपोऽपि व्यापार एतादृश इति सूचयति ॥ २ ॥ जरसं जरां । अनेन तस्य हरौ मनोवाक्कायवृत्तीनामभ्यासपाटवं सूचयति । भर्तुः कृष्णस्य ॥३॥ कृष्णांघ्रिस्मरणरूपसुधया । तृतीया सप्तम्यर्थे । सुधायां निमग्नः सन् साधुनिर्वृतः स्वरूपानंदाविर्भावं प्राप्तः ॥४॥ प्रत्युत्तरावचनेन विदुरमनसि तस्मिन्किं कोपो जातो नेत्याह ॥ पुलकेति । पुलकै रोमांचैरुद्भिन्नान्यंकुरितान्युज्जृंभितानि वा सर्वाण्यंगानि यस्य सः । मीलितदृशा मीलितनेत्रेणाश्रुबाष्पकलां मुंचन् यतः स्नेहप्रसरसंप्लुतो भक्तिनदीप्रवाहनिमग्नः । असंप्रज्ञातसमाधिस्थ इति यावत् । स उद्धवस्तेन विदुरेण लक्षितोऽनुमितोऽतः पूर्णार्थः कृतार्थो मुक्त इव लक्षित इत्यर्थः । रोमांचादिना तदीयासंप्रज्ञातसमाधिमनुमायाहो मुक्त इवायं परमानंदमग्नो जातोऽस्त्यतोऽस्य तूष्णींभाव इति ज्ञातवानिति भावः ॥५॥ भगवतो लोकात्प्रकाशादसंप्रज्ञातसमाधिरूपान्नृलोकं मनुष्यदेहानुसंधानमागतः प्राप्त उत्स्मयन्विप्रशापं निमित्तीकृत्य यदुकुलविनाशं कर्तुमुद्युक्तस्य श्रीकृष्णस्य माहात्म्यस्मरणेनोत्कृष्टं विस्मयं कुर्वन् ॥६॥ भाविना कृष्णादियादववियोगेन संतप्यमान आह ॥ कृष्णेति । कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचेऽस्तमये आसन्ने सति । अत एव गतश्रीषु विगतशोभेषु विप्रशापाख्याजगरेण गीर्णेषु गिलितप्रायेषु नोऽस्मत्संबंधियदुषु किं नु कुशलं ब्रूयां । हेति खेदे ॥७॥ ननु कृष्णस्मरणेन तव यथैतादृशसुखप्राप्तिस्तथेतरेषां जनानां यदूनां च कृष्णं स्मरतामेतादृशसुखप्राप्तिः कुतो नेत्यत आह ॥ दुर्भग इति । अयं भूमिष्ठो लोको जनो ये लोका यादवाश्च कृष्णेन संवसंतोऽपि सह विद्यमाना आपि कृष्णं हरिं हरिरयमिति न विदुः । प्रत्युतायमप्येको मनुष्य इत्येव विदुः । अतो न तेषां कृष्णस्मरणेनास्मद्वत्सुख-

प्राप्तिरिति भावः । अत्र दृष्टांतो यथांऽभसि समुद्रे विद्यमाना मीना हरिं मत्स्यरूपं हरिरयमिति न जानंति तथैवेति । मीना इवोडुपमिति पाठे मीना यथा जले प्रतिबिंबितमुडुपं चंद्रं प्रतिबिंबितत्वेन न जानंतीति व्याख्येयं ।। ८ ।। ननु विप्रकर्षाद्भवतु लोकस्यैतादृशमज्ञानं विपरीतज्ञानं वा यादवानामतिचतुराणां कृष्णेन सहैकत्र सतां कथमीदृशमज्ञानादिकमित्यत आह ।। इंगितज्ञा इति। इंगितं हृद्गतो भावः। इंगितं चांगचेष्टितमित्यभिधानात्। अत्रेंगित शब्दस्तंत्रेणोभयार्थ उपात्तः। तथा चेंगितेन परस्यांगचेष्टितेनेंगित तच्चित्तस्थं जानंतीतींगितज्ञा इति व्याख्येयं। पुरु अतिशयेन प्रौढा निपुणाः पुरप्रौढा इति पाठे पुरे पट्टणे वासेन प्रौढा इत्यर्थः। एकस्मिन्नेव स्थाने आरमंतेति तथा। च शब्दोऽप्यर्थः। सात्वता यादवा एवंभूता अपि भूतावासं सर्वजगदीश्वरं कृष्णं सात्वतां यादवानामेव ऋषभं श्रेष्ठममंसतामन्यत न सर्वेश्वरोऽयमिति ज्ञातवंत इति भावः ।।५।। नन्वेवं तेषां ज्ञानाभावे भ्रमे च किं निमित्तमित्यत आह ।। देवस्येति। मायया बंधकशक्त्या स्पृष्टा बद्धा यतोऽतोऽमंसतेति पूर्वेणान्वयः। निमित्तांतरमप्याह ।। ये चान्ये इति। येऽन्ये कुवादिनोऽसदाश्रया असच्छास्त्रावलंबनास्तेषां वाक्यैश्च दुःशास्त्रैरप्यमंसतेत्यन्वयः। नन्वेवं भवदादीनामप्युक्तैर्निमित्तैः कस्मान्न भ्रमो भवतीत्यत उक्तं। आत्मनि स्वात्मनि हरौ विषये उप्तो दृढं निक्षिप्त आत्मा मनो येषां ते तेषामस्मदादीनां धीस्तद्वाक्यैर्न भ्राम्यत इति। सर्वदा हरिरेवायमिति प्रमाणज्ञत्वान्नास्मदादीनामुक्तभ्रम इति भावः ।।१०।। ननु कृष्णस्य न हरित्वमुपपद्यते। तस्य निम्लोच शब्देन त्वयैव मरणस्योक्तत्वादित्याशंकायां निम्लोच शब्दार्थं दर्शयति ।। प्रदर्श्येति। सर्वदा दर्शनसाधनं न तप्त तपो यैरत एवावितृप्तदृशां नृणां स्वाबिंबं स्वस्वरूपभूतं शरीरं प्रदर्श्य। तु शब्दोऽवधारणे। आदायैवाविहायैवांतरधादंतर्धास्याति। एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यत इति वचनात्। अंतर्धानमेव पूर्वोक्तो निम्लोचो न देहहानिरूपमरणमिति भावः। कीदृशं स्वाबिंबं। लोकानां लोचनानि यस्मिन्। अतिसुंदरमिति यावत् ।।११।। लोकलोचनपदेनसूचितबिंबसौंदर्यमेवोपपादयाति ।। यन्मर्त्येति त्रिभिः। यत्स्वाबिंबं मर्त्यलीलौपयिकं मनुष्यकर्तृकलीलासूपयुक्तं स्वयोगमायाबलं स्वस्वरूपयोगमाहात्म्यबलं दर्शयता हरिणा गृहीतं प्रकटीकृतं। अनेन जननमपि तस्य नास्तीति सूचयाति। स्वस्य च स्वस्यापि विस्मापनं विस्मयकरं सौभगर्द्धेः सौभाग्यातिशयस्य परं मुख्यं पदं स्थानं। चरमकाष्ठेति यावत्। भूषणा-

नामपि भूषणानि भूषणायितान्यंगानि यस्मिंस्तत् ॥१२॥ दृक् स्वस्त्ययनं दृशामानंदकरं यच्छ्रीकृष्णशरीरं निरीक्ष्य त्रिलोक इत्यमन्यत । बत कथं विधातुर्विरिंचस्यार्वाक् सृतावंत्यसृष्टौ कात्स्न्र्येन कौशलं नैपुण्यमत्र शरीरे उपगतं पर्याप्तं नातःपरं पर्याप्तस्य कौशलमस्तीत्येवं मेने । यथाऽऽदौ वक्रतया लिखति पश्चादभ्यासपाटवे तत्कर्तृकलेखने कौशलं कात्स्न्र्येनायाति तथैवेति भावः ॥१२॥ अत्र बतेत्यनेन सूचितमर्थं दर्शयति ॥ त्रिलोकस्येति । अत्राज्ञान शब्दो भ्रमपरः । चिदानंदाद्यात्मकस्य कृष्णशरीरस्य विरिंचस्रष्टृत्वबुद्धेर्भ्रमत्वात् । तथा च लोके भ्रमः केषांचिदेव संभावितः । अस्मिंश्चार्थे लोकत्रयगतानां बहूनां भ्रमो भवति । इदमाश्चर्यमित्यर्थः । अत्र प्रमाणांतरसंवादमाह ॥ आनंदरूपमिति । आनंदाद्यात्मकमपि विष्णुरूपं कृष्णादिशरीरं दृष्ट्वा शरीरत्वेनैव रूपेण ज्ञात्वा लोकस्त्रिलोकगतो जनस्तु विशेषेणेतरशरीरापेक्षयाऽतिशयेन भौतिकमेव । पंचभूतोपादानकमेव न चिदानंदाद्यात्मकमित्येव शब्दार्थः । च शब्दो विरिंचस्रष्टृत्वसमुच्चयार्थः । बहुषु स्थिता अहो आश्चर्यं । एकस्मिन्नार्थे बहूनां भ्रांतेरदर्शनादिति भावः ॥१३॥ मूले यस्य श्रीकृष्णस्यानुरागः स्नेहस्तेन प्लुता व्याप्ता हासाश्च रासलीला रासक्रीडा चावलोको निरीक्षणं च ते तथा । अनुरागप्लुताश्च ते हासादयश्च तैः प्रतिलब्धो मानो याभिस्ता व्रजे विद्यमानाः स्त्रियो दृग्भिः सहानुप्रवृत्ता गच्छंतमेवानुगता धियो यासां तास्तथाविधाः सत्यः कृत्ये भोजनादिरूपे शेषो यासां ताः । असमापितकृत्या एव निरीक्षणार्थमागता अवतस्थुः । तस्य सौंदर्यनिधित्वादेतत्संभावितमित्यर्थे किल शब्दः । वार्तासंभावयोः किलेति वचनात् ॥१४॥ एवं निम्लोच शब्दो न प्रसिद्धमरणपरः किं त्वंतर्धानपर एवेत्युपपाद्येदानीं जनिरपि तस्य नेतरसाधरणेत्याह ॥ स्वशांतरूपेष्वितिति । अत्र रूप शब्दः प्रतिमापरः । स्वस्य शांतरूपेषु सात्विकप्रकृतिषु सुरादिष्वितरैरशांतरूपैः स्वस्य रूपैस्तामसैरसुरैरभ्यर्द्यमानेषु सत्स्वनुकंपितः कृपायुक्त आत्मा मनो यस्य सः । महतां वायुशेषेंद्रादीनामंशैर्युक्तोऽजोऽपि जडदेहसंबंधेनोत्पत्तिरहितोऽपि जातः प्रादुर्भूतः । वाय्वादीनामुक्तविधाजत्वस्याभावात्प्रसिद्धैव जनिरिति सूचयितुं हि शब्दः । यथाऽग्निः काष्ठेषु विद्यमान एवाविर्भवति तथैव । न चाजस्य जन्मोत्पथनाशायेत्यनेनैतत्पुनरुक्तं । तद्विवरणरूपत्वादुक्तृभेदाच्च ॥१५॥ नन्वेवं जन्ममरणराहित्येन कृष्णस्येश्वरत्वं चेत्कथं तेनानीश्वरकर्तव्यानि कृतानीत्यत आह ॥ मां खेदयतीति द्वाभ्यां । एतदनी-

श्वरवत्कर्मकरणं खेदयति । असुरजनमोहनार्थमेवैतन्न स्वतः । तत्स्वभावस्यानैवंविधत्वेन श्रुत्यादिसिद्धत्वादिति समाधानेन चित्तचांचल्यपरिहाररूपक्लेशयुक्तं करोतीत्यर्थः । एतदित्युक्तमेवाह । वसुदेवगेहे वसुदेवभार्यायां यज्जन्मविडंबनं लौकिकजन्मानुकरणं । अरिभयादिव व्रजे निलीय वासः । अरिर्जरासंधादिस्तद्भयादिव पुरान्मथुरापुराद्द्वारवत्सीद्रोमंतगिरिं प्रत्यपलायत् । अनंतवीर्ये इत्यनेनासुरमोहनाय मनुष्यानुकरणमेवैतन्न वास्तवमिति दर्शयति ॥१६॥ एतच्च कृष्णस्य कर्म स्मरतो मम चेतः कर्मभूतं दुनोति उक्तरीत्या क्लेशयुक्तं करोति । एतदित्युक्तमेव विशदयति ॥ यदाहेति । कंसहननानंतरमिति शेषः । हे तात हे अंब । युवां प्रसीदतं प्रसादं कुरुतां । अकृता निष्कृतिः कंसकृतापराधप्रतिक्रिया आत्मना धनेन वा तृप्तिर्यैस्तेषां नोऽस्माकं । बहुवचनं जातौ । आवयोरित्यर्थः ॥१७॥ नन्वनीश्वर एवायं किं न स्यात्तव तु श्रद्धामात्रमेतदतः किं तद्विरहनिमित्तेन दुःखेनेत्याशंकायां तस्येश्वरत्वं साधयंस्तद्विरहो दुःसह इत्याह ॥ को वा इति त्रिभिः । अंघ्रिसरोजयो रेणुमपि विजिघ्रन्सेवमानो विस्फुरंत्योर्विभ्रमंत्योर्भ्रुवोर्विटपेन लेशेन तल्लक्षणेन कृतांतेन । अनेन भ्रूविलासमात्रेण भूभारसंहर्तृत्वादयमीश्वर इति युक्तिरुक्तेति ज्ञातव्यं ॥१८॥ भक्तकृतप्रामादिकापराधमुपेक्ष्य मोक्षदातृत्वाच्चायमीश्वर इत्याह ॥ दृष्टेति । चैद्यस्य जयांशत्वाद्भक्त्याऽसुरावेशेन द्विषतोऽपि सिद्धिः सायुज्यरूपा । यां सिद्धिं सम्यगनुष्ठितेन योगेन संस्पृहयंति प्राप्तुमिच्छंति ॥१९॥ चैद्यवदन्येऽपि स्वयोग्यां सिद्धिमापुरित्याह ॥ तथैवेति । ये कर्णादय आहवे भारतयुद्धे पार्थास्त्रपूतास्तदस्त्रैर्मृतत्वेन निःपापाः संतः ॥२०॥ एवं स्वयमीश्वरोऽपि यदुग्रसेनभृत्यत्वं दर्शितवांस्तदत्यंतं मामुक्तक्लेशवंतं करोतीत्याह ॥ स्वयं त्विति । तु शब्दोऽवधारणे । स्वयमेव नान्यः । त्र्यधीशस्त्रयाणां लोकानामीशः स्वराज्यलक्ष्म्या स्वाधीनराज्यलक्ष्म्या बलिं करं पूजां वा हरद्भिः समर्पयद्भिः ॥२१॥ एवं विधोऽपि परमेष्ठिधिष्ण्ये सिंहासने निषण्णमासीनमुग्रसेनं तिष्ठंस्तत्पुरतः स्वयं तिष्ठन् । हे देव । अस्मद्वचो निधारयावधारयेति न्यबोधयद्विज्ञापितवानिति यद्वचनं तत्तस्य कृष्णस्य कैंकर्यं दासत्वमुपागतान्प्राप्तान्नोऽस्मान् । हे अंग विदुर । विग्लापयत्यसुरजनमोहनाय वा भक्तवात्सल्यप्रदर्शनाय वेदमिति समाधानेन चित्तचांचल्यपरिहाररूपां ग्लानिं प्रापयति ॥२२॥ स्वभावतो भक्तानां प्रामादिकमपराधमुपेक्ष्य मोक्षमेव ददातीत्येतदुदाहरणांतरेणापि दर्शयन्नयमेव भजनीय इत्याह ॥ अहो इति । बक

भक्षण इति धातोर्बकी भक्षणशीला ताटका संसर्गेण शिशुमारिका । अत एवासाध्वी पूतनाविष्टोर्वशी तदा विष्णुं जिघांसया हंतुमिच्छया स्तनयोः संभृतं कालकूटं विषमपाययत्तदाविष्टोर्वशी धात्र्या यशोदाया उचितां योग्यां गतिं लोकं लेभे यतस्ततः कारणात्ततोऽन्यं कं वा शरणं व्रजेम मोक्षार्थं भजेम ॥२३॥ नन्वेवं भागवतानेव भगवाननुगृह्णाति तदा बल्यादीनामसुराणां भगवदनुग्रहभागित्वं न स्यात्तेषामसुरयोनित्वेन भागवतत्वाभावादित्याशंकायामासुरयोनित्वमप्रयोजकं भागवतत्वे भक्तिरेव प्रयोजिकाऽतस्तेऽपि भक्तिमत्वाद्भागवता एवेत्याशयेनाह ॥ मन्य इति । असुरानप्यहं भागवतान्मन्ये । सरंभः क्रोधस्तल्लक्षणेन मार्गेणाभिनिविष्टं भक्तिपूर्वकं निविष्टं चित्तं येषां तान् । हेतुगर्भविशेषणमिदं । आदावसुरावेशेन क्रोधयुक्ता अपि पश्चाद्भक्तिमंत एव ते भवंतीति भावः । अत एवाचक्षत इति ते भक्तिपूर्वकमपश्यन्निति । तार्क्ष्यः कश्यपस्तस्य पुत्रो गरुडस्तदंसे स्कंधे सुनाभं चक्रमायुधं यस्य तं । अत्रासुरानिति सामान्योक्त्या भगवंतं पश्यतां सर्वेषामसुराणां भागवतत्वमुच्यत इति प्रतीयेत न तद्युक्तं । द्वेषिणामपि मुक्तिप्रसंगात् । अतोऽसुरयोनित्वं न भागवतत्वे प्रयोजकं किंतु भक्तिरेव भागवतत्वप्रयोजिकेत्यभिप्रायं प्रमाणेनैव दर्शयति ॥ असुरा इति । असुरयोनिजा इत्यर्थः । बल्यादयोऽसुरा न स्वभावतोऽसुराः तर्हि । द्वेषयुतहिरण्यकादीनामंते कथं मुक्तिरित्यत आह ॥ जीवद्वयेति । साध्वसाधुजीवद्वयसंमेलनादित्यर्थः । परे परमात्मनि । च शब्दोऽवधारणे । भक्तिद्वेषयुता एव स्युर्न केवलं द्वेषयुता इत्यर्थः । अतस्तेषां यथा निजं स्वरूपमनतिक्रम्य वर्तमाना गतिर्भक्तस्य मुक्तिर्द्वेषिणस्तम इत्यर्थः । अनेन चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिरित्येतदप्युक्ततात्पर्यमिति ज्ञातव्यं । हिरण्यकस्यैव तृतीये जन्मनि चैद्यत्वात् । नन्वेवं भयात्कंसः अहो बकीयमिति कंसपूतनादीनां भगवद्द्वेषिणां मुक्तिकथनमनुपपन्नमित्यतस्तत्रापि जीवद्वयसमावेशेनोक्तैव गतिरित्याह ॥ कंसेति । आद्य शब्देन दंतवक्त्रादिग्रहणं । बांधवो भक्तः । आदिपदेन कंसे भृगुर्भक्तः कालनेमिर्द्वेषी पूतनिकायां तूर्वशी भक्ता ताटका द्वेषयुतेत्यादि द्रष्टव्यं । ताभ्यां युता यतोऽतो जीवद्वयसमायोगात् । गतिद्वयं मुक्तिस्तमश्च तज्जिगमिषवस्तत्प्राप्तिसंभावनाविषयाः । तथा च भयात्कंसः अहो बकीति वचनद्वयं तदाविष्टसज्जीवविषयतया व्याख्येयमिति भावः । नन्वेवं जीवद्वयकल्पना तत्र कुतः कार्येत्यत आह ॥ सर्वथेति । नियमेनेत्यर्थः । उदीरितं । श्रुत्यादाविति शेषः । यत उदी-

रितमतो नित्यं सर्वदा नियमः कदाऽपि न व्यभचरतीति भावः । अंगीकार्य इति शेषः । तर्हि द्वेषाच्चैद्यादयो नृपा इत्यादिरूपद्वेषस्य मुक्तिसाधनत्वप्रतिपादकं वचनं कथमित्यत आह ॥ मोहायेति । अन्यवाचोऽन्यस्य द्वेषस्य मुक्तिसाधनत्ववचोऽसुरजनमोहनाय । अतो न तद्यथाश्रुतार्थं किंतु भगवतः कृपालुत्वरूपगुणप्रशंसापरमिति भावः ॥२४॥ यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतमिति भगवच्छरीरग्रहणस्य मर्त्यलीलौपयिकत्वं स्वयोगमायाबलप्रदर्शकत्वं च पूर्वमुक्तं तत्र कास्ता मर्त्यलीलाः कीदृशं च स्वयोगमायाबलमित्यपेक्षायां तत्सर्वं जन्मारभ्य भक्त्युद्रेकात्संक्षेपतो दर्शयति ॥ वसुदेवस्येत्यादिना । वसुदेवस्य सकाशात् । प्रयोजनमाह ॥ भोजेंद्रेति । भोजेंद्रः कंसस्तेन तयोः कारागृहे बंधने कृते सति तयोः शर्म सुखं तद्धननादिना चिकीर्षुः । निमित्तांतरमप्याह ॥ अब्जजेनेति ॥२५॥ ततो मधुरात् । गूढार्चिरप्रकाशितस्वमाहात्म्यः ॥२६॥ व्यहरद्क्रीडत् । कूजंतोऽव्यक्तशब्दं कुर्वंतो द्विजाः पक्षिणस्तैः संकुलिता व्याप्ता अंघ्रिपा वृक्षा यस्मिंस्तत्तथोक्तं तस्मिन् ॥२७॥ कौमारा इत्यत्र क्लीबभावश्छांदसः । मुग्धो बालश्च यः सिंहस्तद्वदवलोकनं यस्य स तथोक्तः ॥२८॥ स एवाधिकं वयः प्राप्तः सन् लक्ष्म्याः शोभादिसंपदो निकेतं मंदिरं । सिताः शुभ्रा गोवृषा यस्मिंस्तत् । चारयन् । तृणानीति शेषः । रणन् शब्दं कुर्वन्वेणुर्यस्य सः । अरीरमद्रमयामास ॥२९॥ प्रत्युक्तान्प्रेषितान्मायिनो मायया निजरूपाच्छादिनो व्यनुदज्जघान । क्रीडनकान् तृणादिनिर्मितान् सिंहादीन्यथा ॥३०॥ विपन्नान्मृतान्निगृह्य शिक्षयित्वा गावो गा उत्थाप्य प्रकृतौ स्वभावे स्थितं । निर्विषमिति यावत् । तदेव तोयमपापयत् ॥३१॥ गोसवनेत्यत्र गोपदं ब्राह्मणाद्युपलक्षकं । तस्माद्भवां ब्राह्मणानामद्रेश्चारभ्यतां मख इति वक्ष्यमाणत्वात् । तथा च गोब्राह्मणाद्रिपूजारूपयज्ञेनेत्यर्थः । गोपराजं नंदं । च शब्दादिंद्रस्य मानभंगं कुर्वन् । उरुभारस्यातिसमृद्धस्य ॥३२॥ कोपाद्वर्षति भग्नमानेऽपहृतपूजने । अत एवातिविव्हले कर्तव्यमूढे गोत्रलीलातपत्रेण पर्वताख्यक्रीडाछत्रेण । हे भद्र कल्याणात्मन्विदुर ॥३३॥ शरद्दतावुदितः शशी शरच्छशी शीतस्य करैः किरणैर्मृष्टं अलंकृतं रजनीमुखं प्रदोषं कलपदं यथा भवति तथा मंडलं समूहं मंडयंतीति मंडलं मंडनः ॥ ३४ ॥ इति श्रीभागवताटिप्पण्यां द्वितीयोऽध्यायः ॥

॥ ३–२ ॥ ॥

॥ हरिः ॐ ॥ ततो वृंदावनात् । पुरीं मधुरां । आशा दिगतितृष्णयोरित्यभिधानात् । कदा कंस हनिष्यतीत्यादिरूपां तृष्णां तदभीष्टकंसहननादिचिकीर्षयेति यावत् । तुंगाद्राजमंचात् । रिपुयूथनाथं कंसं । व्यसुं विगतप्राणं ॥१॥ ब्रह्म वेदं सविस्तरं षडंगादिसहितं । पुत्रलक्षणवरं पंचजनाख्यदैत्योदरप्रवेशान्मृतं । समाहुता इति ह्रस्वश्छांदसः । अत्र भीष्मकन्यया समाहूता इत्यन्यथाप्रतीतिवारणाय विवक्षितं व्याख्यानं दर्शयति ॥ भीष्मककन्याया इति । अनेन तृतीया षष्ठ्यर्थ स च तादर्थ्यरूप इत्युक्तं भवति । श्रियो लक्ष्म्याः सवर्णेन समानरूपेणाहूता इति व्याख्यानमसदिति भावेन सवर्णेत्यस्याभिप्रायमाह ॥ सवर्णमात्रतयेति । सवर्ण शब्दो भावप्रधान इति दर्शयितुं सवर्णतयेत्युक्तं । आहूता इत्यनेनान्वयप्रदर्शनेनाव्हाने सवर्णेनेत्यस्य निमित्तता दर्शिता । मात्र पदाध्याहारेण च समानजातितयैव क्षत्रियत्वेनैव निमित्तेन समाहूता न रुग्मिणीप्राप्तियोग्यतयाऽपीति दर्शयति । नन्वेवं श्रिय इत्युक्तस्य केनान्वय इत्यतस्तस्यान्वयं दर्शयति ॥ एषामिति । अनेनापव्याख्याने जिहीर्षयेत्यस्यान्वयाभाव इति सूचितं भवति । एतद्भयेन बुभूषयेति पाठकल्पनेऽर्थविशेषालाभेन तस्य वैयर्थ्यमिति ज्ञातव्यं । नन्वेवं समाहूता इत्यत्र कर्तृवाचकपदाभावात्कथमन्वयः । न च भीष्मकेणेत्यध्याहार्यं तस्यैषां श्रीजिहीर्षाभावात् । अतोऽत्रापेक्षितं कर्तृवाचिपदमध्याहृत्यान्वयं दर्शयति ॥ भगवतेति । आहूता इति पूर्वेणान्वयः । नान्विदं बाधितं । न हि भगवान् रुग्मिण्यर्थे राज्ञामाव्हानं कृतवानित्येतत्प्रामाणिकं । प्रत्युत भीष्मकेणैव ते आहूता इति पुराणादौ प्रसिद्धिरित्यतोऽत्राभिप्रायं स्वयमेव दर्शयति ॥ आव्हानबुद्धिर्भगवता कृतेति । सत्यं भीष्मकेणैव ते आहूता इति । तथाऽप्येषां श्रियो जिहीर्षया भगवानेव भीष्मके स्थित्वा तदाव्हानबुद्धिमुत्पादितवानित्याभिप्रायोऽत्र विवक्षितोऽतोऽत्र न कोऽपि दोष इति भावः । ननु सुपर्णो गरुडः स्वभागं जव्ह इत्यसंगतं । न च सुपर्णः स्वभागं सुधामिवेति लुप्तोपमा । दार्ष्टांतिकभागस्याध्याहारप्रसंगात् । अतः सुपर्ण शब्द एव महायोगवृत्त्या भगवति मुख्य इत्याशयेन तत्र सुपर्ण शब्दनिर्वचनं प्रमाणेन दर्शयति ॥ सुपर्ण इति । णश्च निर्वृतिवाचक इत्यभिधानात् । णकार आनंदवाचीति भावः । परेत्यस्याकार लोपो निर्वचनत्वात् ॥ ततश्चायं श्लोकार्थः ॥ भीष्मककन्याया भीष्मकन्यकाया रुग्मिण्या अर्थे सवर्णेन समानजातितया क्षत्रियत्वेनैव निमित्तेन रुग्मिणीप्राप्तियोग्यतयाऽपीति भावः।

विजातीयानां वैश्यादीनामाव्हानं व्यावर्तयितुमिदं निमित्तमुक्तमिति ध्येयं । एषां राज्ञां श्रियः शोभा जिहीर्षया गृहीतुमिच्छया भीष्मकांतर्गतेन भगवता ये राजान आहूता भगवताऽऽव्हानबुद्धावुत्पादितायां भीष्मकेणैव ये आहूता इत्यर्थः । मिषतां पश्यतां तेषां मूर्ध्नि पदं दधत् । तांस्तुच्छीकृत्येति यावत् । तत्र हेतुगर्भविशेषणं सुपर्ण इति । यतः सुष्ठु परमानंदरूप इत्यर्थः । गांधर्ववृत्त्या परस्परसंमतिरूपया स्वभावं स्वस्यैव योग्यं भागं रुग्मिण्याख्यं जव्हे जहारेति ॥३॥ ककुद्मतो वृषभान् अविद्धनसो अविद्धनासिकान् दमित्वा गृहीत्वा नाग्नजितीं नीलां तद्भग्नमानान् तैर्वृषैर्भग्नो मानो येषां तान् । अभिगृध्यतः कन्यामाकांक्षमाणान् । अज्ञान् कृष्णप्राप्तियोग्यामजानतः शस्त्रभृतो राज्ञस्तच्छस्त्रैरक्षत एव जघ्ने जघान ॥४॥ ग्राम्याविषयासक्त इव प्रियायाः सत्यभामायाः प्रियमभीष्टं विधित्सुः कर्तुकामः प्रभुः कृष्णो द्युतरुं पारिजाताख्यं स्वर्गवृक्षमाच्छेदहार्षीत् । रुषांधः कोपेन कृष्णमाहात्म्यमजानन् सगणो देवगणेन सहितो वज्रींद्रस्तं कृष्णमाद्रवत् । यदर्थे यस्य द्युतरोरर्थे स्वार्थे नरकासुरवधादिरूपस्वप्रयोजनायानतः प्रणतो भूत्वा ॥५॥ सुतं नरकसंज्ञं स्वसुतं सुनाभेण चक्रेणोन्मथितं हतं दृष्ट्वा धरित्र्या भूम्या आमंत्रितः प्रार्थितः सन् तत्तनयाय भगदत्ताय शेषमपहृतकोशादिशेषं राज्यं दत्वा ॥६॥ तत्रांतःपुरे कुजेन भूमिपुत्रेणाहृतायास्ताः । प्रहर्षश्च क्रीडा चानुरागः स्नेहश्च तैः प्रहिताः प्रेरिता येऽवलोकास्तैर्जगृहुः पतित्वेन स्वीकृतवत्यः ॥७॥ आसां योषितां पाणिं । समुदायापेक्षयैकवचनं । कथंभूतं । विधिना शास्त्रोक्तकर्मणा सह वर्तत इति सविधिस्तं स्वमायया स्वसामर्थ्येन पुरुरूपः सन् ॥८॥ सर्वतः सर्वप्रकारेणात्मतुल्यानि स्वसदृशानि । अत्रापत्यानां सर्वप्रकारेण कृष्णसादृश्यमुच्यमानं प्रमाणबाधितमतः प्रमाणेनैव तदभिप्रायं दर्शयति ॥ उत्तमैरिति । उत्तमैः सर्वतः साम्यं यदुदीर्यते पुराणादौ तात्किंचित्साम्यमभिप्रेत्योति शेषः । तथा च प्रमाणांतरबलात्तत्र सर्व शब्देनासंकुचितवृत्तिरिति भावः । प्रकृतेर्जडप्रकृतेर्विबुभूषया विविधभवनेच्छया मदवतारकाले जडप्रकृतेर्नानाविधसुंदरतरशरीरोपादानत्वेन बहुभावो भवत्विर्तीच्छयेति यावत् ॥९॥ कालः कालयवनो रुंधतः आवृण्वतः पुरं मधुरां स्वयं साक्षादेव साल्वादीनजीघनत् । कांश्चन कालमागधादीन् स्वपुंसां स्वभक्तानां मुचकुंदभीमादीनां तेजः सामर्थ्यविशेषमादिशन् सम्यक प्रयच्छन् तद्द्वाराऽजीघनत् ॥१०॥ शंबरमिति । अत्रापि शंबरविवदादीन् । प्रद्युम्नबलरामादिभिरघातयत् ।

मुरादीन्स्वयमेवावधीदिति विवेकः ॥११॥ अथ दंतवक्रादीनां हननानंतरं नृपानघातयदित्यनुवर्तते । कथं भूतान् । कुरुक्षेत्रं प्रत्यापततामागच्छतामेषां बलैः सैन्यैः । भूः सर्वाऽपि चचाल ॥१२॥ तान् स कृष्णः कुमंत्रस्य कुत्सितविचारस्य पाकेन परिपाकेन श्रीश्चायुश्च श्रियायुषी हते गते श्रियायुषी यस्य स तथोक्तस्तं । ऊर्व्यां शयानं ननंद । अवतारप्रयोजनं प्रायो जातमिति संतोषं लोकस्य दर्शितवानिति भावः । स्वभक्तानां पांडवानां जयोऽतो न मद्भक्तिर्व्यर्थेत्याशयेन संतोषं दर्शितवानिति वा ॥१३॥ कलियुगे देवांशानामपि यादवानां भूमेर्भारायमाणत्वात्तेऽपि संहार्या इत्यचिंतयदित्याह ॥ कियानिति । मद्विशेषावेशयुक्तत्वान्मदंशैर्द्रोणादिभिः क्षपितोऽष्टादशाक्षौहिणीकः । ह्रस्वश्छांदसः । भुवो यद्यो भारः । स कियान् । अत्यल्प एव यस्मात्सुरासुरैर्दुर्विषहं यदूनां बलमास्ते । तच्चास्मिन्युगे भारायमाण एवातो भूमिभारहरणायावतीर्णेन मया तदपि संहार्यमिति वाक्यशेषः ॥१४॥ परस्परमर्मवचनादिना कलह एवैषां वधोपायो नान्य इत्यप्यचिंतयदित्याह ॥ मिथ इति । यदा यस्मिन्काले माध्व्या मधुजाताया वारुण्याः पानेन जातान्मदात्ताम्रविलोचनानामारक्तनेत्राणां । अनेन भ्रंशितज्ञानत्वं लक्ष्यते । येषां यादवानां मिथो विवादो मर्मवचनं तज्जन्यः कलहश्च भविता तदा स एवैषां वधोपायोऽन्योपि किं न स्यादित्यत आह ॥ वधोपाय इयान् एतावान् अतोऽन्यन्नेति । मिथो विवादोऽपि कदा भवितेत्यत आह ॥ मयीति । मय्युद्यते पृथिवीलोकत्यागायोद्युक्ते सति स्वयं स्वयमेवांतर्दधते मिथो विवादेनांतर्धानं प्राप्नुवंतीत्यर्थः । स्मेत्यनेनास्यान्यथार्थत्वं नेति दर्शयाति ॥ १५ ॥ स्वाराज्ये स्वर्गसाम्राज्ये ॥१६॥ भगवता धृतो रक्षितः ॥१७॥ त्रिभिरुत्तमकल्पदाक्षिणादानेन त्रिगुणफलैः पंचसंख्याकैरश्वमेधैरित्यर्थः ॥१८॥ भगवानपि कामान्सिषेव इत्युक्त्या लोकानुकरणमेतदिति सूचितं । विषयसेवायामपि न तत्र तस्य स्नेह इत्याह । असक्तो रागवर्जितो निष्ठाप्रयोगेण सर्वदैवं रूप इति सूचयाति । तत्र हेतुकथनाय विशेषणं सांख्यमास्थित इति । अत्र सांख्यशास्त्रोक्तं प्रकृतिजीवविवेकमास्थित इति व्याख्यानं न प्रकृतसंगतं स्वस्य जीवत्वाभावात् । अतोऽत्र विवक्षितं सांख्य शब्दार्थं प्रमाणेनैव दर्शयाति ॥ केवलमिति । इतरपदार्थाविषयकमित्यर्थः । तथा च जडामिश्रे परममंगले स्वस्वरूप एव रममाणो यत इत्यर्थ इति भावः ॥१९॥ स्निग्धो यः स्मितसहितोऽवलोकस्तेन पीयूषकल्पयाऽमृततुल्यया श्रियो लक्ष्म्या निके-

तेनाश्रयेणात्मना देहेन ॥२०॥ क्षणदया रात्र्या दत्तक्षणोऽवसरो यासां स्त्रीणां तासु क्षणं सौहृदं यस्य सः । अनेनासक्तत्वं प्रकारांतरेणोपपादितमिति ज्ञातव्यं ॥२१॥ गृहमेधेषु गृहाश्रमोचितधर्मेषु योगेषु कामभोगोपायेषु । अत्रेदानीं विरागः समजायतेत्युक्त्या पूर्वं वैराग्याभावः प्रतीयते । तथात्वे च प्रागुक्तासक्तत्वविरोधप्रसंग इत्यतोऽत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ सर्वदाऽपीति । विगतो रागो यस्य स विरागः । कदाचिद्विरक्तः पुरुषस्तद्वदित्यर्थः भासयीत । स्वात्मानं । लोकान्प्रतीति शेषः । तथा च तत्परं कादाचित्कवैराग्यवचनमिति वाक्यशेषः । प्रतीतार्थ एव किं न स्यादित्यतस्तत्र बाधकमाह ॥ कादाचित्क इति । कुतः । न कुतोऽपि प्रमाणबाधितत्वादिति भावः । ननु हरेः कादाचित्कं वैराग्यप्रदर्शनमपि किमर्थमित्यत आह । ॥ लोकेति । कादाचित्कं वैराग्यप्रदर्शनमिति शेषः । अनेन दैवाधीनेष्विति वक्ष्यमाणस्यापि तात्पर्यमुक्तं भवतीति ज्ञातव्यं । अनेन मूले रागाभाववाचिरागशब्दः स्वविषयकलोककर्तृकज्ञानोपलक्षक इति सूचयति । तथा च भगवन्निष्ठवैराग्यविषयकं ज्ञानं लोकानां समजायतेत्यर्थः ॥२२॥ ननु कादाचित्कं वैराग्यप्रदर्शनमपि भगवता किमर्थं कृतमित्यतो लोकशिक्षणार्थमित्याह ॥ दैवाधीनेष्विति । कथमनेन लोकशिक्षणं लब्धमित्यतस्तं प्रकारं दर्शयति ॥ तेनापीति । वशीकृतसर्वविषयेणानन्याधीनेनापीत्यर्थः । प्रदर्शित इत्यनंतरं यत इति शेषः । अनेन पूर्वश्लोकोक्तस्य हेतुतयाऽत्रोपयोग इति सूचयति । अतः कोऽन्य इत्येतत् श्लोकतात्पर्यकथनं । तथा च मूले यतोऽतः शब्दावन्य शब्दश्चाध्याहार्य इति सूचयति । अन्यथा कृष्णमपेक्ष्यैतदुच्यत इति प्रतीतिप्रसंगेनेदं वाक्यं बाधितार्थकं स्यादिति ध्येयं ॥ ततश्चायमर्थः । यत एवं भगवता वशीकृतसर्वविषयेणानन्याधीनेनापि विषयेषु विरागः प्रदर्शितः । अतो दैवाधीनेषु स्वानधीनेषु कामेषु विषयेषु स्वयमपि दैवाधीनो न स्वतंत्रः कोऽन्यः पुमान् विस्रंभेत विश्वासं प्रीतिं वा कुर्यात् । न कोऽपि । किंतु वैराग्यवानेव भवेत् । तथा च हरिप्रदर्शितवैराग्यस्य लोकवैराग्यौपयिकतया लोकशिक्षार्थत्वं प्राप्तमिति ध्येयं । नन्वेतादृशेष्वपि विषयेषु प्रीतिं कुर्वाणा बहवो दृश्यंतेऽतः कथमेतदित्यत आह ॥ योगेनेति । योगेन निवृत्तकर्मध्यानादिरूपेण योगेनेश्वरं श्रीकृष्णमनुवृत्तश्चेत् कृष्णप्रदर्शितयोगमार्गानुष्ठाता चेदित्यर्थः । तथा च कृष्णप्रदर्शितयोगमार्गानुष्ठाता पुमान्यः स एव कृष्णप्रदर्शितवैराग्यं दृष्ट्वा स्वयमपि उक्तनीत्या विरक्तो भविष्यति न सर्वे

इति भावः ॥२३॥ यदुकुलनाशे मिथो विवादो भवितेत्यत्र यन्निमित्तं भगवता चिंतितं तत्रापि भगवत्कारितं मूलकारणं विप्रशापं दर्शयति ॥ पुर्यामिति । कोविदा अभिज्ञाः ॥२४॥ ततः कतिपयैर्मासैरित्यादिना वक्ष्यमाणं प्रभासगमनादिकं भारतादौ विदुरोद्धवसंवादमपेक्ष्योत्तरकालीनमिति निर्णीतं । अत्र तु तत्सर्वमतीतत्वेनोच्यत इत्यतो विरोध इत्यतो यथा न विरोधस्तथैतद्ग्रंथयोजनां प्रमाणेनैव दर्शयति ॥ एष्यदिति । निश्चितं भविष्यतीति निश्चितं । अनेन निश्चितत्वेन मुख्यार्थसादृश्यं निमित्तं दर्शितं । भण्यत इत्यनेन रूढोपचारोऽयमिति सूचयति । मुख्यार्थमेवाश्रित्य योजनांतरमाह ॥ चक्रवदिति । प्रतिकल्पं । कथामार्गस्येति शेषः । तथा चातीतकल्पीययादवविषयमेतदिति योजनोक्ता भवति । न चैतदसंगतं । भावियदुविनाशे दृष्टांततया कथनसंभवात् । ननु किमर्थमेवं पुराणकारस्य वचनं स्पष्टमेव कस्मान्नोक्तमित्यत आह ॥ दुष्टानामिति । ततश्च ततः कतिपयैरित्यादिमूलस्यायमर्थः ॥ मासैः सुखहेतुत्वाद्वत्सरैर्यदुर्यास्यंति । देवः कृष्णस्तेन विमोहिताः ॥२५॥ गावो गा बहुगुणाः सौशील्यादिसर्वगुणोपेता ददुर्दास्यंति ॥२६॥ वृत्तिकरीं जीविकाप्रदां ॥२७॥ उरुरसं षड्रसोपेतं भगवदर्पणं यथा स्यात्तथा गवां विप्राणां चार्थेऽसवः प्राणा येषां ते तथा । प्रणेमुः प्रणमिष्यंति ॥२८॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ॥ ३—३ ॥ ॥

॥ हरिः ॐ ॥ तैर्विप्रैर्भोजनायानुज्ञाता वारुणीं मदिरां । तया वारुण्या विस्रंशितं विभ्रंशितं स्वः पर इति ज्ञानं येषां ते तथोक्ताः । मर्मस्पृशुः परस्परं मर्मवाचकदुरुक्तीर्विदिष्यंतीत्यर्थः ॥१॥ वारुण्येव मैरेयं तस्य दोषेण तत्पानजनितचित्तविभ्रंशेन निम्लोचत्यस्तं गच्छति सति मर्दनं युद्धलक्षणसंघर्ष आसीद्भविष्यति ॥२॥ आत्ममाययेत्यत्रात्ममाया शब्दस्यानिर्वाच्याविद्यापरत्वप्रतीतिनिरासायात्रोपयुक्तमर्थमाह ॥ आत्ममायाया इति । आत्मसामर्थ्यस्य यदुकुलसंहरणरूपस्य गतिं स्थितिं । अवलोक्येति वचनं संजिहीर्षुरिति वक्ष्यमाणेति वक्ष्यमाणविरुद्धं संहारस्य तदानीं जातत्वे संजिहीर्षासंभवात् । अतोऽत्रापेक्षित पूरयति ॥ पूर्वमेवेति । यदुकुलनाशापेक्षया षड्विंशति वत्सरेभ्यः पूर्वमेवेत्यर्थः । अत्र प्रमाणमप्याह ॥ ज्ञात्वेति । मौसलं मुसलकार्यं यदुकुलनाशं ज्ञात्वेत्यन्वयः । उद्धवं । स्वयमुपदिश्येति शेषः । ज्ञानसंतत्यै मुनीनां स्वयमुपदेशेन ज्ञानविस्ताराय

नयदनयत् । नन्वेवमुद्धवोपदेशबदरीगमनयोर्यदुकुलसंहारात्पूर्वकालीनत्वे संहृत्य स्वकुलं स्फीतमिति वक्ष्यमाणविरोधः । तत्र यदुकुलसंहारानंतरमुद्धवस्य ज्ञानोपदेशबदरीगमनयोर्वक्ष्यमाणत्वादित्यतस्तदपि सत्यं । उद्धवस्य ज्ञानोपदेशबदरीगमनयोरंतरेऽपि पुनर्जातत्वादित्याशयेनात्राप्युक्तप्रमाणशेषमेव पठति ॥ पूर्वमेवेति । तथा च भगवानात्ममाययेत्यादेरयमर्थः ॥ आत्ममायाया यदुकुलसंहरणरूपस्यात्मसामर्थ्यस्य तां भाविनीं गतिं स्थितिं स्वर्गारोहणापेक्षया षड्विंशतिवत्सरेभ्यः पूर्वमेवावलोक्य प्रभासं गत्वा तत्र सरस्वतीमुपस्पृश्य स्नानाचमनादिकं कृत्वेत्यर्थः । वृक्षमूले उपाविशदुपविष्टोऽभूत ॥३॥ तत्र प्रभासगमनसमये प्रपन्ना ये बदरीवासिनस्तदार्तिहरेण भगवता त्वं बदरीं प्रयाहीति अहमुक्तश्च । हेत्यनेनास्योपदेशस्य यदुकुलनाशात्पूर्वकालीनत्वं प्रामाणिकमिति सूचयति । एतद्ग्रंथस्वारस्येनैवोद्धवस्य पूर्वोपदेशः प्रभासे सरस्वतीतीरे वृक्षमूल एव जात इति ज्ञायते ॥ ४ ॥ अथाऽपि प्रयाहीत्युक्तेऽपि तदभिप्रेतं तस्य कृष्णस्य ज्ञानोपदेशाभिप्रायमजानन् । अहं भो । अरिंदम कामादिवैरिदमन विदुर ॥५॥ विचिन्वन्मार्गमाणो दयितं प्रेष्ठं सरस्वत्यां । तत्तीरे कृतकेतं कृतनिवासं । अकेतनमनन्याधारं ॥६॥ श्यामवर्णेनावदातं निर्मलं प्रकाशमानं वा विरजं विरजसं विगतदोषं प्रशांते स्तिमितेऽरुणे लोचने यस्य तं । विदितं लक्षितं कुशेन कृमिविशेषेण निर्मितं कौशं तच्च तदंबरं च तेन ॥७॥ अधिश्रित्योपरि स्थापयित्वा । अपाश्रितार्भकाश्वत्थमिति पाठे अपाश्रितः पृष्ठतोऽवष्टब्धोऽर्भकावस्थः कोमलावस्थोऽश्वत्थवृक्षो येन तं । अर्भकावस्थामिति पाठे तु अवतारदशायां या बाल्यावस्था तामाश्रितामिति व्याख्येयं । अकृशं परिपूर्णांगं त्यक्तं दूरीकृतं पिप्पलं कर्मफलं येन तं ॥८॥ तस्मिन्देशे काले च द्वैपायनस्य सुहृत्सखा च । मैत्रेयस्य पराशरशिष्यत्वात् । सिद्धौ ज्ञानी ॥९॥ तस्य मुनेराशृण्वतः सतोऽनुरागहासाभ्यां स्नेहमंदस्मिताभ्यां सहितया समीक्षया सम्यक् निरीक्षणेन विश्रमयन्विगतश्रमं कुर्वन् ॥१०॥ ते मनस्यंतरीप्सितं ज्ञानं मे स्यादिति यद्वांछितं तदहं वेद वेद्मि । ते ज्ञानं ददामि । ज्ञानदानकारणं तस्य पूर्वपुण्यमाह ॥ सत्र इति । विश्वसृजां प्रजापतीनां मनूनां ज्ञानिज्ञां देवानां च सत्रे यागविशेषे पुरा पूर्वजन्मनि मत्सिद्धिकामेन मत्तो ज्ञानसिद्धिकामेन त्वयाऽहमिष्टः पूजितो यतोऽतो ददामीति योज्यं । ननु देवानां प्रजापतीनां वा सत्रे मया त्वं कथमिष्ट इत्यत उक्तं ॥ वसो इति । तेषां मध्ये वसतीति वसुस्तस्य संबुद्धिर्वसो इति ।

तथा च तेषां यजमानभूतानां देवानां मध्ये त्वमपि बृहस्पतिरूपो देवोऽभूरतस्त्वयाऽहमिष्ट इति भावः ॥११॥ तस्य ज्ञानदानाय स्वानुग्रहयोग्यतामभिनंदति ॥ स एष इति । हे साधो । भवानां जन्मनां मध्ये बृहस्पतिनामकस्य त्वन्मूलरूपस्य सोंऽडाद्बहिर्विद्यमान एषो ब्रह्मांडांतर्गतश्च भवश्चरमः । न तूद्धवनामकदेहेन भवश्चरमः । लयपर्यंतं प्रतिदिनमुद्धवदेहजननात् । कुतः । तस्य ज्ञानदानाय स्वानुग्रहयोग्यः । यद्यस्मात्त्वयाऽयं मदनुग्रहो मोक्षहेतुरात्यंतिकप्रसाद आसादितो लब्धः । एतादृशात्यंतिकप्रसादलाभेऽपि किं कारणमित्यत आह ॥ यन्मामिति । विशदानुवृत्त्या बहुकालीननिर्मलसेवया नृलोकान् जीवलोकान् भूरादीन् उत्सृजंतं स्रष्टुकाम । चरमोपदेशविवक्षायां तूत्सृजंतमिति यथा स्थितं । मां रहो दिष्ट्या ददृश्वान् दृष्टवानासि । अस्मिन्समये मद्दर्शनमेव मत्प्रसादविशेषजनकमिति भावः ॥१२॥ श्रद्धातिशयजननाय स्वस्य विप्रलंभकतापरिहाराय च वक्ष्यमाणं ज्ञानं स्तौति ॥ पुरेति । पुराऽस्मिन्पाद्मे कल्पे तत्राप्यादिसर्गे सर्गोपक्रमे मम ज्ञानं मन्महिम्नोऽवभासो ज्ञानं यस्माद्यच्च सूरयो भगवदेकविषयत्वाद्भागवतं वदंति तत्ते ददामीति पूर्वेणान्वयः ॥१३॥ पूर्वमादृतः पश्चादुक्तश्च प्रतीक्षणं सम्यक् निरीक्षणं तल्लक्षणो योऽनुग्रहस्तद्भाजनः पात्रभूतः । अमत्रं भाजनं पात्रमित्यभिधानात् । शुचोऽश्रूणि विमुंचन् आबभाषे उक्तवानास्मि । आबभाष इति परोक्ष्येण निर्देशः स्वस्य तदा बाह्यज्ञानाभावप्रदर्शनार्थः । सुप्तोऽहं विललाप किलेत्यादौ दृष्टत्वात् ॥१४॥ चतुर्विधान्पुरुषार्थान्विहाय ज्ञानमेव तवाभीप्सितं कुत इत्यत आह ॥ कोन्वीश इति । पादसरोजभाजां श्रवणादिरूपभजनं कुर्वतां चतुर्ष्वप्यर्थेषु धर्मादिषु तथाऽपि तानहं न प्रवृणोमि । निषेवणं श्रवणादिरूपं तत्रैवोत्सुको यतः ॥१५॥ निश्चिततत्त्वस्य तव पुनः श्रवणादौ कस्मादौत्सुक्यमिति शंकायामाह ॥ कर्माणीति श्लोकद्वयेन । अनीहस्य विहितनिषिद्धक्रियारहितस्य ते तव कर्माणि विधिबद्धवत्स्नानदानादिकर्माण्यभवस्योत्पत्तिरहितस्य भव उत्पत्तिः कालात्मनः सर्वसंहारकस्य ते द्वारकादिदुर्गाश्रयोऽरीणां जरासंधादीनां भयात्पलायनं च स्वात्मन् स्वस्वरूपे रती रमणं यस्य तस्य ते प्रमदानां स्त्रीणामयुताश्रयो बहुस्त्रीपरिग्रह इति यत् तस्मिन्विषये विदां विदुषां निश्चिततत्त्वानामपि धीरंतःकरणप्रभेदरूपा बुद्धिः खिद्यति अलंबुद्धिं न प्राप्नोति चंचला भवतीति भावः ॥१६॥ किंच मंत्रेषु विचारेषु प्रसक्तेषु सत्सु मां वै अहो उपहूय । अकुंठितः सर्वत्राप्रातिबुद्धः । अखंडोऽ-

परिच्छिन्नः सन् निर्दुष्ट आत्मबोधः स्वरूपज्ञानं यस्य स तथोक्तः । एवं भूतोऽपि त्वं मुग्ध इवाज्ञो यथा पृच्छति तथा । अप्रमत्तोऽवहितः स मां पृच्छेः अप्रच्छ इति यत्तन्नोऽस्माकं मनो मोहयतीव मोहयुक्तं करोतीव । इदं सर्वमसुरजनमोहनाय लोकानुकरणं न वास्तवमिति समाधानं । अज्ञानमपि स्वस्येव शब्देन दर्शयति । तथा चैतादृशधीचांचल्यप्रसक्तिपरिहाराय पुनर्मम ज्ञानोपदेशश्रवणाद्यौत्सुक्यमिति भावः ॥१७॥ पुराऽजाय प्रोक्तं ज्ञानं तुभ्यं ददामीत्युक्ते तत्रानधिकार्युद्धवो विज्ञापयति ॥ ज्ञानमिति । स्वात्मरहः प्रकाशं स्वमहिमावभासकं यत्समग्रमपि ज्ञानं ज्ञानकरणं वेदादिरूपं शास्त्रं कस्मै ब्रह्मणे । सर्वनामत्वं छांदसं । प्रोवाच तन्मध्ये यावन्नोऽस्माकं गृहणाय क्षमं योग्यं । हे भर्तः स्वामिन् । तावद्भवान्वेद । तावदेव मह्यं देहीति भावः । यद्येन दत्तेन वृजिनं सांसारिकं दुःखमंजसा तरेम ॥१८॥ हार्दं हृद्गतं परमामुत्कृष्टां स्थितिं माहात्म्यं ॥२०॥ आराधितं सर्वैः पूजितं पादतीर्थं पादोदकं । यस्य तस्मात्कृष्णादधीतोऽधिगतस्तत्त्वान्यव्यक्तादीनि । आत्मा परमात्मा जीवश्च । एतेषां विबोधमार्गः समीचीनज्ञानमार्गो यस्य स तथा । परिवृत्य प्रदक्षिणीकृत्य विरहेण तद्वियोगेनातुरः क्लिष्ट आत्मा मनो यस्य स तथा ॥ २१॥ श्रीकृष्णवियोगोत्पन्नार्तियुतस्तस्य श्रीकृष्णस्य दयितं प्रियं बदर्याश्रममंडलं तत्प्रांतस्थं कलापग्रामं॥२२॥ मृदु परोपद्रवशून्यं तीव्रं दुश्चरं दीर्घमाकल्पांतं तेपाते चरतः । लोकभावनौ लोकशिक्षकौ ॥२३॥ वधं भाविनं संहारं यतोऽबुधः ॥२४॥ विस्रंभाद्यमस्मादिष्टं वक्ष्यतीति विश्वासात् । कृष्णपरिग्रहे कृष्णपरिचारके जने । इदमित्युक्तं विशदयति ॥ ज्ञानमिति । अत्र हेतुमाह ॥ यदिति । यद्यस्मात्स्वभृत्यार्थकृतः स्वभृत्यप्रयोजनसाधकाः संतश्चरंति । न हि कृतकृत्यानामन्यत्प्रयोजनमस्तीति हि शब्दार्थः ॥२५॥ नन्विति विदुरे भगवदनुग्रहास्त्रादनं । तत्त्वसंराद्धस्तत्त्वज्ञानसिद्धः । कौषारवो मैत्रेयः । अंतिमे ममांति समीपे मर्त्यलोकं जिहासता त्यक्तुमिच्छता भगवता साक्षात्स्वमुखेनैव ते तुभ्यमादिष्टः । तत्त्वोपदेशायेति शेषः । अतो न मया पृथग्वक्तव्यमिति भावः ॥२७॥ गुणकथाख्यसुधया प्लुतो गत उरु तपो यस्य स तथा । प्लुगताविति धातोः । यमस्वसुर्यमुनायाः पुलिने वालुके तां निशां क्षणमिव समुषितः । उपगोरपत्यमौपगविः । उद्धवस्ततो यमुनावालुकात् ॥२८॥ रह उत्सृजंतमित्यादिप्रयोगेणोद्धवस्य चरमोपदेशबदरीगमनयोरपि पूर्वमभिमेतत्वेनोद्धवावशेषं बुध्वा राजा पृच्छति ॥ निधनमिति ।

निधनं नाशं । तु शब्दोऽवधारणे । स उद्धव एक एव कथमवशिष्टः। अयोद्धृत्वादवशिष्ट इत्यत उक्तं ॥ आधिरथेति । अधिरथानां यूथं पातीत्यधिरथयूथपास्तेषामपि यूथं पातीत्यधिरथयूथयूथपास्तेषु मुख्यो मुख्यतो योद्धेति भावः । सामर्थ्यविशेषवत्वादवशिष्ट इत्यत आह ॥ यद्धरिरिति । यद्यस्मात्त्र्यधीशस्त्रयाणां लोकानामधीशः । अनेनेंद्रादिदेवोत्तमत्वमुक्तं । तथा च मनुष्यविशेषेषु सामर्थ्यविशेषो विप्रशापतिरस्कारको नेति किं वाच्यमिति भावः । अत्राकृतिं देहं तत्यज इति हरेर्देहत्याग उच्यत इति भात्यतोऽत्र विवक्षितमाकृति शब्दार्थं दर्शयति ॥ आकृतिमिति। तथा च पृथिवीलोकं तत्यज इत्यर्थः । नन्वाकृति शब्दस्य पृथिवीवाचकत्वं कुत इत्यतस्तत्राभिधानं दर्शयति॥ शरीरमिति। देह इत्यनेन त्यक्ष्यन्देहमिति वक्ष्यमाणमप्युक्तार्थमिति ज्ञातव्यं । ननु देहत्याग एवात्र तत्र च विवक्षितः किं न स्यात् । किं पृथिवीलोकसंत्यागार्थकल्पनयेत्यतोऽत्र बाधकं प्रमाणं पठति ॥ पृथिवीति । स्मृतः स्मृत्यादावुक्तः । हरेर्देहत्यागः पृथिवीलोकसंत्याग एव । कुतः । नित्यानंदस्वरूपत्वात् अन्यच्छरीरत्यागरूपमुपलभ्यते। योगिभिरिति शेषः । तथा च योगिप्रत्यक्षानुगृहीतानुमानविरुद्धं शरीरत्यागरूपार्थकल्पनमिति भावः । नन्वेवं तत्रत्यैर्मनुष्यैर्भगवच्छरीरस्य मृतस्य दृष्टत्वात्तद्विरोध इत्यतो न तद्भगवच्छरीरमित्याह ॥ दर्शयेदिति । सदा परोक्षज्ञानः परोक्षज्ञानात्मकाकृतिरपि विष्णुः स्वसदर्शी मृतकाकृतिं मृतं देहं दर्शयेन्नटवत् । नटो यथाऽस्वकीयमेव किंचिद्रूपं लोकानां स्वकीयत्वेन प्रदर्शयति तथेत्यर्थः । लोकानां प्रत्यक्षं भ्रमरूपं । अतो न तद्विरोध इति भावः । प्रतीतार्थे बाधकं भागवतविरोधमप्याह । राजन्निति । परस्य हरेस्तनुभृद्वज्जननाप्ययरूपामीहां चेष्टां मायया स्वेच्छया विडंबनं लोकानुकरणमवेहि । स्वस्मिन् जननाप्ययाभावेऽपि जातवन्मृतवत्स्वात्मानं दर्शयतीत्यवेहीत्यर्थः । इदमेकादशस्कंधगतं वाक्यं । देहत्यागसक्तिपरिहारार्थमेव तत्रोक्तमतो निरवकाशमिति मंतव्यं । इदमुपलक्षणं । प्रदर्श्यातप्ततपसामवितृप्तदशां नृणां । आदायांतरधाद्देव इति पूर्वोक्तमपि वाक्यमत्र प्रतीतार्थे बाधकत्वेन ग्राह्यं । समीपस्थत्वेनोहसंभवात् । स्ववचनेनाप्रदर्शनं ॥२९॥ ब्रह्मशापापदेशेन ब्रह्मशापशब्दवाच्येन कालेन मृत्युना देहं पृथिवीं । अत्रामोघं वांछितं यस्येत्यनेनामोघेच्छया भगवदिच्छयैवोद्धवोऽवशिष्ट इत्युत्तरमुक्तामिति ज्ञातव्यं । नन्वत्र संहृत्य स्वकुलमित्युक्तोद्धवस्य चरमोपदेशबदरीगमने यदुकुलसंहारानंतरमुक्ते । एकादशस्कंधे तु ततो महाभागवते उद्धवे निर्गते वनं । द्वारवत्यां किमकरोद्भग-

वान् भूतभावन इति वक्ष्यमाणत्वेन यदुकुलसंहारात्पूर्वमेव ते उक्ते । अतो विरोध इति चेत् । संहृत्य संहर्तुं निश्चित्येति व्याख्याने विरोधाभावात् ॥२०॥ किं तद्भगवद्वाञ्छितं यद्बलादुद्धवोऽवशिष्ट इत्यतो भगवद्वाञ्छां दर्शयति ॥ अस्मादिति । उपरते निर्गतेऽर्हति स्थातुमिति शेषः । आत्मवतां ब्रह्मज्ञानिनां मध्ये ॥२१॥ एतदेवाह ॥ नेति । यद्यस्य गुणैर्भक्त्यादिभिः प्रभुरहं निर्जितो वशीकृतो लोकं साधुजनं प्रतिग्राहयन् उपदिशन् । अत्रोद्धवोऽण्वपि मन्न्यूनो नेत्युक्त्योद्धवस्य कृष्णसाम्यं प्रतीयतेऽनस्तदुक्तेरभिप्रायं प्रमाणेनैव दर्शयति ॥ उत्तमैरिति । नीचानामप्युत्तमैर्यत्क्वचिदधिकत्वादिकमुच्यते तत् । तु शब्दोऽवधारणे । मोहार्थमेव । प्रकारांतरमप्याह ॥ अप्युपेक्षयेति । तदीयनीचत्वस्योपेक्षयाऽपीत्यर्थः । तदीयनीचत्वमुपेक्ष्य स्तुतिरूपार्थवादतया आधिक्यादिवचनमिति भावः । मूढदृष्ट्येति । मूढानामुद्धवादिषु कृष्णसाम्यादिकं यद्दृश्यते तदनुवादोऽयमित्यर्थः । तथा च दर्शनभाषयैवमुक्तमिति भावः । साम्यवचनस्यैव गत्यंतरमाह ॥ किंचित्साम्येन वेति । तथा च यत्किंचित्साम्येन वा साम्यमुच्यत इति योज्यं । उपदिष्टशास्त्रप्रतिपाद्योऽपि कृष्ण एवेति दर्शयितुं मूले शब्दयोनिनेत्युक्तं । ईजे पूजयामास । समाधिना दृढध्यानेन ॥२२॥ उपात्तदेहस्य प्रकटीकृतदेहस्य ॥२३॥ देहन्यासं पृथिवीलोकसंत्यागं । धैर्यवर्धनं वैराग्यादिगुणसंपादनमिति शेषः । पशूनां पशुप्रायाणामन्येषामज्ञानिनां विक्लवात्मनामधीरचित्तानां दुष्करतरमातिशयेन दुःखकरं ॥२४॥ आत्मानं स्वमीक्षितं स्मृतं श्रुत्वेति पूर्वेणान्वयः ॥२५॥ कालिंद्या यमुनायाः सकाशात् । द्युसरितं भागीरथीं । मित्रासुतो मैत्रेयः ॥२६॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ ३–४ ॥ ॥

॥ हरिः ॐ ॥ श्रीद्युनद्या गंगाया द्वारि हरिद्वारे आसीनं न तु कर्मकरणे व्यग्रं । उपसंहृत्य गुरूपसत्तिविधिना प्राप्याच्युतभावेनाच्युतभक्त्या शुद्धः । तृप्त इति पाठेऽच्युतभावेन विषयेऽप्यलंबुद्धिमानित्यर्थः । कथं भूतं मैत्रेयं । विदुरस्य सौशील्यादिगुणैरतितृप्तं संतुष्टं । अनेन तत्त्वज्ञानयोग्यत्वं वक्तृप्रेमास्पदत्वं श्रोत्रानुकूल्यं च दर्शितमिति ज्ञातव्यं ॥१॥ पप्रच्छेत्युक्तप्रश्नानेव दर्शयति ॥ सुखायेत्यादिना । सुखाय सुखप्राप्तये यागादिकर्माणि करोति तैः कर्मभिरन्यदन्यस्य दुःखस्योपरमं नाशं वा न विंदेत् प्रत्युतानर्थप्राप्तिरेव ततः स्यादित्याह ॥ भूय इति । ततः कर्मणो भूयो दुःखमेव विंदेत् । अत्र सुखप्राप्तये

आत्यंतिकदुःखनिवृत्तये च यद्युक्तं कर्तुं योग्यं तद्भगवान्नोऽस्माकं वदन्निरूपयतु ॥२॥ सज्जनदुःखनाशनं भवादृशानां हरिभक्तानां स्वभाव एवातोऽत्र मया नातीवनिर्बंधः कार्य इत्याशयेनाह ॥ जनस्येति । दैवात्प्राचीनकर्मप्रेरकात् । सदुरूपदेशाभावेन कृष्णाद्विमुखस्य जनस्य मोक्षयोग्यजनस्यात एवाधर्मशीलस्येत्यादि । अनुग्रहाय तद्दुःखनाशाय सुखप्राप्तये चेह कर्मभुवि भव्यानि मंगलानि जनार्दनस्य भूतानि जनार्दनभृत्यतया विद्यमाना भवदादयश्चरंति ॥३॥ तत्तस्मात् । हे साधुवर्य मैत्रेय । शर्मवर्त्म सुखप्राप्तिमार्गमादिशेत्यन्वयः । ननु भगवज्ज्ञानमेव दुःखनिवृत्त्यादिरूपमोक्षसाधनत्वेन श्रुत्यादि सिद्धं । अतः किं तत्प्रश्नेनेत्याशंकायां तज्ज्ञानमेव केन कर्मणांऽतःकरणशुद्धिद्वारा भवतीति मदीयप्रश्नाशय इत्याह । येन कर्मणा संराधितो भगवान्पुंसामधिकारिणां वैराग्यद्वारा भक्तिपूते हृदि स्थितः श्रवणादिना ध्यातः सन् स्वसत्ताधिगमं स्वमाहात्म्यविषयकं पुराणं गुरुसंप्रदायागतं ज्ञानमपरोक्षज्ञानं यच्छति । तत्कर्मादिशेत्यन्वयः ॥४॥ स्वसत्ताधिगममिति यस्य भगवन्माहात्म्यस्य ज्ञानं मोक्षसाधनमुक्तं तदेव माहात्म्यं पृच्छति ॥ करोतीत्यादिना । यानि कर्माणि करोति तानि वर्णयेत्यादिरूपेण प्रत्येकमग्रेतनक्रियासंबंधः । कृत्वावतारः कृतपुरुषाद्यवतारः । कर्माण्येव विशेषतः पृच्छति ॥ यथेति । अग्रे आदिकाले । निरीहः स्वप्रयोजनेच्छारहितो यथा केन प्रकारेण ससर्ज यथान्यसंस्थाप्य सम्यक् स्थितं कृत्वा वृत्तिं जीविकां विधत्ते तथा वर्णयेत्यर्थः ॥५॥ पुनः प्रलये स्वे स्वीये निजोदराकाशे गुहायां जगदाच्छादिकायां तया रूपायां चेतनप्रकृतौ शेते । निवृत्तवृत्तिर्निवृत्तजगत्सृष्ट्यादिव्यापारः पुनः सृष्टौ सत्यामेतद्ब्रह्मांडप्रविष्टो यथा बहुधा मत्स्यादिरूपेण तैरवतारभेदैर्यानि कर्माणि विधत्ते करोति । तानि च वर्णयेत्यर्थः ॥६॥ पुनर्विशेषं प्रष्टुं स्वौत्सुक्यमाविष्करोति ॥ मन इति । सुश्लोकाः पुण्यकीर्तयस्तेषां मौलिरिव मौलिः परिविराजमानस्तस्येत्यर्थः । यैस्तत्त्वभेदैर्महदादितत्त्वविशेषैरखिलोकनाथो लोकनाथाधिपोऽलोकान् लोकालोकपर्वताद्बहिर्विद्यमानभागान् । अचीक्लृपत कल्पयामास ॥७॥ यत्र येषु लोकेष्वलोकेषु च सर्वेषां सत्त्वानां प्राणिनां निकायास्तेषां भेदोऽधिकृतः । स्वस्य योग्यकर्मकरण इति शेषः । आश्रित इति वा प्रतीतितः । आगमादिनेति शेषः । तदपि वर्णय ॥८॥ सर्वसत्त्वनिकायेष्वनेन सामान्यतः पृष्टमेव विशेषतः पृच्छति ॥ येनेति । येन प्रकारेण । उतापि । आत्मा स्वभावस्तदनुसारि कर्म तत्कृतं

रूपं शरीरं तदनुसार्यभिधानं नाम । द्वंद्वैकवद्भावः । तेन भिदां परस्परव्यावृत्तिं आत्मनश्चतुर्मुखस्य योनिः । अनेन चतुर्मुखद्वारा कथमेतत्सर्वं कृतवानिति प्रश्नाभिप्रायं सूचयति ॥९॥ ननु महाभारतादिना व्यासमुखात्सर्वं श्रुतमेव त्वयाऽतः किं पुनस्तद्वर्णनेनेत्यत आह ॥ परावरेषामिति । अत्र परे त्रैवर्णिका अवरे शूद्रादयस्तेषां कृतानि तद्योग्यानि कर्माणि परे देवर्ष्यादयोऽवरे क्षितिपादयस्तेषां कृतानि चरित्राणीति वा मे मया व्यासमुखादभीक्ष्णं यद्यपि पुनः पुनः श्रुतानि तथाऽपि कर्णसुखावहत्वात्तेषां । षष्ठी तृतीयार्थे । कर्णसुखावहैस्तैर्व्यासोक्तैर्भारतादिभिर्न तृप्तः । कुतः । यतः कृष्णकथामृतौघादृते विना तानि भवंत्यतो न तृप्तम इति भारतादौ हरिकथाभावरूपा निंदा प्रतीयतेऽतोऽत्र विवक्षितमर्थं दर्शयितुमृत इत्येतद्व्याख्याति ॥ ऋत इति । तथा च ऋत इत्येतत्सप्तम्यंतं न विनार्थकमव्ययमिति भावः । ऋत इत्यस्यावगमार्थत्वे नियामकं पठति । ऋ गताविति धातुव्याख्यानात् । गत्यर्थानां च ज्ञानार्थत्वादिति भावः । इदानीं वाक्यार्थमाह ॥ तेषामिति । परावरकर्मप्रतिपादकानां भारतादीनामित्यर्थः । तात्पर्येति । ऋत इत्यत्र योग्यताबलात्तात्पर्येति लभ्यत इति भावः । कृष्णकथामृतौघ एवाऽसौ यत इति तात्पर्यकथनेन कृष्णकथामृतौघत्वादिति भावप्राधान्यविवक्षया मूलं योज्यमिति सूचयति । तथा च यद्यपि व्यासमुखाद्भारतादिकं श्रुतं तत्र चापाततः परावरेषां कर्माण्येव प्रतिपादितानीति प्रतीयते । तत्त्वेन दुर्गमार्थत्वादुपक्रमादिना लिंगेन तेषां तात्पर्यनिश्चये हरिकथामृतौघत्वमुत्तमाधिकारिभिरेव ज्ञायते । न सर्वैः । भाषात्रयेण प्रवृत्तत्वेन दुर्गमार्थत्वात् । अतस्तैर्न तृप्तमः । मंदाधिकारिभिस्तेषां हरिपरत्वस्य ज्ञातुमशक्यत्वात् । अतो मंदाधिकार्यनुजिघृक्षया ममाभिभाषयैव वर्णयेति मूलाभिप्राय इति भावः ॥१०॥ तर्हि तवोत्तमाधिकारित्वात्त्वां प्रति मदीयं हरिमाहात्म्यवर्णनं व्यर्थमित्यत आह ॥ कस्तृप्नुयादिति । को रसज्ञ उत्तमाधिकारी तृप्नुयात्तत्राऽलंबुद्धिं कुर्यात् । तीर्थपदो हरेरभिधानात्कथामृतादः सत्रेषु समाजेषु सूरिभिर्नारदादिभिः पुनः पुनः श्रवणेन प्रयोजनमाह ॥ य इति । यो हरिः पुरुषस्योत्तमाधिकारिणः कर्णनाडीं यातः पुनरपि श्रूयमाण इत्यर्थः । छिनत्ति । तस्येति शेषः । उत्तमाधिकारिभिरपि वैराग्यवृद्ध्यर्थं हरिमाहात्म्यं पुनः पुनः श्रोतव्यमेवेति भावः ॥११॥ ननु भारते व्यासेनोत्तमाधिकारिणः प्रत्यपि भगवद्गुणान्प्रतिपादितत्वात्तत्र ग्राम्यसुखानुवादस्यैव प्रतीयमानत्वादुपक्रमादिना तत्रैव तात्पर्यावग-

माच्च । अतस्तेषामृते कृष्णकथामृतौघादित्युक्तमयुक्तमित्यत आह ॥ मुनिरिति । अत्र यस्मिन्नित्यस्य कृष्णपरामर्शत्वप्रतीतिवारणायार्थमन्वयं च दर्शयन्वाक्यार्थमाह ॥ यस्मिन्निति । हरेः कथायां हरिप्रतिपादकत्वेन कथायामुपक्रमादिना । अवगम्यमानायामिति शेषः । ग्राम्यसुखानुवादैरुत्तमाधिकारिणो मतिर्न गृहीता । उत्तमाधिकारिणो बुद्धिरापातप्रतीतग्राम्यसुखादिरूपार्थमात्रावगाहिनी न भवतीत्यर्थः । तद्वारतं ते सखा मुनिः सर्वज्ञः कृष्णो व्यासो भगवद्गुणानां । षष्ठि द्वितीयार्थे । भगवद्गुणानपि विवक्षुर्महातात्पर्यवृत्त्या प्रतिपादयितुकाम आहेत्यन्वयः । अपि शब्देनावांतरतात्पर्येण भारतस्य प्रतीतार्थपरत्वमप्यस्तीति दर्शयति । भारतस्य विष्णुमाहात्म्यप्रतिपादन एव तात्पर्यमित्यत्र प्रमाणं दर्शयाति ॥ भारतादिति । भारतान्न विरागायेति द्वितीयार्धेन साश्रद्दधानस्येत्युत्तरश्लोकोक्तमपि प्रमापितमिति ज्ञातव्यं ॥१२॥ ग्राम्यसुखानुवादैरुतमाधिकारिणो मतिर्न गृहीतेत्युक्तं । ततः किं करोतीत्यत आह ॥ सा श्रद्दधानस्येति । अत्र सेत्यनेन परामृश्यं विवर्धमानेत्यत्रापेक्षितानुवृत्तिं च दर्शयति ॥ सेति । तथा च श्रुत आस्तिक्यबुद्धिं दधानस्य पुंस उत्तमाधिकारिणो या भारततात्पर्यावगमे ग्राम्यसुखानुवादेन न गृहीता मतिः सा हरेः कथायामेव विशेषेण वर्धमाना सत्यन्यत्र विषयेषु विरक्तिं करोति जनयाति । अनंतरं हरेः सदाऽनुस्मृतिनिर्वृतस्य ध्यानादिना प्राप्तस्वरूपानंदस्य समस्तदुःखाप्ययं धत्ते विधत्त इति मूलं योज्यमिति भावः ॥१३॥ ननु मंदाधिकारिणः प्रति भगवन्माहात्म्यमवश्यं वर्णयेति त्वया कस्मात्प्रार्थ्यत इत्याशंकायां ते मत्कृपाविषया इत्याह ॥ तानिति । शोच्यशोच्यान् अत्यंतशोच्यानित्यर्थः । अविदो भारततात्पर्याभिज्ञान् अत एवाघेनाघकरेण नानाविधव्यसनेन हरेः कथायां विमुखान् अनिमिषो देवः कालनामा हरिः । वृथावादगतिस्मृतीनां वृथैव वादगतिस्मृतयो वाग्देहमनोव्यापारा येषां तेषामायुस्तु विशेषेण क्षिणोति वृथैव नाशयतीत्यर्थः । अतोऽनुशोच इत्यर्थः ॥१४॥ तत्तस्मादस्मत्कृपाविषयत्वादस्याधिकारिणः शर्मदातुर्मोक्षादिपुरुषार्थप्रदस्य हरेः कथासु मध्ये सारं सारभूतां कथामेव यथा पुष्पेभ्यो मधु मधुप उद्धरति । तद्वदुधृत्य शिवाय मोक्षाय कीर्तय । कथं भूतस्य हरेः । तीर्थवत्पवित्रकरी कीर्तिर्यस्य तस्य ॥१५॥ कथासारमेव दर्शयन्नाह ॥ स इति । संयमः प्रलयः । कृतवासुदेवाद्यवतारः प्रगृहीता लीलयैव सहकारितयोपात्ताः शक्तयः सत्त्वाद्यभिमानिन्यः श्रीभूदुर्गा येन स तथोक्तः । तथा

च कृष्णादिलीलयैव कथासार इति भावः । मर्द्यं नः ॥ १६ ॥ १७ ॥ बहुमानप्रकारमेवाह ॥ साधु पृष्टमित्यादिना । लोकान्संदांधकारिण आत्मनः स्वस्याधोक्षजे आत्मा मनो यस्य ॥१८॥ एतादृशप्रश्नकरणं तवोचितमेवेत्याशयेनाह ॥ नैतादिनि । एतदेतादृशप्रश्नकरणं । बादरायणवीर्यजत्वं धृतराष्ट्रेऽप्यस्ति । अतोऽत्र विशेषमाह । यद्यस्माद्धरिरनन्यभावेनानन्यसाधारणभक्त्या त्वया गृहीतो ज्ञातस्तस्मादेतन्न चित्रमित्यन्वयः ॥१९॥ देव एव त्वं शापाच्छूद्रजातिरस्यतोऽपि नैतच्चित्रमित्याशयेनाह ॥ मांडव्येति । व्यासस्य भ्रातुर्विचित्रस्य क्षेत्रे भार्यात्वेन स्वीकृतायां भुजिष्यायां दास्यां ॥२०॥ श्रीकृष्णस्य प्रियत्वेन संमतत्वाच्च नैतच्चित्रमित्याह ॥ भवानिति । संमतः । प्रियत्वेनेति शेषः । हि शब्देनायमर्थः प्रसिद्ध इति दर्शयति । किंच स्वधाम व्रजन् तव ज्ञानोपदेशाय मामादिशादिति यस्मात्तद्भवान् भगवतः प्रियत्वेन संमत इति योज्यं ॥२१॥ अथ तस्मात्प्रष्टुस्तवैवं विधत्वात । योगः स्वरूपसामर्थ्यं माया प्रकृतिस्ताभ्यामुपबृंहिता वर्धिता विश्वस्थित्यादयोऽर्था विषया यासां ताः ॥२२॥ इति श्रीभागवतटिप्पण्यां पंचमोऽध्यायः ॥ ३-५ ॥ ॥

॥ हरिः ॐ ॥ तत्र सृष्टिविषयलीलां वर्णयितुं ततः पूर्वभाविनीं स्थितिमाह ॥ भगवानेक इति द्वाभ्यां । अत्रात्मानामात्मा स्वरूपभूत इत्यन्यथाप्रतीतिवारणाय विवक्षितमन्वयं दर्शयति ॥ आत्मनामिति । नन्वात्मनामित्यस्य स्वामिनामित्यर्थत्वं विभुपदस्य च व्याप्तत्वार्थत्वे योग्यताभाव इत्यतोऽत्र विवक्षितं शब्दद्वयलब्धमर्थं दर्शयति ॥ जीवेति । तथा च षष्ठ्यंतमात्मपदं जविपरं विभु शब्दश्च प्रभुपर्यायोऽधिपतिवाचीति भावः । ॥ ततश्चायं श्लोकार्थः ॥ इदमग्रेऽस्याग्रेऽत्तीत्यात्मा जगत्संहर्ता भगवान् एकः केवल आस आसीत् । ननु जीवानामपि तदा सत्वात्कथमवधारणार्थक एक शब्द इत्यत उक्तं ॥ आत्मनां जीवानां विभुरधिप इति । ननु कुतो जीवाधिपत्वं तस्येत्यत उक्तं । हि यस्मादात्मा जीवसमूहः परमात्मेच्छानुगतस्तस्मादात्मनां विभुरिति । तथा च स्वतंत्र एक एवासीदित्यवधारणार्थं इति भावः । नन्वेवं निमित्तोपादानाद्यभावे कथं तस्माज्जगत्सृष्टिस्तत्सद्भावे च कथं तत्सापेक्षस्य स्वातंत्र्यमित्यत उक्तं ॥ नानाशक्त्युपलक्षित इति । नानाविधानामुपादानादीनां नियामकशक्तिभिरुपलक्षितो युक्त इत्यर्थः । तथा च तदधीनोपादानादिसत्वान्नोक्तदोषद्वयमिति भावः ॥१॥ एकराट् स्वतंत्रः स एव भगवान् तदा प्रलये

विश्वं स्वव्यतिरिक्तं प्रपंचं नापश्यत् । दर्शनशक्त्यभावान्नापश्यदित्यत उक्तं ॥ द्रष्टेति । स्वातंत्र्येण सर्वदा द्रष्टेत्यर्थः । नान्यातोऽस्ति द्रष्टेत्यादि श्रुतेरिति वै शब्दः । ननु जीवानां सत्वात्कथं स्वव्यतिरिक्तं नापश्यदित्युक्त इत्यत आह ॥ मेन इति । अत्रात्मानं स्वात्मानमसंतमविद्यमानं मेन इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्यानं दर्शयति ॥ परमात्मेति । आत्मानमित्यस्यार्थः ॥ जीवमिति । असत्वेन ज्ञाने निमित्तमाह ॥ अशक्तित इति । अशक्तत्वत इत्यर्थः । न त्वविद्यमानत्वेनेति भावः । अनेनैव शब्दार्थो दर्शित इति ज्ञातव्यं । न केवलं जीवेऽसत्वेन भगवज्ज्ञाने इदं निमित्तं किंतु नान्यत् किंचनेत्यादि श्रौतसत्ववचनस्यापीत्याशयेनाह ॥ असन्नसाविति । अतोऽशक्तत्वगुणयोगेनैवासौ जीवो नित्यमसन्नित्युच्यत इति शेषः । अनेन प्रलयकाल इव स्थितिकालेऽपि जीवस्याशक्तत्वसाम्यादसत्वव्यपदेशः स्यादित्यापादनस्येष्टापत्त्या दुष्टत्वं सूचयति । कुत एवं व्याख्येयमित्यतः प्रतीतार्थे बाधकमाह ॥ सर्वदा हरिर्यतः सत्यज्ञान इति । अनेन सत्यत्वेन श्रुत्यादिसिद्धेषु जीवेष्वविद्यमानत्वं चेद्भगवान्न जानाति तर्हि मिथ्याज्ञानी स्यादिति बाधकं सूचयति । ननु तथाऽपि तदा चेतनप्रकृतेरचेतनप्रकृतेश्च सत्वात्कथमन्यं नापश्यदित्युक्तमित्यतो मूले ॥ सुप्तशक्तिरिति । तदभिप्रायं प्रमाणेनैव दर्शयति ॥ शक्यत्वादिति । तथा च कर्मव्युत्पत्त्याऽत्र शक्तिशब्दो भार्यापरस्तदभिमन्यमानजडप्रकृतिपरश्चेति भावः ॥ सामर्थ्यमिति । भावव्युत्पत्त्या क्वचिदिति शेषः । नन्वेवं भगवद्भार्याया रमायाः कथं सुप्तिस्तस्याः सर्वदाऽऽविर्भूत ज्ञानत्वादित्याशंकायां तस्या अत्राभिमेतां सुप्तिं प्रमाणेनैव दर्शयति ॥ सुप्तिस्त्विवति । तु शब्दोऽवधारणे । अतीवभगवद्रतिरेवान्यत्र जगद्व्यापारेऽनास्थाऽऽसक्त्यभाव एवेति संबध्यते । न ज्ञानाभावरूपेत्यवधारणार्थः । जडप्रकृतौ चापरिणामित्वमेव सुप्ति शब्दार्थ इत्यपि ज्ञातव्यं । ननु भगवतोऽपि क्वचित्प्रलये सुप्तिरुच्यते तत्र कथं व्याख्येयमित्यपेक्षयामाह ॥ विष्णोरिति । चक्षुर्निमीलनं सुप्तिः प्रोक्तेत्यन्वयः । चक्षुर्निमीलनमित्यनेन सुप्तदृगित्येतदप्युक्ततात्पर्यमित्यवगंतव्यं । उपरमशून्यचक्षुरिंद्रियोऽपि निमीलितचक्षुरिति व्याख्यानस्य सूचितत्वात् ॥२॥ शक्ति शब्दोक्ताया भार्याया जडप्रकृतेश्च स्वरूपं नाम चाह ॥ सेति । जगद्व्यापारं विहाय भगवत्समीप एव रमते या च परिणामशून्या सेत्यर्थः । वै शब्दः प्रमाणप्रसिद्धिद्योतकः । शक्तिर्भार्या सदसदात्मिका महदादिकार्यकारणरूपजडप्रकृत्यभिमानिन्यन्या तद्रूपा

मायानाम । प्रधानत्वान्मयो विष्णुस्तस्येयं माया । चेतनप्रकृतेराद्यावतारभूताऽचेतना च । भगसमूहो भगो महान् भागो यस्य स तथा महतीं भां गच्छतीति महाभागस्तस्य संबुद्धिर्महाभागेति । ययोभयरूपया ॥३॥ ययेदं निर्मम इत्युक्तमेव प्रपंचयति । ॥ कालवृत्त्यां स्विति । कालेन सृष्टिकालप्रेरकेण तन्नाम्ना हरिणा प्राप्ता वृत्तिः सिसृक्षत्वादिविशेषा यस्याश्चेतनायाः सा तथोक्ता । अन्यत्र वृत्तिः परिणामोन्मुखत्वं गुणमय्यां । सत्त्वादिगुणाभिमानिन्यां तद्रूपायां च मायायां चेतनायामचेतनायां च । तु शब्दो माययोरुक्तविशेषार्थः । वीर्यवान् व्यक्तजगत्सर्जनशक्तिमान् । अधोक्षजोऽतींद्रियः प्रलयकालवर्ती परमात्माऽऽत्मभूतेनादावाविर्भूतस्वस्वरूपांशरूपेण पुरुषेण पुरुषनाम्ना वासुदेवेन वीर्यं रेताख्यं परिणामसामर्थ्यं चाधत्त स्थापितवान् अन्यत्रोद्बुद्धमकरोत् ॥४॥ ततो वासुदेवान्महत्तत्त्वं तन्नामकं जडरूपं तत्त्वं तदभिमानिपुन्नामकब्रह्मदेहश्चाव्यक्तात्तत्त्वोत्पत्तिविवक्षायां त्रिगुणात्मकप्रधानादभिमानिदेहोत्पत्तिविवक्षायां रेतोरूपेण । परिणतादिति शेषः । अत्र महत्तत्त्वादीनामुत्पत्तिः सूक्ष्मरूपेणैव विवक्षिता । स्थूलात्मना तेषामुत्पत्तेरनिरुद्धेनान्यत्रोक्तत्वात् । अतो न विरोध इति ज्ञातव्यं । कालचोदितात्कालनामकेन हरिणा प्रेरितात् । एवं तत्त्वतदभिमानिदेहयोरुत्पत्तिं विधायेदानीमभिमानिनश्चेतनस्याप्युत्पत्तिमाह । विज्ञानात्मा ब्रह्माऽपि पुरुषनामा तत्त्वे देहे चाभिमानिनोत्पन्न्याऽभवादिति । तस्य प्रलयकालेऽप्यविलुप्तवृत्तिज्ञानत्वसूचनाय विज्ञानात्मेत्युक्तं । तस्य कृत्यमाह ॥ आत्मदेहेति । आत्मनः स्वस्याभिमन्यमानतया देहस्थानीये महत्तत्त्वे कारणरूपेण विद्यमानं विश्वं व्यंजयन्व्यक्तं कुर्वन् । उत्पादयन्निति यावत् । तमस्तत्कालीनं सूय इव नुदन्परिहरन् स्वसृज्यानां शेषादीनामज्ञानं परिहरन्निति वा । तथा चाहंकारादिसर्वजगत्सर्जनाय तेषामुभयविधतमोनाशनाय च ब्रह्माऽभवदित्याशयः ॥५॥ एतदेव विशदयति ॥ सोऽपीति । अत्रांशगुणकालात्मेत्येतदंशगुणकालस्वरूप इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव सम्यग्व्याख्यातुमत्र विवक्षितमंश शब्दार्थं तावदाह ॥ अंश इति । जीवस्यापि परमात्मविभिन्नांशत्वस्य प्रसिद्धेरिति भावः । महत्तत्त्वाभिमानदशायां ब्रह्मणश्चतुर्मुखत्वाभावात्कथं प्रमाणे तत्र चतुर्मुख शब्दप्रयोग इत्यत आह ॥ महत्तत्त्व इति । चतुर्मुख शब्दो रूढ्या ब्रह्मपरः । कालमायांशयोगेनेत्यादिवक्ष्यमाणानामंशशब्दानामपि विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ सर्वेति । तथा चात्रांश शब्दो जीवपरस्तदात्मत्वं च तदभिमानित्वं । उत्तरत्र तु जीवाभिमानि-

त्वेन निमित्तेनांश इति शब्देन चतुर्मुख एवोच्यत इत्यर्थः ॥ ततश्चायं मूलार्थः ॥ स आत्मा महत्तत्त्वाभिमानी विरिंचोऽप्यंशो जीवो गुणाः सत्त्वादयः कालः सृष्टिकाल एषामात्माभिमानी भगवत्कृपादृष्टिविषयः । आत्मानं स्वाभिमन्यमानं महत्तत्त्वं व्यकरोद्विकारोन्मुखमकरोत ॥६॥ अहंतत्त्वमजायतेत्यादौ तत्त्वानां तदभिमानिदेहानामभिमानिनां चोत्पत्तिर्ग्राह्या । अहंतत्त्वलक्षणमाह ॥ कार्येति । कार्याणि भूतानि कारणानींद्रियाणि कर्तार इंद्रियाभिमानिनो देवा मनश्चैतेषामात्मा कारणं । कार्यकारणादिपदविवक्षितमर्थं स्वयमेवाह ॥ भूतेति । मनः शब्देन देवाश्च ग्राह्याः । एतेषां भव उत्पत्तिर्यस्मात्स तथा ॥ ७ ॥ एतत्प्रपंचयितुमहंकारतत्त्वविभागं तावदाह ॥ अहमिति । इदं प्रकारांतरमव्ययं तत्त्ववाचि । इदानीं वैकारिकादीनां कार्यप्रदर्शनेनोक्तं प्रपंचयति ॥ अहंतत्त्वादिति । वैकारिकाद्वैकारिकनामकादहंतत्त्वादित्यन्वयः ॥८॥ वैकारिका वैकारिकनामानस्तेषां कार्यं दर्शयति ॥ अर्थेति । यत एभ्य इंद्रियाभिमानिभ्योऽर्थानां शब्दादीनामभिव्यंजनप्रकाशो भवति । ते देवाश्चेत्यन्वयः । इंद्रियाण्येव तैजसानि तैजसाहंकारकार्याणि । न तदभिमानिन इत्येवकारार्थः । ज्ञानमयानि ज्ञानप्रधानकानि कर्ममयानि कर्मप्रधानकानि चेति बुद्ध्या विविक्तसमुच्चये च शब्दः ॥९॥ तामसस्तामसाहंकारो भूतसूक्ष्मस्य शब्दस्यादिकारणं यतः शब्दात्खमाकाशमुत्पन्नं । कथं भूतं खं । आत्मनः परमात्मनो लिंगं सर्वगतत्वानित्यत्वयोर्दृष्टांततया ज्ञापकं । आकाशवत्सर्वगतश्च नित्य इति श्रुतेरित्यर्थः ॥१०॥ कालमायांशयोगेनेत्यस्य विवक्षितमर्थं दर्शयति ॥ कालेति । अत्र यद्यपि कालमायांशयोगेनेत्येवानुवादो युक्तः । न तु कालमायांशयोगत इति । तथाऽप्यत्रत्यकालमायांशपदानां व्याख्यानं वक्ष्यमाणे कालमायांशयोगत इत्यादावप्यनुसंधेयमिति दर्शयितुं कालमायांशयोगत इत्यनुवादः कृत इति ध्येयं । परिणामात्परिणामजनकात् । प्रकृतेरिति मायापदव्याख्यानं चेतनप्रकृतेरित्यर्थः । अंश शब्दव्याख्यानं हिरण्यगर्भादिति । योग शब्दार्थप्रदर्शनायेतरेतरयोगवाची च शब्दः प्रयुक्तः । ततश्चायं मूलार्थः ॥ कालः परिणामकालो माया चित्प्रकृतिरंशः सर्वजीवाभिमानी हिरण्यगर्भ एतेषां योगेन परस्परसहकारित्वेन मेलनलक्षणसंबंधेन भगवता वीक्षितं कृपया निरीक्षितं तामसानुसृतं तामसाहंकारानुस्यूतं नभः स्पर्शं विकुर्वन् विशेषेण कुर्वन् तदाकारेण परिणतं । सदिति यावत् । तद्वाराऽनिलं वायुं निर्ममे ॥११॥ नभसा स्वांशस्तत्रानुस्यूतेनातिबला-

न्वितो रूपतन्मात्रां ससर्ज तद्द्वारा लोकस्य लोचनं प्रकाशकं ज्योतिस्तेजः संज्ञं भूतं ससर्ज ॥१२॥ अन्वितमनुस्यूतं परेण हरिणा विवक्षितं रसमयं रसकार्यं । अनेन रसद्वाराऽम्भसां सृष्टिरुक्तेति ज्ञातव्यं ॥१३॥ अनुसंसृष्टमनुस्यूतं गंधाख्यो गुणः कारणीभूतो यस्याः सा तथोक्ता । तथा च गंधद्वारा महीसृष्टिरुक्ता भवति ॥१४॥ शब्दादीनामाकाशाद्यसाधारणगुणत्वभ्रमनिराकरणायाह ॥ भूतानामिति । भूतानां मध्ये यद्यत्परात्पूर्वस्मात्परं पश्चाद्भाव्यमुत्पाद्यं तेषां परानुसंसर्गात्पूर्वकारणानुषंगाद्यथासंख्यं यथाक्रमं गुणान् शब्दादीनुत्तरोत्तरमधिकसंख्यान्विदुः । ज्ञानिन इति शेषः । तथा चाकाशे शब्दो वायौ शब्दस्पर्शौ तेजसि शब्दस्पर्शरूपाण्यंभसि शब्दस्पर्शरूपरसा मह्यां शब्दस्पर्शरूपरसगंधा इति विदुरित्यर्थः । अत्र महदहंकारादीनां पृथिव्यंतानां प्रकृतिसंज्ञकानि तत्तत्सूक्ष्मरूपाण्येवोपादानानि । अत्रोक्तं गुणत्रयात्मकाव्यक्तमहदादिकमुपचायकमात्रमिति संप्रदायः ॥१५॥ ब्रह्मांडसर्जनाय महदाद्याभिमानिदेवाः श्रीविष्णुस्तुतिं चक्रुरित्याह । एत इति । विष्णोः कला भिन्नांशाः । कालमायांशलिंगिन इत्येतदप्रतीत्या व्याख्याति ॥ कालेति । तन्निमित्तानि तत्कर्तृकाणि शरीराणि येषां ते तन्निमित्तशरीराः । नन्वेषां शरीराणां जीवाभिमानित्वेनांश शब्दवाच्यो हिरण्यगर्भः कर्ताऽस्तु । माया शब्दवाच्या चित्प्रकृतिरपि कर्त्रीत्यस्तु । कालस्य तु जडत्वात्कथं कर्तृत्वमित्याशंकायां काल शब्देनापि तदभिमानी हिरण्यगर्भ एव विवक्षित इत्याशयेनाह ॥ हिरण्यगर्भस्यैवेति । द्विविधं रूपं कर्तृतयाऽत्र विवक्षितमिति शेषः । एवं हिरण्यगर्भस्य रूपद्वयसद्भावे प्रमाणमाह ॥ कालेति । तथा च कालस्तदभिमानी हिरण्यगर्भो माया चित्प्रकृतिरंशो जीवाभिमानिहिरण्यगर्भस्यापरं रूपमेतैः कृतानि लिंगानि शरीराणि येषां संतीति कालमायांशलिंगिन इति मूलं व्याख्येयमिति भावः । नानात्वाद्विश्लिष्टत्वात् । स्वक्रियायां ब्रह्मांडोत्पादरूपायामनीशाः ॥१६॥ प्रपन्नानां भक्त्या भजतामाध्यात्मिकादित्रिविधतापोपशमे आतपत्रं छत्रमिव स्थितं । एतदेव विशदयति ॥ यन्मूलेति । यस्य पादारविंदस्य मूलं तलं केत आश्रयो येषां ते तथा । अंजसा यतयः सम्यगिंद्रियजयादिप्रयत्नवंतो बहिर्दूरादुत्क्षिपंति परित्यजंति । यन्मूलकेता इति यत्पादारविंदाश्रयत्वमुक्तं तत्तज्ज्ञानित्वमेव विवक्षितं । अन्यथा तेन संसारनिवृत्तिकथनानुपपत्तेः ॥१७॥ तज्ज्ञानस्य संसारनिवृत्त्यादिरूपमोक्षजनकं कुत इत्यपेक्षायामन्वयव्यतिरेकाभ्यामेवेत्याहुः ॥ ऋत इति । अत्रांघ्रिच्छा-

यांशविद्यामित्यस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ ब्रह्मविद्येति । अत्र हरि शब्देन तत्स्वरूपभूता विद्या लक्ष्यते । तथा च हरेर्हरिविद्यायाः छाया साक्षात्प्रतिबिंबभूताया ब्रह्मविषयकविद्या तदंशस्तत्प्रतिबिंबरूपांशः सुरेषु । अपि शब्दादृष्यादिषु च तिष्ठतीत्यर्थः । हि शब्दोऽत्र प्रमाणप्रसिद्धिद्योतकः । तर्हि सा बिंबरूपेण कुत्र तिष्ठतीत्यत उक्तं ॥ सर्वेति । सर्वविद्यानां देवादिविद्यानां बिंबभूताः श्रियः प्रोक्ताः । आगमेष्विति शेषः । अवांतरविशेषापेक्षया बहुवचनं । सुरेषु तदंशाः किं साम्येन संति नेत्याह ॥ प्रधानांश इति । चतुर्मुखे सरस्वत्याद्यपेक्षया प्रधानः श्रेष्ठो बहुतरोंऽशः प्रतिबिंबरूपास्तिष्ठतीत्यर्थः । अनेनेतरेऽप्यंशास्तारतम्येन तिष्ठंतीति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ हे ईश । जीवा अस्मदादयोऽस्मिन् भवे यद्यां ऋते विनाऽऽत्मन् आत्मनि शर्म सुखं न लभंते । यस्यां च सत्यां लभंत इत्यन्वयोऽपि ग्राह्यः । यत एवमन्वयव्यतिरेकौ स्तः । अतस्तां तवांघ्रिच्छायांशविद्यां । अंघ्रि शब्देन तत्स्वरूपभूता विद्या लक्षणीया । तथा च तवांघ्रिस्वरूपभूतविद्यायाः छाया साक्षात्प्रतिबिंबभूता । या रमायास्त्वद्विषयकविद्या तत्प्रतिबिंबांशभूता या ब्रह्मविद्या तामेवास्मन्मोक्षार्थमाश्रयेम ॥१८॥ भगवत्पादारविंदज्ञानं मोक्षसाधनमित्युक्तं तज्ज्ञानसाधनं दर्शयति ॥ मार्गंतीति । ऋषयो ज्ञानिनो विविक्ते स्थित्वा तव मुखपद्ममेव नीडमावासस्थानं येषां ते तथा तैः छंदः सुपर्णैर्वेदलक्षणपक्षिभिः । इदं वेदानां भगवतोऽनायासेनैव निर्गतत्वान्नाप्रामाण्यशंका तत्र कार्येति सूचनाय । यत्पदं मार्गयंति विचारयंति । यच्च यस्माच्च प्रपन्नानामघमर्षः पापनाशः स्यात् । यच्च द्युसरिद्धरायाः परमं पदमुत्पत्तिस्थानं । अत एव तीर्थपदस्तीर्थपच्छब्दवाच्यस्य तव तत्पदं प्रपन्नाः । मनसेति शेषः । ध्यायंतीति यावत् । अत एव ध्येया गुणा यच्चाघमर्षमित्यादिनोक्ताः । तथा चानेन श्रवणादिक तज्ज्ञानसाधनमुक्तमिति ज्ञातव्यं । अत्र द्युसरिद्धराया इत्यस्य षष्ठीसमासत्वप्रतीतिवारणाय विवक्षितं तात्पर्यं दर्शयति ॥ द्युसरित इति । तथा च द्युसरित्सहिता धरा द्युसरिद्धरा तस्या इति मध्यमपदलोपी समास इति भावः ॥१९॥ मोक्षसाधने सहकार्यंतराणि दर्शयंत आहुः ॥ यच्छ्रद्धयेति । श्रुतवत्या श्रवणपूर्विकया भक्त्या संमृज्यमाने संशोध्यमाने हृदयेऽवधार्य संनिधाप्य वैराग्यबलं यस्य तेन ज्ञानेन ॥२०॥ न केवलं मोक्षार्थं त्वपादारविंदं श्रयेम किं त्वैहिकभयपरिहारार्थमपीत्याहुः ॥ विश्वस्येति । स्वपुंसां भक्तानां ॥२१॥ नन्वेवं भगवज्ज्ञानमेव मोक्ष-

जनकं तर्हि सर्वेऽपि तत्कस्मान्न संपादयंतीत्यत आहुः ॥ यदिति । सानुबंधे पुत्रादिपरिकरसहितेऽसत्यमंगले देहसहिते गेहे पुंसां पुर्यां देहे वसतोऽपि तव यत्पदांबुजं दूरं साक्षात्कर्तुमशक्यं तते पदाब्जं भजेम । अनेन वैराग्याभावात्सर्वे न ज्ञानं संपादयंतीत्युक्तं भवति ॥२२॥ ननु निकटवर्तिनः पदार्थस्य दर्शने किं वैराग्यणेत्यत उक्तमुपपादयंति ॥ तं त्वामिति । तं त्वामंतःस्थितं । असत्स्वमंगलेषु विषयेषु वृत्तयो येषां तानि तैर्बहिर्मुखैरक्षिभिरिंद्रियैः पदन्यासविलासलक्ष्म्यास्तव पदन्यासो गमनं तस्य विलासो विभ्रमस्तस्य लक्ष्मीः शोभा तस्याः सकाशात्पराहृतं बहिःकारितमंतोंऽतःस्थग्रहणयोग्यं मनो येषां ते तथा । हे परेश । एतेऽर्थो तस्मादेव नूनं निश्चयेन तं त्वामंतःस्थितं न पश्यंति । वैराग्याभावे बाह्येंद्रियाणि मनःस्वाविषयेषु नयंति । अतोंऽतःस्थितोऽपि न मनसा दृश्यत इति भावः ॥२३॥ मार्गंतीत्यादिना यच्छ्रवणादिरूपविचारभक्तिवैराग्यादिकं ज्ञाने प्राधान्येन साधनमुक्तं तन्न । सर्वेषामधिकारिणामवश्यं वायुजयादियोगप्रधानानां श्रवणाद्यप्राधान्येऽपि मनसोऽवश्यत्वेन वायुजयादियोगेनैव शीघ्रं मुक्तेः प्रमाणप्रसिद्धत्वादित्याशंकायां तेषां मुक्तिर्न संपूर्णा किं त्वल्पैवेत्याशयेनाह ॥ पानेनेति । हे देव । ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्रवृद्धमानया भक्त्या विशदाशया निर्मलांतःकरणा ये ते वैराग्यसारं वैराग्यफलं यथा यथार्थं वोधपमरोक्षज्ञानं प्रतिलभ्य प्राप्यांजसाऽनल्पतयाऽकुंठधिष्ण्यमप्रतिहतमंदिरस्थानीयं त्वामापुः प्रापुः ॥२४॥ तथा शब्दः समुच्चये । परे त्वन्ये साधकाः । तु शब्दोक्तमेव विशेषं दर्शयति ॥ आत्मसमाधीति । आत्मनि परमात्मनि समाधिश्चित्तैकाग्र्यं योगो वायुजयादिस्तद्बलेन बलिष्ठामन्यैरजेयां प्रकृतिं दुर्गां जित्वा वशीकृत्य धीरा धीषु रममाणा अपरोक्षज्ञानिनः पुरुषं पूर्णषड्गुणं त्वां विशंत्येव । न तु त इवांजसा । न केवलमेषामंजसा मुक्त्यभावः किंतु साधनानुष्ठानकाले वायुजयादिना श्रमश्च स्यादित्याह ॥ तेषामिति । नायं श्रमः पूर्वेषामित्याह । ते सेवया श्रवणादिरूपया ये त्वां विशंति तेषां श्रमो वायुजयादिनिमित्तो न तु नैव । अतः श्रवणादिप्रधानानामेव मुक्तिरनल्पेति तदर्थं प्राधान्येन श्रवणादिकमेव संपाद्यमिति भावः । अत्र प्रकृतिं जित्वेति प्रकृतिजयो योग शब्देन वायुजयश्च कथ्यते स न प्रसिद्धः संभवति । अतोऽत्र विवक्षितजय शब्दार्थं प्रमाणेनैव दर्शयति ॥ वायोश्चेति । प्रकृतेश्चित्प्रकृतेर्भक्त्या प्रसादोन्मुखीकरणमित्यर्थः । जय शब्दार्थ इत्यर्थः ।

अन्यथा बलात्कारेण वशीकरणादिरूपो नेत्यर्थः ॥२५॥ इदानीं स्वाभीष्टं प्रार्थयंते चतुर्भिः । अत्र त्रिभिरात्मभिरित्यस्य विवक्षितमर्थं दर्शयति ॥ त्रिभिरिति । पूर्वं तेषामेव निमित्ततया प्रकृतत्वादिति भावः । सत्प्रमुखा इत्यस्यापि प्रकृतसंगतमर्थं दर्शयति ॥ सत्प्रमुखा इति । महदादयो महदाद्यभिमानिनः । सच्छब्दस्य कार्यवाचित्वेन महत आदिकार्यत्वान्मुख्यतया तदेवात्र विवक्षितमिति भावः । ततश्चायं श्लोकचतुष्टयार्थः ॥ यस्मात्त्वमेवं मोक्षादिसर्वपुरुषार्थप्रदस्तस्मात्त्वया लोकसिसृक्षया त्रिभिरात्मभिः कालमायांशरूपैश्चेतनैर्विसृष्टा ये ते वयमद्येदानीं सर्वे वियुक्ता विश्लिष्टा अत एव स्वविहारतंत्रे स्वस्य तव क्रीडोपकरणं यद्ब्रह्मांडं तत्प्रतिकर्तवे प्रतिकर्तुं न शक्नुमः । अतस्त्वं नश्चक्षुः परिदेहीति चतुर्थेनान्वयः ॥२६॥ ब्रह्मांडनिर्माणानंतरमपि कर्तव्यज्ञानं प्रार्थयंते ॥ यावदिति । यावद्यावता ज्ञानेन बलिं पूजां । हे अज विष्णो । काले स्वावसरे यत्र यस्मिन् देशे यथा येन प्रकारेण वयं चान्नमदाम । अनीशा अस्मत्प्रेरणामंतरेण प्रवृत्तावसमर्थास्त इमे लोका जना यथा येन प्रकारेणोभयेषामस्माकं युष्माकं च बलिं हरंतः संतोऽन्नमदंति तावत् । तथा चक्षुर्ज्ञानं परिदेहीत्यन्वयः ॥२७॥ कुत एवं मां प्रत्येव प्रार्थनमित्यत आहुः ॥ त्वं न इति । त्वं सान्वयानां संततीनां सुराणां न आद्यो जनकोऽसि । जनकत्वे हेतुः पुराणः पुरातनः पुरुषः पूर्णषड्गुण इति । न परिणामितया जनक इत्याहुः ॥ कूटस्थ इति । निर्विकार इत्यर्थः । तर्हि कथं जनक इत्याशंकां परिहरंतः स्वशक्तिं च विज्ञापयंतो ब्रह्मांडनिर्माणोपयुक्तं ज्ञानं प्रार्थयंते ॥ त्वं देवेति । गुणकर्मयोनौ गुणाः सत्त्वादयः कर्माण्यदृष्टान्येतल्लक्षणा योनिर्जगत्कारणं सहकारिभूतं यस्याः सा तथोक्ता तस्यामजायां प्रकृति शब्दवाच्यायां शक्त्यां भार्यायां रेत आदधे । अनेन पितृवन्निमित्ततयैव जनकत्वमित्युक्तं भवति ॥२८॥ ततो रेतसः सत्प्रमुखा महदादितत्त्वाभिमानिनो यदर्थे यस्य कार्यस्यार्थे बभूविम । हे आत्मन् स्वामिन् । तत्किं ते कार्यं करवाम न किमपि । तदुपयुक्तज्ञानाद्यभावादिति भावः । अतो यस्य तवानुग्रहेण क्रियार्थे ब्रह्मांडनिर्माणाय शक्ताः स्याम । स त्वं नोऽस्माकं चक्षुस्तदुपयुक्तं ज्ञानं परिदेहि ॥२९॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ३–६ ॥ ॥

॥ हरिः ॐ ॥ स्तुत्या प्रसन्नस्य हरेः कृत्यं दर्शयति ॥ इतीति । अत्र स्वशक्तीनामित्येतच्छक्तिपदं महदादिवाचक-

मेव । अन्यथाऽसंगतिप्रसंगात् । अतस्तत्र शक्ति शब्दप्रवृत्तौ निमित्तं प्रमाणेनैव दर्शयति ॥ शक्यत्वादिति । महदाद्यास्तथा रमा इत्येताः शक्तयः शक्ति शब्दवाच्याः । शक्तित्वादिति भावव्युत्पत्तिप्रदर्शनं । हि शब्दः प्रमाणप्रसिद्धिद्योतकः । यतः सा विष्णुस्वरूपशक्तिः प्रधानशक्तिरतस्तत्रान्यविषयशक्तित्वमसंभावितमिति भावः । असतीनां समेत्येत्यनयोर्यथास्थितान्वयभ्रांतिं वारयति ॥ समेत्येति । ततो लब्धमर्थं दर्शयति ॥ असमेतानामिति । विश्लिष्टानामित्यर्थः । प्रसुप्तलोकतंत्राणामित्यस्य प्रकृतसंगतमर्थं दर्शयति ॥ प्रसुप्तेति । प्रसुप्तेत्यस्यार्थः ॥ अनाविर्भूतेति । लोकसृष्टीत्यनेन लोकपदं सृष्ट्युपलक्षणमिति सूचयति । शक्तीति तंत्र शब्दार्थकथनं । तथा च प्रसुप्तान्यनाविर्भूतानि लोकसृष्टिजनकानि तंत्राणि शक्तयो यासां तास्तथोक्तास्तासामिति मूलार्थ इति भावः । तंत्र शब्दस्य शक्तिवाचकत्वे निमित्तं प्रमाणेनैव दर्शयति ॥ तनुत इति । यद्यस्मात्स्वशक्तिः स्वरूपभूता शक्तिरेव तंत्रमुच्यत इत्यर्थः । ननूक्तनिर्वचनेन सर्वकारणानां तंत्र शब्दवाच्यत्वसंभवात्कथं शक्तेरेव तंत्र शब्दवाच्यत्वमित्यत आह ॥ प्रधानमिति । शक्त्यभावेनैव रासभादीनामसाधनत्वं दंडादीनां तु तत्सद्भावेनैव साधनत्वमित्युपजीव्यत्वाच्छक्तिः प्रधानसाधनमत उक्तनिर्वचनेन प्रधानस्यैव ग्राह्यत्वेन शक्तेरेव तंत्र शब्दमुख्यवाच्यत्वमिति भावः । त्रयोविंशतितत्त्वानामित्यत्र विवक्षितं त्रयोविंशतितत्त्वं प्रमाणेनैव दर्शयति ॥ शब्दाद्याति इति । शब्दाद्याः पंच नभ आद्याः पंच मनोयुक्तेंद्रियाण्येकादश अहंकार एको महांश्चैक इत्येवं त्रयोविंशतिको गण इत्यर्थः । ननु पूर्वमुक्तानां वैकारिकदेवानामसंग्रहान्न्यूनतेत्यत आह ॥ देवतेंद्रिययोरिति । तथा चेंद्रियग्रहणेनैव देवा अपि गृहीता इति भावः । अनेनैव न्यायेन महदादिग्रहणेन तदभिमानिनामपि ग्रहणं द्रष्टव्यं । नन्वेवमपि प्रकृतेर्हरेश्चासंग्रहान्न्यूनतेत्यत आह ॥ प्रकृतिरिति । प्रकृतिश्चेतनाचेतनरूपा तु शब्दः सकलकार्यजनकत्वरूपविशेषसूचकः । स्वयं स्वयमेवात्राभिमन्यमान जड नास्तीति भावः । तथा च मूले उरुक्रम शब्देन हरेः कर्तृतया माया शब्देनोभयविधप्रकृतेः सहकारितया पृथगुक्तत्वान्न तयोः कर्मतयोक्तत्रयोविंशतिगणांतर्भाव इति भावः । नन्वेवमन्यत्र क्वचित्तत्त्वानां षड्विंशतिसंख्यायाः क्वचित्सप्तविंशतिसंख्यायाश्चोक्तत्वात्तद्विरोध इत्यतस्तस्याभिप्रायमाह ॥ यदेति । जडांशस्वीकारः प्रकृत्यादिजडांशमात्रस्वीकारः । जीवोऽभिमानी चेतनः । तत्तदा जीव शब्देनाभिमानिजीवमात्रग्रहणे त्वाह ॥ श्रिया

वेति । तदा प्रकृत्यभिमानिनी श्रीः पृथगेव विवक्षितेति भावः । इदानीं समग्रश्लोकं प्रमाणेनैव विवृणोति ॥ त्रयोविंशतीति । तत्त्वानि चेतनाचेतनरूपाणि । देवीं बिभ्रदित्यस्य तात्पर्यमाह ॥ रमया सहेति । कालसंज्ञामित्यस्य तात्पर्यं ॥ कालाख्ययेति । शक्तिमित्यस्यार्थः ॥ शक्यत्वादीति ॥२॥ सोऽनुप्रविष्ट इत्युत्तरश्लोकतात्पर्यमाह ॥ सर्वेति । भगवानित्यस्य तात्पर्यं ॥ स्वसामर्थ्येनेति । भिन्नानि विश्लिष्टान्यंशतोंऽशानुद्धृत्य ॥ ततश्चायं श्लोकार्थः ॥ स्वशक्तीनां महदादीनां समेत्यासतीनामसमेतानां प्रसुप्तलोकतंत्राणामनाविर्भूतलोकसृष्टिजनकशक्तीनां देवीं रमां बिभ्रत् । तया सहेति यावत् । ग्रंथांतरविरोधपरिहाराय कालसंज्ञामित्युक्तं । शक्यत्वाच्छक्तिशब्दवाच्यं । इदमपि ग्रंथांतरविरोधपरिहारायैवेति ज्ञातव्यं । उरुक्रम उत्कृष्टपराक्रम इति युगपदनेकप्रवेशे सामर्थ्यं दर्शयति । चेष्टारूपेण चेष्टाप्रदरूपेण भिन्न विश्लिष्टं संयोजयामास । अंशानुद्धृत्येति शेषः । सुप्तं कार्योन्मुखं कर्म तेषां क्रियाशक्तिमदृष्टं वा प्रबोधयन् कार्योन्मुखं कुर्वन्निति ॥३॥ प्रबुद्धं कार्योन्मुखीकृतं कर्म क्रियाशक्तिरदृष्टं वा यस्य स तथा । दैवेनेश्वरेण । मात्राभिरित्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ मात्राभिरिति । अधिपुरुषं पुरुष शब्दवाच्यं विराजमाधिकृत्य वर्तमानं ब्रह्मांडं ॥४॥ जननप्रकारमेवाह ॥ परेणेति । परेण परमात्मना विश्वसृजां तत्त्वानां गणः । मात्रयांऽशेनान्योन्यमासाद्य विष्णुवीर्यरूपेण परिणामं प्राप्य चुक्षोभ । ब्रह्मांडाकारेण परिणत इत्यर्थः । यस्मिन् ब्रह्मांडे ॥५॥ हिरण्मयो हिरण्मयब्रह्मांडांतराविर्भूतः स पुरुषः पुरुषनामांऽडकोशे विद्यमानास्वप्सु सर्वैः सत्त्वैर्जीवैरुपबृंहितः ॥६॥ स ब्रह्मांडांतःस्थितः । वै शब्दः प्रमाणांतरप्रसिद्धिद्योतकः । विश्वसृजां तत्त्वानां गर्भो भगवान् उदरगतमहदादितत्त्वांश इत्यर्थः । दैवकर्मेत्यत्र विवक्षितं दैवशब्दार्थं प्रमाणेनैव दर्शयति ॥ ईश्वर इति । तर्ह्यात्मशक्तिरित्येतत्पुनरुक्तमित्यतस्तत्रापि विवक्षितमर्थमाह ॥ आत्मशक्तिरिति । तथा च दैवशक्तिः प्रभुत्वं कर्मशक्तिः क्रियाशक्तिरात्मशक्तिः स्वभार्यारूपा प्रकृतिरेतत्त्रितययुक्त इत्यर्थः । विबभाज विभागं कृतवान् । आत्मना स्वेच्छयैवात्मानं स्वात्मानं ब्रह्मदेहे । एकधा हृदयस्थरूपेण । दशधा दशविधप्राणनियामकतया । त्रिधाऽध्यात्मादिनियामकतया ॥७॥ ननु हिरण्मयः स पुरुष इति ब्रह्मांडांतराविर्भूतस्य पुरुषस्य पुरुषेणातमभूतेनेति यो महत्तत्त्वजनकः पुरुष उक्तस्तस्माद्भेद एव स्थानभेदात्कार्यभेदाच्चेत्याशंकायामाह ॥ एष हीति । अनेन कथमुक्तशंकापरिहार

इत्यतोऽस्याभिप्रायमाह ॥ पुरुषेणेति । पुरुषेणात्मभूतेनेति पूर्वाध्याये उक्तो यः पुरुष शब्दवाच्यो वासुदेवो महदादिसृष्टिद्वारांऽडमसृजत् । स एव एष इत्यनेनोक्तः परामृष्टः । हिरण्मयः स पुरुष इत्युक्तो ब्रह्मांडांतराविर्भूतः पुरुष इत्यर्थः । अतो न तयोर्भेदः शंकनीयः । स्थानभेदादिकं तु विशेषशक्त्योपपादनीयमिति भावः ॥ ततश्चायं मूलार्थः ॥ योऽशेषसत्त्वानां ब्रह्मादीनामात्माऽदानादिकर्ता परमात्मनोंऽश आद्योऽवतारः पुरुषेणात्मभूतेनेति पूर्वमुक्तः । यत्र येन भूतग्रामो महदाद्यंडपर्यंततत्त्वसमूहो विशेषेण भाव्यत उत्पाद्यत स एवैष हिरण्मयः स पुरुष इत्यादिनोक्तोऽतो न तयोर्भेदः शंकनीय इति । अनेन हिरण्मयः स पुरुष इत्यादिनोक्तः पुरुषो द्वितीयोऽवतार इति सूचयाति । अत्र हि शब्दसूचितं प्रमाणं दर्शयाति ॥ आद्योऽवतार इति। तु शब्दो विष्णोः प्रलयकालवृत्तित्वादिविशेषसूचकः । अंडं समाविशदंडांतराविर्भूतपुरुषशब्दवाच्योऽपि स एव नान्य इत्यर्थः। तथा चायं द्वितीयोऽवतार इति भावः । स एव ब्रह्मांडांतो विराड्देहं सृष्ट्वा तत्प्रेरणायांतराविर्भूत इत्याशयेनाह ॥ स इति । ब्रह्मणो विराजः । हृदिस्थत्वादित्यनेन हृदि अयत इति हृदय शब्दामिति निर्वचनं सूचयाति । च शब्दात्पुरुष इति कीर्त्यत इत्यपि ग्राह्यं । तथा चायं तृतीयोऽवतार इति भावः । तथोक्तमन्यत्र । प्रथमं महतः सृष्टं द्वितीयं त्वंडसंस्थितं । तृतीयं देहिनां देह इति । अनेनोत्तरश्लोके एकधा हृदयेन चेति वक्ष्यमाणहृदय शब्दार्थो दर्शित इति ज्ञातव्यं ॥८॥ एकधा दशधा त्रिधेत्युक्तं विवृणोति ॥ साध्यात्ममिति । त्रैविध्यं सर्वदेव सहितस्य परमात्मनो दशविधत्वं मुख्यप्राणतत्पुत्रसहितस्यैकविधत्वं केवलस्यैवेति । संख्यातारतम्यमभिप्रेत्योक्तक्रमवैपरीत्येन विवरणं । पूर्वमेकधेत्यादिनिर्देशस्तु हर्यादीनां स्वरूपतारतम्यमभिप्रेत्येति ध्येयं । अत्रैकधा हृदयेनेत्यस्य पूर्वोदाहृतप्रमाणेन व्याख्यातत्वात् तद्विहाय प्रमाणो दशविध इत्यस्य साध्यात्ममिति पूर्वार्धस्य च व्याख्यानं प्रमाणेनैव दर्शयाति ॥ प्राणादीति । प्राणापानव्यानोदानसमानसंज्ञानां पंचानां वर्गः प्राणादिपंचकं । नागकूर्म कृकलदेवदत्तधनंजयसंज्ञानां पंचानां वर्गो नागादिपंचकं । प्राण एवैवं दशधेत्येवकारान्वयः । तु शब्दः प्राण शब्दवाच्यमुख्यत्वरूपविशेषसूचकः । अध्यात्मादिभेदेन त्रिधा येऽत्रोक्तास्तेऽखिलाः सर्वेऽपि तत्त्वाभिमानिनो विवक्षिता इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ विशेषेण राजत इति विराट् ब्रह्मदेहांतर्गतः पुरुषः साध्यात्ममध्यात्मदेवैः सहितं तन्नियामकं रूपं प्रथमं ।

साधिदैवमधिदैवगतदेवनियामकं द्वितीयं । साधिभूतमधिभूतदेवनियामकं तृतीयमिति । अनेनाभिप्रायेण त्रिधा उक्त इति शेषः । प्राणो दशविधप्राणनियामकतया दशरूपो दशविध उक्तः । हृदयेन हृदयगतेन हृदयानियामकेन रूपेण । तद्विवक्षयेति यावत् । एकधोक्त इत्यर्थः ॥९॥ अध्यात्मादिभेदमेव प्रपंचयितुमाह ॥ स्मरन्निति । विज्ञापितं यावद्वालिं त इत्यादिकं विराजं ब्रह्मशरीरमतपत् एवं कर्तव्यमित्यालोचितवान् । स्वेन स्वरूपभूतेन तेजसा ज्ञानेनैषामग्न्यादिदेवानां विवृद्धये विशेषेण व्यापाराय ॥१०॥ अभितप्तस्यालोचितस्य शरीरस्य सकाशाद्देवानामग्न्यादीनामायतनान्याश्रयभूतानींद्रियस्थानानि निरभिद्यंतोत्पन्नानि तानि मे मत्तो गदतो वदतः ॥११॥ एवं सामान्यत उक्त्वा विशेषतोऽप्याह ॥ तस्याग्निरित्यादिना । तस्यालोचनं कुर्वतो हरेः सकाशात् । आस्यं मुखाख्यं स्थानं निर्भिन्नमुत्पन्नं । तत्पदं स्थानमधिदैवं लोकपालोऽग्निरग्निनामा देवो वाचा वागिंद्रियेण सह वाचा वाङ्नामकेन स्वांशेन स्वरूपभूतांशेन तदिंद्रियाभिमानिरूपेणाविशत् । यया वाचाऽसौ विराट् वक्तव्यं व्यवहर्तव्यं शब्दं प्रतिपाद्यते प्राप्नोति । व्यवहरतीति यावत् । एवमेवोत्तरत्र व्याख्यानं द्रष्टव्यं । अग्न्यादिकं प्रथमांतनिर्दिष्टमधिदैवं यद्वागिंद्रियं तदभिमानिरूपं च तदध्यात्मं । यच्च प्रतिपत्तव्यतयोक्तं शब्दादि तदधिभूतमिति ज्ञातव्यं ॥ १२ ॥ तालु जिव्हामूलं ॥१३॥ नासे गोलके ॥१४॥ अक्षिणी गोलके । त्वष्टा सूर्यः ॥१५॥ चर्माणि त्वगिंद्रियस्थानानि प्राणेन त्वगिंद्रियेण सह तन्नामकेन स्वांशेन तदिंद्रियाभिमानिरूपेणेत्यर्थः । अत्र त्वगभिमानित्वेनोक्तः पूर्वं दशविधत्वेनोक्तश्च प्राण एक एवेति प्रतीतिं प्रमाणेनैव परिहरति ॥ प्राण इति । तु शब्दोऽवधारणे । स प्रधानो वायुरेवेति । इत्यन्वयः । त्वगात्मा त्वगिंद्रियाभिमानी प्राण आद्यो येषां ते त्वगात्माद्याः । त्वगभिमानिप्राणः स्पर्शाद्यभिमानिनोऽपानादय इत्यर्थः । तु शब्दोऽवधारणे । बहिस्तत्पुत्रा एव प्रधानवायुपुत्रा एवेत्यर्थः । तथा च यो बहिर्भूतवायोः प्रधानाभिमानी मुख्यवायुः स एव प्रथमजः प्राणः पूर्वं दशविधतयोक्तः । यस्त्वमुख्यस्तदभिमानी प्रधानवायुपुत्रः स एव च त्वगभिमानी प्राणोऽत्र विवक्षित इति भावः ॥१६॥ दिशो यममित्रावरुणकुबेराः । यमश्च मित्रावरुणकुबेरश्च दिगीश्वरा इत्यैतरेय भाष्योक्तेः । सिद्धि ज्ञानं ॥१७॥ त्वगिंद्रियस्याभिमान्यंतरं विषयांतरं च दर्शयाति ॥ त्वचमस्येति । त्वचं चर्म । ओषधीरोपधयः । अधिदैवमोषधिदेवताः पारिजाताद्या इत्यर्थः । रोम-

भिरिति । रोम.नामकत्वेन त्वगिंद्रियेणेत्यर्थः । अंशेनेति । रोमनामकेणैव त्वगिंद्रियाभिमानिरूपेणैवेत्यर्थः । कंडूं तल्लक्षणं विषयं ॥१८॥ मेंढ्रं गुह्यस्थानं । को दक्षप्रजापतिः । रेतसा गुह्येंद्रियेण सह तन्नामकेन दक्षेणानंदं मैथुनसुखं ॥१९॥ पुंसः पुरुषनामकाद्धरेर्विसर्गं मलोत्सर्गं ॥ ॥२०॥ स्वर्पतिः स्वर्गस्य पतिः । वार्तया हस्तेंद्रियेण पुरुषो विराड्वृत्तिमादानादिरूपां क्रियां ॥२१॥ विष्णुरुपेंद्रः । अत्र पाददेवोऽजयंतो विष्णुस्तु तदाश्रयतयैवोक्तो न तत्त्वाभिमानितयेत्यनुसंधेयं । गत्या गतिसाधनपादरूपेंद्रियेण प्राप्यं गम्यं प्रपद्यते गमनरूपक्रियां करोतीत्यर्थः ॥२२॥ हृदयं मनसो निवासस्थानं मनसेंद्रियेण विक्रियां संकल्पविकल्परूपां ॥२३॥ आत्मानं चेत्यादिश्लोकत्रयोक्तं गोलकेंद्रियाभिमानिनां स्वरूपं प्रमाणेनैव दर्शयति ॥ अहंसत्वामिति । अवांतरं गोलकतया विवक्षितमिति शेषः । अनेनाहं चास्येत्यत्राहंसत्त्वशब्दयोरर्थ उक्त इति ज्ञातिव्यं । कर्त्रेत्यस्य तात्पर्यं ॥ कर्तृनामा त्विति । कर्तत्वाभिमतिजनकत्वात्कर्तृनामाऽहंकारः । तु शब्दः प्रसिद्धाहंकारतत्त्वाभिन्नत्वरूपाविशेषार्थः । तथा चायमहंकारो मनःप्रभेदरूपेंद्रियमित्यर्थः । चित्तेनेत्यस्य तात्पर्यं ॥ तत्त्वनाड्यामिति । चित्तं मनःप्रभेदरूपेंद्रियं । उभयत्राभिमानिनौ वक्तुं तावदभिमान इत्येतदनूद्य व्याख्याति ॥ अभिमान इति । अहंकाराभिमानित्वादिति भावः । तथा शब्दः समुच्चये । अहंनाड्या व्यवस्थित इत्यर्थः । इदानीं महानित्यस्य तात्पर्यं दर्शयन्नाह ॥ सत्वनाड्यामिति । सत्त्वनाड्यामेवेति संबंधः । च शब्दः पूर्वोक्तेंद्रियसमुच्चयार्थः । आत्मानं चेत्यस्य तात्पर्यं ॥ आ.मनाड्यामिति । बुद्ध्येत्यस्य तात्पर्यं ॥ बुद्धिरिति । बुद्धिर्मनःप्रभेदरूपमिंद्रियं । तत्रस्थ आत्मनाडीस्थः । तथा च शब्दौ परस्परसमुच्चये । वाचस्पतिशब्दव्याख्यानं ॥ बृहस्पतिरिति । अत्राहं सत्त्वनाड्योर्ब्रह्मनाडीप्रभेदत्वरूपत्वज्ञापनाय क्रमोल्लंघनमिति ज्ञेयं ॥ ततश्चायं श्लोकार्थः ॥ आत्मानमात्मनामकनाडीविशेषं वाचस्पतिर्बृहस्पतिः । बुद्ध्या बुद्धिनामकेन मनःप्रभेदरूपेंद्रियेण स्वांशेन तन्नामकेन तादिंद्रियाभिमानिरूपेण । निश्चयमित्थमेवेत्यवधारणरूपं ज्ञानं । अहमहंनामकनाडीविशेषं । अभिमानाहंकारपदवाच्यो रुद्रः । कर्त्रा । अहंकारनामकमनःप्रभेदरूपेंद्रियेण कर्तव्यं प्रतिपद्यते । इदं कर्तव्यमिति जानातीत्यर्थः । सत्त्वं सत्त्वनामकनाडीविशेषं । महान्महत्तत्त्वाभिमानी ब्रह्म धिष्ण्यं स्थानं चित्तेन चित्तनामकमनःप्रभेदरूपेंद्रियेण । विज्ञानं ज्ञानविशेषं ॥२६॥ इदानीमस्मादेव लोकोत्पत्तिमाह ॥ शीर्ष्ण

इति । शिरस इत्यर्थः । खमंतरिक्षं । गुणानां सत्त्वादीनां वृत्तयः कार्यभूतधर्मवंतो येषु लोकेषु ॥२७॥ एतदेव विवृणोति ॥ औत्पत्तिकेनेति । उत्पत्तिमारभ्य स्थितेनेत्यर्थः । सत्त्वेन सात्त्विकधर्मेण रजस्वभावेन राजसधर्मेण पणंते वागादिना व्यवहरंतीति पणयो मनुष्यास्तानन्नु तदुपकरणभूता ये वागादयस्तेऽपि धरां प्रपेदिरे ॥२८॥ तातीयेन तामसतामसेन स्वभावेन स्वधर्मेणोभयोर्द्यावापृथिव्योरंतरं मध्यं व्योमांतरिक्षं तदेव भगवन्नाभिस्तामाश्रिता रुद्रपार्षदानां भूतादीनां गणाः ॥२९॥ इदानीं ब्राह्मणादिवर्णोत्पत्तिमपि तस्मादाह ॥ मुखत इति । अत्र श्लोकचतुष्टये ब्राह्मणादीनां चतुर्णामुत्पत्तिः कथ्यते । एते ब्राह्मणादयो विनिगमकाभावात्के ग्राह्या इत्याकांक्षायां तान्प्रमाणेनैव दर्शयति ॥ ब्रह्मेति । ब्राह्मणजात्यभिमानीत्यर्थः । एवं क्षत्राभिमानी विडभिमानीत्येतदपि व्याख्येयं । तु शब्दश्च शब्दार्थः । मनुः स्वायंभुवः । वास्तुस्तन्नामको देवः । कृतिः शूद्रजात्यभिमानी देवः । अजायतेति संबंधः । ननु मूले पुरुषस्य भगवत इत्यादिवचनाद्वर्णोत्पत्तिर्भगवत एवोच्यतेऽत्र तु ब्रह्मणोऽतो विरोध इत्यतः स्वयमेव विरोधं परिहरति ॥ एत इति । तथा चानंतरिकीमुत्पत्तिमपेक्ष्य ब्रह्मणो मुखादित्यादिकमत्रोक्तमतो न विरोध इत्याशयः । एवं क्वचिद्रुद्राद्यायेश्चोत्पत्तिवचनस्याप्यानंतरिक्युत्पत्तिरेवार्थो न प्राथमिकीत्याह ॥ एवमिति । वायांश्च तदनंतरं ब्रह्मण उत्पत्त्यनंतरं जाता इत्यर्थः । प्रकारांतरेणापि विरोधं परिहरति ॥ तदंतस्थेति । तेषां ब्रह्मादीनामंतस्थाद्धरेर्येतो जाताः । अतोऽपि न विरोध इति शेषः । अधिष्ठानविवक्षया सर्वत्र हरिजातत्वस्यैवाभिधानादिति भावः ॥ ततश्चायं श्लोकचतुष्टयार्थः ॥ अत्र यज्जाताः सहवृत्तिभिरिति वक्ष्यमाणत्वाद्वर्णानां तद्वृत्तीनां चोत्पत्तिरुच्यते । पुरुषस्य ब्रह्मदेहगतस्य मुखतो ब्रह्म ब्राह्मणजात्यभिमानी भृगुर्वेदश्चावर्तत प्रवृत्तं । वेदस्य ब्राह्मणवृत्तित्वमुपपादयति ॥ यत्रेति । यत्र वेदे विषये ब्राह्मणो मुख्यगुरुभूतः । कुतः । उन्मुखत्वान्मुखादुद्भूतत्वान्मुखादुत्पन्नत्वान्मुखव्यापारमेव तस्य वृत्तिं कृतवानिति भावः । मुख इत्यनेनापदि क्षत्रियादेरमुख्यं गुरुत्वमस्तीति सूचयति । अनेनाध्यापितो वेद एव ब्राह्मणस्य वृत्तिरित्युपपादितमिति ज्ञातव्यं । ब्रह्माणतीति ब्राह्मण इति निर्वचनमपि सूचितं ॥ बाहुभ्य इति । पुरुषस्येति वर्तते । क्षत्रियाभिमानी मनुः क्षतात्त्राणरूपवृत्तिश्च क्षत्रियः । तत् क्षतात्त्राणं पालनं । अनुव्रतोऽनुसृतः । अनेन क्षत्रमनुसृत्य वर्तत इति क्षत्रिय इति निर्वचनं सूचयति । क्षत्र

शब्दोक्तां वृत्तिं क्षत्रियस्य दर्शयति ॥ य इति । बाहुभ्य इति वर्तते । बाहुभ्यो जातत्वादेवेति हेतुसूचनायायमनुवादः । कंटकाः शत्रवः । तथा च बाहुजातत्वाद्बाहुव्यापारं क्षतात्त्राणां क्षत्रियाणां वृत्तिं कृतवानिति भावः । विशो विडभिमानी वास्तुः कृष्यादिव्यापाराश्च । लोकस्य वृत्तिकरीर्जीविका हेतवः । आद्यव्याख्याने जातौ बहुवचनं । कृष्यादिकरणरूपां वृत्तिं वैश्ये दर्शयति ॥ वैश्य इति । तदुद्भव ऊरूद्भव इत्यनुवादः पूर्ववद्धेतुसूचनाय । करोर्वोः सामीप्यात्करोद्भवं व्यापारमूरुजस्य वृत्तिं कृतवानिति । वार्ता कृष्यादिरूपिकां जीविकां । विट् शब्दोक्तकृष्यादिव्यापारकर्तृत्वाद्वैश्य इति निर्वचनमत्र ज्ञातव्यं । शुश्रूषा त्रिवर्णानां सेवा किमर्थं कर्मसिद्धये । अत्र कर्म शब्देन शूद्रजन्मापादकमदृष्टं ग्राह्यं । तस्य सिद्धये साफल्याय । तस्यास्तदर्थं । तां कर्तुमिति यावत् । पुरा पूर्वं शूद्रस्तज्जात्यभिमानी कृतिर्भगवतः पद्भ्यां जात इत्यर्थः । अनेन पादोद्भवत्वात्पादोद्भवं कर्म सेवाख्यं तस्य वृत्तिं कृतवानित्यपि ज्ञातव्यं । ननु शुश्रूषया कथं शूद्रजन्मापादकादृष्टस्य साफल्यमित्यत आह ॥ यद्वृत्त्येति । यस्य शूद्रस्य वृत्त्या शुश्रूषारूपया भगवदनुसंधानेन कृतया हरिस्तुष्यते । हरितोषजनकत्वमेव कर्मणां साफल्यमिति भावः । अनेन शुचा शूद्रजन्मप्राप्तोऽस्मीति शोकेन द्रवति सेवां करोतीति शूद्र इति निर्वचनं सूचितं ज्ञातव्यं ॥३३॥ तुष्यते हरिरित्युपलक्षणया सर्ववर्णवृत्त्या हरिरेवेज्य इति सूचितं । तत्कुतः किमर्थं चेत्यत आह ॥ एत इति । स्वधर्मेण स्ववृत्त्या । स्वगुरुमित्यनेन गुरुत्वादिहेतुरुक्तः । आत्मनोऽतःकरणस्य विशुद्धयर्थ्यमित्यवांतरफलनिरूपणं । यस्मात्स्माद्वृत्तिभिर्जीविकाभिः सह जाता इत्यनेन पितृत्वात्पतित्वाच्चेति हेतुद्वयमुक्तमिति ज्ञातव्यं । ॥३४॥ एवं विधस्य हरेर्माहात्म्यं साकल्येन निरूपयितुमिच्छाऽपि कर्तुमशक्येत्याह ॥ एतदिति । अत्र देवकर्मात्मरूपिण इति देवताद्यभेदः प्रतीयतेऽतोऽत्र विवक्षितान्देवादिशब्दार्थान्प्रमाणेनैव दर्शयति ॥ अधिकत्वादिति । राजा भट्टारको देव इत्यभिधानात् । नरदेव इत्यादिप्रयोगाच्च । देवशब्दाधिक्यार्थे ण् प्रत्यय इति भावः । मूलं कारणभूता प्रकृतिः प्रयत्नो यस्य स तथा । मूलकर्तृत्वादेव कर्मेति भण्यत इत्यर्थः ॥ व्याप्तत्वादिति । आङ् पूर्वकत्वात्तनोतेर्डमन् प्रत्यय इति भावः । आत्मशब्द आत्मेति शब्दो यस्य स आत्म शब्दवाच्य इत्यर्थः । श्रीपतित्वादित्यन्यत्रोक्तस्य माधव शब्दस्य व्याख्यानं ॥ ततश्चायं श्लोकार्थः । भो क्षत्तः विदुर । दैवं सर्वदेवाधिकं कर्ममूल-

कर्तृभूतमात्मा व्याप्तं रूपमस्यास्तीति दैवकर्मात्मरूपी तस्य दैवकर्मात्मरूपिणो भगवत एतद्योगमायया जगदुपायरूपेच्छाया बलोदयं सामर्थ्यप्रसरं कः पुमान्साकल्येनोदाहर्तुं निरूपयितुं श्रद्दध्यादिच्छां कुर्यात् । अनंतत्वेन साकल्येन ज्ञानस्यैवासंभवात् । निरूपयितुं दूरतोऽपास्तमिति भावः ॥३५॥ यद्यपि साकल्येन निरूपयितुमशक्तोऽस्म्यथाऽप्यन्यस्य हरिव्यतिरिक्तस्याभिधामभिधानं यस्याः साऽन्याभिधानां सतीं विद्यमानां स्वां गिरं संस्कर्तुं शुद्धां कर्तुमन्याभिधानेनासतीं सतीं कर्तुमित्यर्थः । अत एव क्वचिदन्याभिधां सतीमित्येव पाठः । तत्रान्याभिधा चासावसती चेति विग्रहः ॥३६॥ यथामति कीर्तनश्रवणयोरप्यभावे बाधकं सूचयन्नाह ॥ एकांतेति । वचसो वागिंद्रियस्य सुश्लोकमौलेः समीचीनकीर्तिमतां श्रेष्ठस्य हरेर्गुणानुवादं गुणानामभिवदनमेकांतलाभमव्यभिचारितपुरुषार्थसाधनं । आहुर्ज्ञानिनः । श्रुतेः श्रवणेंद्रियस्य चोपकृताया निरूपितायाः संप्रयोगं सम्यक् प्रकर्षेण संबंधं । आदरातिशयेन श्रवणमिति यावत् । उत शब्द एकांतलाभमाहुरित्यस्यानुकर्षणार्थः । तथा च यथाशक्ति श्रवणकीर्तनयोरप्यभावे वाक्श्रवणयोर्वैयर्थ्यं बाधकं सूचितमिति ज्ञातव्यं । संप्रयोग इति पाठेऽपि विभक्तिविपरिणामेनैकांतलाभमित्यस्यानुकर्षणार्थ उत शब्दः ॥३७॥ साकल्येन हरिज्ञानं न कस्याप्यस्तीत्येतत्कैमुत्येनोपपादयन्नाह ॥ आत्मन इति । आत्मनः परमात्मन आदिना कविना ब्रह्मणाऽपि योगेन भक्तिध्यानादिरूपेण विपक्वया परिपाकमाप्तया धिया सकलसदागमार्थभूतगुणक्रियारूपावगाहनशक्त्या बुद्ध्या किं साकल्येनावसितो नैवेति काक्वा योज्यं । तथा चान्यैर्भगवान् तथा नावसेय इति किं वाच्यमिति भावः ॥३८॥ नन्वतियत्नेन भगवान् ज्ञानिभिः कथंचित्साकल्येन ज्ञातुं शक्य इति मंदाशंकामपाकुर्वन्नुक्तमेव कैमुत्यं विशदयति ॥ अत इति । अत इति परामृष्टं पूर्वोक्तं हेतुं दर्शयाति ॥ यस्त्वयमिति । अत्रात्मा न वेदेत्यत्र विवक्षितमात्म शब्दाभिधेयं दर्शयाति ॥ आत्मा न वेदेति । अत्र न वेदेत्यस्यानुवादो भगवत्परोऽयमात्म शब्दो न भवति । तस्य सर्वज्ञत्वेन न वेदेत्यस्य बाधितत्वप्रसंगादिति दर्शयितुं यत इत्युत्तरश्लोकेऽहं शब्दोऽस्मदादेशरूपो मैत्रेय पर इति प्रतीतिवारणायाह ॥ अहं रुद्र इति । तथा च मकारांतमव्ययमिदं । अहंकारतत्त्ववाचितदभिमानिरुद्रपरमेव । अन्यथा ऋषेर्देवापेक्षया पूर्वमुपादानस्यासंभवादिति भावः । आत्माहं शब्दयोर्ब्रह्मरुद्रवाचकत्वे निमित्तं तदज्ञेयरूपवाक्यार्थं च प्रमाणेनैव दर्शयाति ॥ गुणेति ।

ब्रह्मा आत्मशब्दवाच्यः । गुणपूर्तेः स्वयोग्यगुणपूर्णत्वात् । तथा चाप्नोतीत्यात्मा स्वयोग्यगुणानिति सामर्थ्याल्लभ्यत इति भावः । हरो रुद्रोऽहीनत्वतोऽहेयत्वतः । तथा च नञुपपदस्योहाक् त्याग इत्यस्येदं रूपमिति भावः । अहं शब्दोऽहं शब्दवाच्य इत्यर्थः ॥ तथाऽपीति । गुणपूर्त्यादिमत्वेऽपीत्यर्थः । परिपूर्णं यथा स्यात्तथा न जानीम इत्यर्थः । भगवतो मायामित्यत्र माया शब्दस्यानिर्वाच्याविद्यारूपत्वप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ भगवत इति । अत्र प्रमाणमप्याह ॥ मायत्विति । तु शब्दोऽवधारणे । महिमैवेति संबंधः । द्वितीयस्तु शब्दः प्राचुर्यस्य गुणाभिसंबंधित्वरूपविशेषार्थः ॥ मयडिति । अत्र यद्यपि मय शब्देन मयट् प्रत्ययरूपः प्रकृत्यभावात् । तथाऽपि तत्समानार्थकः । तस्माच्च स्वार्थे ण् प्रत्यय इति भावः । आत्मवर्त्मेत्यत्र वर्त्म शब्दस्य मार्गार्थत्वप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ आप्नोति । गतिरवगतिः स्वयोग्यतानुसारेण परमात्मज्ञानवानित्यर्थः । वर्त्म शब्दो गतेर्लक्षक इति भावः । अत्रान्वयप्रदर्शनाय कर्तृत्ववाच्यात्मपदं प्रथमतो व्याख्यायानंतरं तस्याहं शब्दस्य चैकस्मिन्प्रमाणे व्याख्यातत्वाल्लाघवाय वक्ष्यमाणाहं शब्दं च व्याख्यायानंतरं कर्मवाचकं भगवतो मायामित्येतद्व्याख्यातं । ननु नेदं कर्मवाचकं । द्वितीयार्थेऽप्यात्मवर्त्मेति द्वितीयां तस्य कर्मवाचकस्य सत्वादित्याशंकापरिहारायात्मवर्त्मेत्येतत्प्रथमांततयैव विच्छिद्यांते व्याख्यातमित्यवगंतव्यं ॥ ततश्चायं श्लोकद्वयस्यार्थः ॥ अत इति परामृष्टं पूर्वोक्तहेतुं विशदयति ॥ यदिति । यद्यतः । च शब्दोऽप्यर्थः । आत्मस्वयोग्यगुणपूर्णो ब्रह्मा स्वयमितराधिकार्यपेक्षया मुख्यत आत्मवर्त्माऽपि परमात्मावगतिमानपि मायिनां ज्ञानिनामपि स्वयोग्यतामतिक्रम्याधिकज्ञानाय प्रयत्ने मोहिनीं बुद्धिभ्रंशकरीं भगवतो मायां महिमानं साकल्येन न वेद । अपरे रुद्राद्याः साकल्येन न विदुरिति किमुवाच्यमित्यर्थः ॥३९॥ अत्र यतो वाचो निवर्तंत इत्याद्याः श्रुतयः प्रमाणमित्याशयेन ता अर्थतोऽनुवदन् भक्त्यातिशयात्तद्गुणविशिष्टं भगवंतमंते नमति ॥ यत इति । वाचो वेदाभिमानिन्यो देवता मनसा चित्तरूपमनोऽभिमानिना ब्रह्मणा सहाप्राप्य । तद्गुणावसानामिति शेषः । यतो यद्गुणौघवर्णनान्निवर्तंते । अहमहंकाराभिमानी रुद्रः । अन्ये इमे तत्त्वाभिमानिनो देवाश्चाप्राप्य यतो निवर्तंते तस्मै नम इत्यन्वयः । अत्र पूर्वार्धे । यतो वाच इति श्रुत्यर्थानुवादबलादुत्तरार्धेऽपि तथाविधश्रुत्यर्थस्त्वनूद्यत इति ज्ञातव्यं ॥४०॥ इति श्रीभागवतटिप्पण्यां

सप्तमोऽध्यायः ॥ ३–७ ॥ ॥

॥ हरिः ॐ ॥ स्वज्ञानार्थेन प्रश्नेन वक्तुः प्रीतेरपि जननात्प्रीणयन्निवेत्युक्तं । वस्तुतस्तत्प्रीतिर्नोद्दिश्येति ज्ञापनायेव शब्दः । भारत्या वाचा ॥१॥ कालवृत्त्यां तु मायायां गुणमय्यामधोक्षज इत्यादिना सत्त्वादिगुणात्मिकां प्रकृतिमुपादानीकृत्येश्वरो जगत्सृजतीत्युक्तं । तत्र विदुरश्चोदयति ॥ ब्रह्मन्निति । चिन्मात्रस्य जडामिश्रस्य । अत एवाविकारिणः क्रिया निर्गुणस्य सत्त्वादिगुणात्मकप्रकृतिविधुरस्य गुणाः सत्त्वादिगुणात्मकप्रकृतिबंधाः कथं युज्येरन् विरोधान्न कथमपीत्यर्थः । लीलयेति चेत्तत्राह ॥ लीलया चेति । न हि कश्चित्प्रेक्षावान् लीलयाऽऽत्मनो दुःखापादकमुपादत्त इति संभवतीति प्रश्नाभिप्रायः ॥ २ ॥ ननु लोके सुखप्राप्त्यर्थं क्रीडायां प्रवृत्तिदर्शनाद्भगवानपि सुखप्राप्त्यर्थं क्रीडयैव सृष्ट्यादिकं करोतीत्यत आह ॥ क्रीडाया इति । अत्र विवक्षितच्छेदं दर्शयन्व्याख्याति ॥ क्रीडाया इति । तथा च क्रीडायामुत् यत् इति पदत्रयमत्र विवक्षितं । अन्यथा क्रीडायामुद्यत इति छेदेऽर्हस्येति षष्ठ्यंतस्यानन्वयप्रसंग इति भावः ॥ अर्हस्येत्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ अर्हस्येति । अन्यत इत्यस्यापि प्रकृतोपयुक्तमर्थं दर्शयति ॥ अन्यत इति । मुदिति मुच्छब्देन रतेः प्रकृतत्वात्तदन्या तद्विरुद्धा रतिरेवात्र व्याख्येयेति भावः ॥ ततश्चायं श्लोकार्थः ॥ यतः क्रीडायाः सकाशात् मुत् सुखं अर्हस्य क्रीडाजन्यसुखयोग्यस्य । अपूर्णसुखस्येति यावत् । भवति स्वतः क्रीडादिसाधनमनपेक्ष्य तु विशेषेण तृप्तस्य । पूर्णसुखस्येति यावत् । कथं क्रीडासाध्यमुत् न कथमपीत्यर्थः । किंच क्रीडासंभवेन क्रीडैव तस्य यदा न संभवति तदा तज्जन्यं सुखं तस्य नास्तीति किं वाच्यमित्याशयेनाह ॥ काममिति । कामं यथा स्यात्तथा क्रीडितुमिच्छाऽन्यतोऽरतितो रत्यभावाद्भवति । सदा निर्वृतस्यारतिशून्यस्यात्मनः कथंचित्क्रीडिपा संभवति न कथमपीति ॥३॥ निर्गुणस्य गुणा अविकारिणः क्रियाश्च भ्रांतिकल्पिता एव न सत्या अतः को विरोध इत्यत आह ॥ अस्राक्षीदिति । गुणमय्या रजोरूपया तथा सत्त्वरूपया तमोरूपया प्रत्यभिधास्यति संहरिष्यतीत्येतच्छुत्यादिसिद्धमतः कथं भ्रांतिकल्पितं स्यादिति भावः ॥ ४ ॥ भगवान्न कदाऽपि प्रकृतिबंधार्हः । सर्वदा तद्विरोधिस्वसाक्षात्कारत्वादिति युक्त्याऽपि प्रकृतिबंधस्तस्य न घटत इत्याह ॥ देशत इति । देशकालादिभिरस्मदाद्यवबोधस्य लोपो भवति न

तथा भगवतावबोधस्य नित्यत्वादिति भावः ॥५॥ पुनः शंकते ॥ भगवानिति । अत्र पूर्वार्धेऽप्रसक्तं दुर्भगत्वादिकं कथमुत्तरार्धे आक्षिप्यत इत्याशंकापरिहाराय पूर्वार्धे दुर्भगत्वादिप्रसक्तिं दर्शयति ॥ दुर्भगेति । दुर्भगत्येतद्भावप्रधानं । ततश्च दुर्भगत्वं क्लेशकरशरीरस्थत्वादित्यर्थः । अनेन सर्वक्षेत्रेऽवस्थित इत्येतद्यत इत्यध्याहारेण योजनीयमिति सूचयति । तस्यापि भगवतोऽपि भाव्यमिति पूर्वार्धे शेषोक्तिः । कुत इत्यस्य प्रश्नार्थत्वप्रतीतिवारणायोत्तरार्धतात्पर्यमाह ॥ न चेति । तद्दुर्भगत्वादिकं श्रुत्यादिविरोधादिति भावः । ततश्चायं मूलार्थः ॥ भगवानेको मुख्यः सर्वक्षेत्रेषु शरीरेषु प्रेरकतया व्यवस्थित इति तावच्छ्रुत्यादिप्रसिद्धं । शरीराणि च कर्मभिरारब्धानि स्वांतस्थस्य दुर्भगत्वादिकमापादयंति । यत एतादृशः सर्वक्षेत्रेषु व्यवस्थितोऽतस्तस्यापि दुर्भगत्वादिकं देवदत्तवद्भाव्यं । न च तद्युज्यत इत्याह ॥ अमुष्येति । भगवत इत्यर्थः । कुतो न कुतोऽपि । निरनिष्टो निरवद्य इत्यादिश्रुतिविरोधादिति भावः । अतो मे संशय इति शेषः ॥६॥ एतस्मिन्नज्ञानसंकटे तत्त्वनिश्चयाभावमूलके संशये सति मे मनः खिद्यते कश्मलं प्राप्नोति । तत्संशयनिमित्तं कश्मलं मानसं बाह्यांतःकरणगं पराणुदापाकुरु ॥७॥ स्मयन्निवाहंकारं कुर्वन्निव । इव शब्दोऽल्पार्थे । दशरात्रैर्भुक्तामिवेति प्रयोगात् । तथा चाल्पं हास्यं कुर्वन्कथमयमपरोक्षज्ञानी निश्चिततत्त्वो मां प्रतिप्रश्नं करोतीति मंदस्मितं कुर्वन्नित्यर्थः । गतस्मयो विगताहंकारः ॥८॥ दुर्भगशरीरस्थस्यापि दुर्भगत्वाद्यप्राप्तिर्माहात्म्यातिशयादिति परिहरति ॥ सेयमिति । अत्र माया शब्दस्याविद्यार्थत्वप्रतीतिनिरासाय विवक्षितमर्थं दर्शयति ॥ सेयमिति । यत उक्तं तदिति पदत्रयमध्याहृत्यावशिष्टपदत्रयतात्पर्यमाह ॥ तस्येति । ईश्वरस्य विमुक्तस्येत्यर्थः । कार्पण्यं दुर्भगत्वं । बंधनं कर्मलेपः । आदिपदेन क्लेशः । अनेन द्वितीयार्धतात्पर्यमुक्तं । न युज्यत इत्यादिना । न्याय्यमिति पदस्यायं हि भगवन्माहिमेत्युक्तस्याभिप्रायमाह ॥ दुर्भगादीति । अत्रापि दुर्भगमिति भावप्रधानं । दुर्भगत्वाधिकरणशरीरस्थस्यापीत्यर्थः । तद्दोषाः कार्पण्यादयस्तेषामस्पर्शो संबंधस्तन्महिमाप्रयुक्त इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ ईश्वरस्य कार्पण्यं दुर्भगत्वं विमुक्तस्य नित्यमुक्तस्य बंधनं कर्मलेपः । उत शब्दात्क्लेशादिक च । येन कारणेन प्रमाणैर्विरुध्यते तेन तन्न युज्यत इति यत्त्वयोक्तं तन्न्याय्यं युक्तं । ननु कथं युक्तं शरीरस्थत्वाद्यज्ञदेवदत्तवद्दुर्भगत्वादिप्राप्तिरिति युक्तिविरुद्धत्वादित्यत उक्तं ॥ इयमिति । अयं भगवन्म-

हिमेत्यर्थः । इयं केत्यत उक्तं ॥ सेति । दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्श इत्यर्थः । तथा च दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्शो यः सा भगवतो माया तन्महिमैव तत्प्रयुक्तैवेत्यर्थः । यथा दह्यमानगेहांतर्गतस्याग्निस्तंभनादिसामर्थ्यवतो न दाहस्तथेति भावः । अनेन विवक्षितमाहात्म्याभावरूपोपाधिग्रस्तोक्तयुक्तिरतो न तद्विरोध इत्युक्तं भवति । एतेनैव निर्गुणस्य कथं गुणा अविकारिणः कथं क्रिया इति प्रश्नद्वयमपि परिहृतमिति ज्ञातव्यं । गुणानां संबंधेऽपि महिमातिशयेन तन्निमित्तदोषास्पर्शेन निर्गुणत्वाद्युपपत्तेः । सृष्ट्यादिरूपक्रियावत्वेऽपि तत्साध्यक्लेशाद्यभावेनाविकारित्वसंभवाच्च । एतत्सूचनायैव तद्दोषास्पर्श इति सामान्यत एव भगवत्पादैरुक्तं ॥९॥ ननु देहगतस्येश्वरस्य क्लेशादिरूपसंसारो न चेत्स कस्य भवति । जीवस्येति चेत्तस्यापीश्वरप्रतिबिंबस्य चिन्मात्रस्यैतादृशदुःखाद्यनुभवरूपसंसारे कारणाभावादित्यतो जीवस्योक्तविधसंसारे कारणभूतां भ्रांतिं दृष्टांतमुखेनोपपादयति ॥ यथेति । यथार्थेन बाह्यस्वशिरच्छेदादिना विनाऽपि । उप समीपे द्रष्टुः । स्वप्नद्रष्टुरिति यावत् । हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति समीपस्थस्तथा स्वप्नमिति वचनात् । स्वशिरच्छेदनादिको बाह्यस्वशिरच्छेदादिरूपोऽर्थः प्रतीयते ममेदं शिरश्छिन्नमिति भ्रांत्या प्रतीयते । तथाऽमुष्य चिन्मात्रस्य पुंसो जीवस्यात्मनोऽस्वतंत्रस्य स्वस्य विपर्ययो देहादावहंममेत्यादिरूपं स्वातंत्र्यं भ्रांत्यैव प्रतीयते । तयैव तस्य संसार इति शेषः ॥१०॥ नन्वेवं स्वातंत्र्यवद्भ्रांतिमूलोऽयं दुःखादिरनर्थोऽपि जीवस्य किं मिथ्याभूत एव दृश्यते किमित्याशंकायां नेति सदृष्टांतमाह ॥ यथेति । तत्कृतो जलरूपोपाधिकृतः कंपनादिर्गुणो जले प्रतिबिंबितस्य चंद्रमसः सन्नपि दृश्यते । न त्वसन् । तथाऽनात्मनोंतःकरणस्य गुणो दुःखादिद्रष्टुस्तदनुभवितुरात्मनो जीवस्य सन्नेव दृश्यते न मिथ्याभूत इत्यर्थः । तत्सत्यत्वे साक्षिणं प्रमाणयितुं द्रष्टुरित्युक्तं ॥११॥ ननु संसारस्य सत्यत्वे कथं तन्निवृत्तिरूपो मोक्षः सत्यस्यानिवृत्तेरित्यत आह ॥ स वा इति । वै शब्दः प्रमाणप्रसिद्धिद्योतकः । स दुःखादिरूपः संसारः । निवृत्तिधर्मेण जातेन भक्तियोगेनापरोक्षज्ञानद्वारा जातया वासुदेवानुकंपया वासुदेवप्रसादेन तिरोधत्ते विलीयते । इह जीवे । शनैः साधनोत्कर्षानुसारेण सत्यस्यापि निगडबंधस्य सेवादिजनितराजप्रसादेन निवृत्तिदर्शनादिति भावः । ब्रह्मन्कथं भगवत इत्यारभ्य तिरोधत्ते शनैरिहेत्यंतस्य तात्पर्यं श्रुतिस्मृतिभ्यां दर्शयति ॥ कथमिति । इह देहे विद्यमानः परो

देवः कथं कर्मबंधनैर्न लिप्येत लिप्यतैव । जीववद्यदि लिप्येत तर्हि दुःखी कथं न भवेद्भवेदेव । यदि दुःखी स्यात्तर्हि कुत ईश्वरो न कुतोऽपि । भवति चेश्वरोऽतो दुःखायोगान्न कर्मबंधनं तस्येत्येव वक्तव्यं । दुर्भगदेहस्थत्वयुक्त्या जीववत्कर्मबंधनं च तस्य प्राप्नोत्यतः संशय इत्यर्थः । अनेन भगवानेक एवैष इत्यादिकमुक्ततात्पर्यं। सेयं भगवतो मायेत्यस्यार्थमाह ।। महिमेति । यद्देहस्थ इत्यनेनोक्तहेतुर्महिमाभावरूपोपाधिग्रस्त इत्युक्तं भवति । नन्वेवमीश्वरो न कर्मबंधवान्महिमातिशयवत्वादित्युपाध्यभावेनानुमेयं । तत्राप्रयोजकत्वमित्याशंकायां विपक्षबाधकतर्कं सूचयंस्तस्य विपर्यये पर्यवसानं दर्शयति ।। यद्दुःखीति । स परमात्मा यद्यस्माद्दुःखी ईशानः सर्वप्रेरकश्च श्रुत्यादिसिद्धस्तस्मान्न बद्ध्यत इत्यन्वयः । अनेनेश्वरो बंधवान्स्यात्तदा दुःखी स्यात्ततश्च सर्वस्येशानो न स्यात् । भवति चेशानोऽदुःखी च तस्मान्न बंधवानिति तर्कः सूचित इति ज्ञातव्यं । ननु यदि देहस्थस्यापीश्वरस्य बंधाभावे महिमा प्रयोजकस्तदा सेयं भगवतो मायेति मायायास्तत्प्रयोजकत्वं मूले कथमुक्तमित्यत आह ।। मायेति । ननु यदि माया शब्दो महिमार्थस्तदा मायामयो भगवानिति श्रौतप्रयोगेन तस्य मिथ्यात्वमुच्यमानमनुपपन्नं स्यादित्याशंकायां भगवति मायामय शब्दवाच्यत्वमन्यथोपपादयति ।। प्रधानमिति । यतः प्रधानं वस्तु मयमित्याहुरतः प्राधान्यान्निमित्तान्मयता मय शब्दवाच्यता भवेत् । यतः एवं मायामयशब्दयोरर्थोऽतो महामायं प्रधानमहिमानं भगवंतं मायामयं मायामय शब्दवाच्यमाहुः । मायाप्रधानभूता माया महिमा यस्येति विग्रहमभिप्रेत्येति भावः । अग्न्याहितादिवत्परनिपातः । अविद्याकल्पितत्वमर्थो नेति सूचयितुमनामय इत्युक्तं । अविद्यादिदोषास्पृष्टमित्यर्थः । भगवान्प्राकृतदेहबद्धो न भवतीत्यत्र युक्त्यंतरमपि स्मृत्या दर्शयति ।। अलुप्तेति । सर्वदा बंधविरोधिस्वसाक्षात्कारवत्वादित्यर्थः । प्राकृतदेहवान्प्रकृतिनिर्मितदेहबद्धो न भवतीत्यर्थः । अनेनाविलुप्तावबोधात्मेत्येतदुक्तार्थं । ननु निर्गुणस्य गुणा अविकारिणः क्रियाश्च भ्रांतिकल्पिता एवेति कुतो न समाधीयत इत्यत आह ।। न चेति । भ्रांतिर्भ्रांतिकल्पितं हि यस्माद्दानवा एव भ्रांतिकल्पितत्वं वदंतीति भ्रांतिवादाः । अतो भ्रांत्याऽस्य जगतः संबंधो विषयाविषयिभावरूपः क्वच न कस्मिन्नपि काले न युज्यते । सत्यत्वश्रुतिविरोधादिति हि शब्दार्थः । यद्वा । भ्रांति शब्देनाविद्या लक्षणीया । तथा च न सृष्ट्यादिकमीश्वराविद्याकल्पितं हि यस्माद्दानवा

एवेश्वरस्याविद्याकल्पितं वदंति न ज्ञानिनोऽतोऽस्य सर्वज्ञस्येश्वरस्य भ्रांत्याऽविद्यासंबंधः कदाऽपि नेति योज्यं । अनेनास्राक्षीद्भगवानित्येतदुक्तार्थं । नन्वीश्वरस्य प्राकृतबंधाभावे देहबंधरूपः संसारः कस्य भवति । जीवस्येति चेत्तस्यापि चिन्मात्रस्वभावस्यैतादृशदेहसंबंधे कारणाभावादित्यत आह ॥ भ्रांत्येति । भ्रांत्या कारणभूतया संसारः सत्य एव । भवतीति शेषः । अनेन यथार्थेन विनेत्येतदुक्ततात्पर्यं । ननु संसारस्य सत्यत्वे कथं तन्निवृत्तिरित्यत आह ॥ ईशेति । ननु कीदृशी संसारकारणीभूता भ्रांतिः । तस्याश्चानिवृत्तौ कथं संसारस्येशज्ञानाद्विलय इत्यत आह ॥ भ्रांतिरिति । देहाद्यभिमतिर्देहादौ ममेदमिति स्वातंत्र्याभिमानः । अतः प्राकृतात्ज्ञानादीशज्ञानादित्यर्थः । क्वचिदीशज्ञानादित्येव पाठः । तथा च कारणीभूतभ्रांतिनाशे तत्कार्यस्य संसारस्यापि भगवत्प्रसादेन नाश इति भावः । अनेन स वै निवृत्तिधर्मेणेत्येतदुक्ततात्पर्यं ॥१३॥ तर्हि सर्वक्लेशनिवृत्तिः कदेत्यपेक्षायामाह ॥ यदेति । अत्रेंद्रियाणामुपरामो नैश्चल्यमित्यन्यथाप्रतीतिनिवारणाय प्रकृतोपयुक्तमर्थं सूचयन्नर्थ शब्दार्थमाह ॥ इंद्रियेति । तथा च जडेंद्रियाणामुपरामो नाश इति वा स्वरूपेंद्रियाणामुप भगवत्समीपे रामो रमणमिति वा तस्यार्थ इति भावः । ननु धर्मादिपुरुषार्थत्रयस्येंद्रियोपरामरूपत्वाभावात्कथमेतद्व्याख्यानमित्यत आह ॥ मुक्तिरिति । ॥ ततश्चायं श्लोकार्थः ॥ परे सर्वोत्तमे हरौ जीवेन द्रष्टात्मन्यपरोक्षीकृतस्वरूपे सति यदेंद्रियोपरामाख्यार्थः पुरुषार्थः । मुक्तिरिति यावत् । तदा कृत्स्नशः कार्त्स्न्येन सर्वे क्लेशा विलीयंते आत्यंतिकमुच्छिद्यंते पुनस्तत्सजातीयोत्पत्तिर्न भवतीत्यर्थः । कृत्स्नक्लेशविलय मात्रे दृष्टांतः संसुप्तस्येवेति ॥१३॥ स वै निवृत्तधर्मेणेति मोक्षसाधननिरूपणपरे श्लोके श्रवणादीनामनुक्तत्वात्तानीदानीं वदंस्तेषु सप्रेमध्यानस्योत्तमत्वमपि किं पुनर्न्यायेन दर्शयति ॥ अशेषेति । गुणानामनुवादः प्रवचनं । मननमिति यावत् । तेन सहितं श्रवणमात्मानि मनसि लब्धा तच्चरणारविंदपरागाणां सेवा ध्यानरूपा तया सहिता रतिः । अशेषसंक्लेशशमं विधत्त इति किं पुनर्वक्तव्यं । अस्यार्थस्यास्वादने वा शब्दः ॥१४॥ विदुः स्वपृष्टस्य सर्वस्योत्तरदानाय मैत्रेयमभिनंदंस्तत्कृतोपकारमाह ॥ संच्छिन्न इति । सूक्तमेवासिः खड्गं तेन यद्यपि दुर्भगदेहस्थस्य हरेस्तद्गतदुःखादिभागविषयेऽनुमानमूलो यः संशयः स संछिन्नस्तथाऽप्युभयत्र मे मनः संप्रधावत्युभयकोटिकज्ञानं भवति । पुनः संशयो भक्त्येवार्थः ॥१५॥ उभयत्रेत्युक्तमेव दर्श-

यितुमाह ॥ साध्विति । अत्रात्ममायायनमित्यस्य विवक्षितमर्थं दर्शयति ॥ स्वरूपेति । स्वरूपेत्यात्म शब्दस्य सामर्थ्येति माया शब्दस्याश्रयमित्ययन शब्दस्यार्थकथनं । व्याहृतमित्यस्य विधित्वप्रतीतिनिरासायाह ॥ यद्व्याहृतमिति । तथा च तत्साध्विति साधुत्वमेव विधीयत इति भावः । अपार्थं निर्मूलं विश्वमूलमित्येतेषामेकविशेष्यपरत्वभ्रमवारणायापेक्षितमध्याहृत्य भिन्नवाक्यतया योजयति ॥ अपार्थमिति । देहसंबंधित्वं जडदेहवत्त्वं । आदिपदेन तत्प्रयुक्तक्लेशादिसंग्रहः । अपार्थं जीव इव न पुरुषार्थोपादकं । नानवाप्तमवाप्तव्यमिति वचनात् । निर्मूलं स्वातंत्र्यभ्रांत्यादिकारणशून्यं च यः सर्वज्ञ इत्यादिवचनात् । विश्वमूलमित्यत्रापेक्षितं पूरयति ॥ विश्वमूलमिति । सर्वकारणं ब्रह्म च मम ज्ञानाद्बहिर्न भवति मत्ज्ञाने विषयीकृतमित्यर्थः । यस्मादित्यर्थकस्य यद्बहिरिति यच्छब्दस्यापेक्षितं तस्मादिति पदमध्याहृत्य तस्यान्वयं दर्शयति ॥ तस्मादिति । यश्च मूढतमो लोक इति श्लोकमुत्थापयितुं मध्येऽपेक्षितं पूरयति ॥ तस्मादंतरितोऽस्मीति । अंतरितोंऽतर्गतः । मध्यस्त इति यावत् । तांचापीत्यत्रापि शब्दयोजनां दर्शयंस्तामित्यस्य परामृश्यान्वयं दर्शयति ॥ तथाऽपीति । तथा चापि शब्दस्तथाऽपीत्यर्थः । तामिति तच्छब्दः प्रतीतस्येत्यत्र प्रकृतपरामर्पक इति भावः ॥ ततश्च साधु तद्व्याहृतमिति श्लोकत्रयस्यार्थः ॥ यद्दुर्भगजीवशरीरस्थस्यापि तत्स्थक्लेशाद्यसंगित्वमात्ममायायनं स्वरूपसामर्थ्यप्रयुक्तं व्याहृतं सेयं भगवतो मायेत्यनेनोक्तं तत्साधु समीचीनं । तद्विषयेऽनुमानमूलस्य मदीयसंशयस्य तेन छिन्नत्वात्तथाऽपीश्वरस्य जडदेहवत्त्वं तद्गतक्लेशादिकं चावतारेषु प्रत्यक्षेणैवाभाति । तच्च यद्यप्यपार्थमपगतोऽर्थः पुरुषार्थो यस्मात्तथा । ईश्वरस्य जीवस्येव पुरुषार्थसाधनं । ईश्वरस्याप्तकामत्वात् । निर्मूलं च जीव इव भ्रांत्यादिकारणाभावादतो युक्तिबाधितं । तथाऽप्याभाति स्पष्टं प्रत्यक्षेणैवावतारेषु भाति । अतो न हातुं युक्तं । प्रत्यक्षस्य जात्या प्रबलत्वात् । द्वितीयां कोटिं दर्शयति ॥ विश्वमूलमिति । सर्वजन्मादिकारणं ब्रह्म च मम ज्ञानाद्बहिर्न भवति । मया जडदेहशून्यतया क्लेशादिशून्यतया च कृतमस्तीत्यर्थः । जडदेहाभावाद्युपपादनायैव विश्वमूलमित्युक्तं । सर्वकारणे जडदेहसंबंधादेरुत्पादकासंभवेनासंभवादिति भावः । यद्यस्मादेवं तस्मादुभयत्रापि हरेर्जडदेहवत्त्वादौ तदभावे च मे मनः संप्रधावति । हरेर्जडदेहवत्त्वादौ प्रत्यक्षमाश्रित्य पुनः संशयो भवतीत्यर्थः । तस्मान्मध्यस्थोऽस्मि ॥१६॥ अस्तु मध्यस्थत्वं ततः किमित्यत

आह ॥ यश्चेति । मूढतमः सर्वथा ब्रह्मज्ञानशून्यो बुद्धेः शास्त्रजनितब्रह्मज्ञानस्य परं परभागं । पारमिति यावत् । गतो ब्रह्मविषयकनिश्चयवानित्यर्थः । अंतरितो मध्यस्थः संशयवानित्यर्थः ॥१७॥ एतत्संशयनिराकरणे मम न पुनर्युष्मदुपदेशापेक्षा सेयं भगवतो मायेति पूर्वतनयुष्मदुपदेशविमर्शेन मयैव निराकर्तुं शक्यत्वादित्याशयेनाह ॥ अर्थाभावमिति । अपि यद्यप्येवं संशयस्तथाऽपीत्यर्थः । ईश्वरावतारे प्रतीतस्य प्रत्यक्षप्रतीतिविषयस्याप्यनात्मनो जडदेहस्य सकाशादर्थाभावमीश्वरस्य पुरुषार्थाभावं । उपलक्षणमेतत् । भ्रांत्यादिरूपसंसारकारणाभावं च युष्मच्चरणसेवया युष्मच्चरणसेवालब्धयुष्मदुपदेशार्थपर्यालोचनेन विनिश्चित्येदमित्थमेवेत्यवधार्य तां च तामपि जात्या प्रबलामुक्तप्रत्यक्षप्रतीतिमपि पराणुदे दुर्बलतया स्वार्थसाधनाक्षमां करोतीत्यर्थः । अयं भावः । सत्यं भगवदवतारेषु जडदेहवत्त्वादिकं लोकानां प्रत्यक्षत एव प्रतीयत इति । तथाऽपि न तत्सत्यं । उपजीव्यागमार्थसंग्राहकयुष्मद्वचनार्थपर्यालोचनया विरुद्धत्वात् । तथाहि । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीदित्याद्यागमे च कृष्णस्य निरानिष्ठो निरवद्य इत्याद्यागमोक्तं विष्णुत्वं निश्चित्य कृष्णे दोषग्राहिप्रत्यक्षं विष्णौ दोषग्राहीति वक्तव्यं । अन्यथा कश्चिदयं दोषी स्यान्न विष्णुर्दोषीति । अतो निरनिष्ठ इत्याद्यागमस्योक्तप्रत्यक्षोपजीव्यत्वं । सेयं भगवतो मायेति युष्मद्वचनस्य तदर्थानुवादरूपत्वात् । उक्तप्रतीतेः स्वोपजीव्यागमार्थसंवादियुष्मद्वचनार्थपर्यालोचनया विरुद्धत्वं तस्मान्न स्वार्थसाधकत्वमतो न तन्मूलसंशयावकाश इति ॥१८॥ हरिचरणारविंदसेवैव पुरुषार्थहेतुत्वादभ्यर्थनीया किमस्मच्चरणसेवयेत्यत आह ॥ यत्सेवयेति । येषां युष्माकं सेवया मधुद्विषः । उपलक्षणयाऽध्यात्मगतमध्यादिसर्वदैत्याभिभावकस्य हरेः पादयोस्तीव्रो दृढतरो रतिरासो भक्तिलक्षणोत्सवो, व्यसनं संसारमर्दयाति नाशयतीति व्यसनार्दनः । तथा च युष्मच्चरणसेवा हरिचरणसेवा साधिकेति भावः ॥१९॥ ननु तर्ह्यस्मदादिसेवया कुतः सर्वसंसारं नार्दयंतीत्यत आह ॥ दुरापेति । वैकुंठलोकमार्गभूतेषु महत्सु । यत्र येषु जननं जननादिरूपसंसारमर्दयतीति जनार्दनः । तथा च पूर्वार्जितपुण्यसंपन्नैः कैश्चिद्भिरेव भवादृशानां सेवा लभ्या न सर्वैरिति भावः । अत्र तत्त्वनिश्चयवतो विदुरस्योभयत्र मनो धावत्यंतरितोऽस्मीत्यादीनां संशयवचनमुत्तरत्र च ब्रूहि मेऽज्ञस्येत्यज्ञानवचनं च कथं । असत्यवचनेन दोषस्मरणादित्याशंकां प्रमाणेनैवापाकरोति ॥ आत्म-

अहींद्रस्य शेषस्य भोगैर्देहावयवैरधिवीतकल्कं संवेष्टितत्वचं । चंदनवृक्षोऽपि सर्पैर्वेष्टितो भवति ॥२९॥ पर्वतसाम्यं प्रकारांतरेण दर्शयति ॥ चराचरौक इति । भगवानेव महीध्रः । पर्वतस्तं चराचराणमोको निवासस्थानं । पर्वतोऽपि तथा । अहींद्रस्य शेषस्य बंधुः । पर्वतोऽप्यहींद्राणां बंधुः । सलिलेन प्रलयोदकेनोपगूढमावृतं । पर्वतोऽपि निर्झरोदकैरावृतः । किरीटसहस्राण्येव हिरण्यशृंगाणि यस्य स तत्तथा । पर्वतोऽपि मेर्वादिस्तथा । यथा पर्वतस्य गर्भे कचिद्रत्नमाविर्भवति तथाऽऽविर्भवत्स्पष्टं दृश्यमान कौस्तुभरत्नं गर्भे शरीरप्रदेशविशेषे यस्य तं ॥३०॥ वनमालया निवीतं संवेष्टितं । कथं भूतया । स्वकीर्तिमय्या स्वकीर्तिरूपया शुभ्रतासाम्यात् । ननु वनमालायां मधुव्रतैः शोभा दृश्यते । कीर्तौ तु कथमित्यत उक्तं ॥ आम्नायेति । आम्नाया एव मधुव्रतास्तैः श्रीः शोभा यस्याः सा तथा तया कीर्तैर्वेदैः शोभा प्रतिपाद्यतयैवेति ज्ञातव्यं । पुष्पमय्या वनमालाया औषधिसौमनस्य वनस्रज इति पूर्वमुक्तत्वादत्र कीर्तिरेव वनमालात्वेन वर्णितेति ध्येयं । तथा च वेदप्रतिपाद्यशुद्धकीर्तियुक्त इत्युक्तं भवति । सूर्येंद्वित्यादिकमन्योपलक्षकमित्याशयेन व्याख्याति ॥ सूर्येंदुवाय्वग्न्यादिभिरिति । त्रिधामपदार्थं दर्शयन् आगमत्रिधामभिरित्यस्यार्थमाह ॥ त्रिधाम्न इति । अगच्छद्भिरित्यगमपदतात्पर्यकथनं । सर्वदा तत्समीप एव तिष्ठद्भिरित्यर्थः । तथा च त्रिधाम्नो न विद्यते गमो गमनं येषां तेऽगमत्रिधामानस्तैरिति बहुव्रीहिः । अग्न्याहितादिवत्परनिपात इति भावः । प्राधनिकानामिदं विशेषणमिति दर्शयितुं प्राधनिकैरित्युक्तं । प्रधनं संग्रामस्तत्प्रयोजनकैरित्यर्थः । ननु तदा ब्रह्मांडांतः कश्यपादिजातानां सूर्यादीनां नष्टत्वेनाविद्यमानत्वात्कथमेतादित्याशंकायामेते सूर्यादयो मुक्ता एव विवक्षिता नामुक्ता इति प्रमाणेनैव दर्शयति ॥ मुक्तेति । अत्र वायुर्भूताभिमानी प्रवहः । हेति प्रमाणप्रसिद्धिं दर्शयाति । नन्वमुक्ता एवैते किं न स्युरित्यत आह ॥ तदन्येति । मुक्तेभ्योऽन्येपाममुक्तानामभावादन्यदमुक्तवाय्वादिकमत्र न विवक्षितमिति शेषः । अतोऽमुक्तानां वाय्वादीनां तदाभावादेव तदमुक्तं वाय्वादिकं स्रष्टुमैच्छद्ब्रह्मा । तथा च परिक्रमद्भिः रक्षणार्थं परितो धावद्भिः सूर्येंदुवाय्वग्न्यादयश्च तेऽगमत्रिधामानश्च तैर्मुक्तैः प्राधनिकैर्निमित्तैरन्यैर्दुरासदं दुष्प्रापमिति मूलार्थ इति भावः ॥३१॥ तस्मिन्समये तज्जगन्निर्माणोपयुक्ताशेषपदार्थदर्शनं तस्य नाभूदित्याह ॥ तर्ह्येवेति । तर्हि तदा तस्य भगवतो नाभिसरस्युत्पन्ने सरोजे स्थितमात्मानं स्वं ।

वियच्चेत्येतावदेव दर्शितः परं जगन्निर्माणसाधनं लोकानां विसर्गे सृष्टौ दृष्टिर्यस्य ॥३२॥ भगवत्प्रसाद एवाशेषसाधनदर्शनोपाय इत्याशयेन तत्प्रसादाय स्तुतिमेव चकारेत्याह ॥ स्वकर्मबीजमिति । स्वकर्मबीजं स्वादृष्टव्यंजकं तमीशं रजसा रजोगुणेनोपरक्तः संबद्धः । स्वकार्ये प्रवर्तत इति यावत् । तदेवाह ॥ प्रजाः सृजन्निति । विसर्गाभिमुखो विविधसृष्ट्यभिमुखोऽव्यक्तवर्त्मनि न व्यक्तं वर्त्म मार्गो यस्य तस्मिन् भगवत्यभिनिवेशितात्मा सम्यङ्निवेशितचित्तः ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ३–९ ॥ ॥

॥ हरिः ॐ ॥ ब्रह्मणः स्तुतिप्रकारं कथयति कतिपयैः श्लोकैः । तत्रादौ तावद्भगवद्दर्शनेनात्मनः कृतार्थमाविष्कुर्वन्नाह ॥ ज्ञातोऽसीति । अत्र द्वितीयार्धे त्वदन्यन्नास्ति यदप्यस्तीति प्रतिभाति तन्न शुद्धं तत् । तर्ह्यसतः कथं प्रतीतिरित्यत आह ॥ मायेति । मायागुणक्षोभात्त्वमेवोरुतया विभासीति व्याख्यानप्रसादिति भावेन विवक्षितं तात्पर्यं दर्शयति॥ स्वत इति । स्वातंत्र्येणेत्यर्थः । यथाश्नुते प्रत्यक्षादिविरोधात् । स्वत इत्यध्याहृत्य योज्यमिति भावः । अपि तत्त्वशुद्धमित्यस्यार्थमाह ॥ तदधीनमिति । अनेन स्वतो नास्तीति विशिष्टनिषेधेन लब्धस्य तदधीनतया विद्यमानार्थस्य परामर्शकस्तच्छब्द इति दर्शयति । अशुद्धं सदोषं । नन्वेवं भगवद्रूपाणामपि स्थानभेदेन भेदस्य प्रतीयमानत्वाद्भगवदन्यत्वप्राप्त्या तदधीनत्वरूपास्वातंत्र्यप्रसंग इत्याशंकापरिहाराय प्राप्तस्य चतुर्थपादस्य तात्पर्यमाह ॥ यच्चेति । उरुरित्यस्य तात्पर्यं ॥ स्वनानात्वमिति । मायागुणव्यतिकरादित्यस्य तात्पर्यं ॥ स्थानभेदादिति । वि शब्दार्थः असदेवेति । यच्च स्थानभेदात्स्वनानात्वं भाति तदप्यसदेव भातीत्यन्वयः । अत्र प्रमाणसंवादमाह ॥ एकोऽपीति । स्वगतभेदशून्योऽपीत्यर्थः । ईयते ज्ञायते । हरेः स्वगतभेदशून्यत्वे युक्तिमाह ॥ सर्वांतर्यामिण इति । क्वचिदपि रूपे । अनेन तत्तत्स्थानस्थितानां रूपाणां परस्परं हरेश्च भिन्नत्वे यत्सर्वांतर्यामित्वं श्रुत्यादिसिद्धं हरिलक्षणं तदसंभावि स्यादिति युक्तिं सूचयति ॥ ततश्चायं श्लोकार्थः ॥ सुष्ठुचिरो बहुकालो यस्य ध्यानादिरूपप्रयत्नसाध्यप्रसादस्य तस्मात्त्वज्ञातोऽसि ननु अहो । नन्वव्यक्तमचलं शांतमिति श्रुत्यादिभिर्भगवतोऽव्यक्तस्वभावत्वावगमात्कथं ज्ञातोऽसीत्युक्तमित्यत उक्तं ॥ न ज्ञायत इति । भगवतो गतिः स्वरूपं सर्वथा न ज्ञायत इत्यादि श्रुत्यादि व्याख्यानमवद्यं निंद्यं । ध्यानादिना प्रसन्नस्येदानीं भगवता मयैव

ज्ञातत्वात् । अतो देहभाजां स्वप्रयत्नेन पिशाच्चादिवद्भगवान्न ज्ञायत इतीत्येव श्रुत्यादिकं व्याख्येयमिति भावः । ननु नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुत्याऽन्यस्य द्रष्टुः परमार्थतोऽभावात्सर्वथैवाव्यक्तः किं न स्यादित्यत उक्तं । त्वत्त्वत्तोऽन्यत्स्वतो नास्तीति । तथा च नान्योऽतोस्ति द्रष्टेत्यादिश्रुतीनां स्वातंत्र्येणान्यद्रष्टृभाव एवार्थो न सर्वथा द्रष्टृभाव इति भावः । नन्वेवं सर्वेऽपि ब्रह्मवत्कुतो न भगवंतं पश्यंतीत्यत उक्तं ।। अपि तत्त्वं शुद्धमिति । तु शब्दोऽवधारणे । तदपि तदधीनमपि द्रष्टृजातं अशुद्धमेव न ब्रह्मवच्छुद्धं रागादिदोषरहितं न भवत्येवेति यावत् । अतो न पश्यंतीति भावः । नन्वेवं भगवदन्यस्य तदधीनत्वे भगवद्रूपाणामपि स्थानभेदेन भिन्नत्वावगमाद्भगवदन्यत्वे तदनधीनत्वप्रसंग इत्यत उक्तं ।। मायेति । मायायाः प्रकृतेर्गुणाः सत्त्वादयस्तेषां व्यतिकरो विकारः । नानाविधं कार्यमिति यावत् । तस्मात्तद्रूपस्थानभेदादुरुस्तत्तत्प्रेरकतया नानारूपो यद्भासि तद्विभासि विगतार्थतयैव भासि । तज्ज्ञानविषयीभूतं नानात्वमसदेवातो न भगवद्रूपाणां तदधीनत्वरूपास्वातंत्र्यप्रसंग इति भावः ।।१।। ननु यत्त्वया दृष्टं तत्सोपाधिकमेव । अर्वाचीनमुत्तमं तु ब्रह्मान्यदस्ति । तत्सर्वथाऽव्यक्तमेव किं न स्यादित्यत आह ।। रूपामिति श्लोकद्वयेन । अत्र विवक्षितोद्देश्यविधेयभावस्य स्पष्टमभानात्तं दर्शयन्व्याख्याति ।। यन्नामीति । अत्र यद्यपि रूपं यदेतदित्यादिकमप्युद्देश्यं । तथाऽपि नातः परमित्यत्र स्पष्टयुक्तिसूचकान्येव पदान्युद्देश्यतयाऽत्रोपात्तानि । ब्रह्मजनकत्वापरिच्छिन्नानंदमात्रस्य स्वरूपत्वब्रह्माश्रयत्वानां परब्रह्मलिंगत्वादित्यवधेयं । पश्यामीत्यन्वयप्रदर्शनेनाविकारमविद्धवर्च इत्येतयोरप्यनेनान्वय इति सूचयति । यच्चाश्रितोऽस्मीत्यनेन यच्छब्दस्यानुवृत्तिः सूचिता । नातः परमित्यस्यार्थः ।। ततः परमुत्तमं नास्तीति । कथमनेनोक्तशंकापरिहार इत्यतस्तं प्रकारं दर्शयति ।। अत इति । एतदपेक्षयोत्तमस्य सर्वथाऽव्यक्तस्यान्यस्याभावान्न ज्ञायत इत्यवद्यमित्यनेन यत्स्वप्रसादाज्ज्ञेयत्वमुक्तं तदुत्तमं यत्परं ब्रह्म तदपेक्षयैवेति सिध्यति नार्वाचीनसोपाधिकापेक्षयेत्यर्थः । अत्युत्तमापेक्षयेति पाठेऽपीति शब्दाध्याहारेणेत्थमेव व्याख्यानं द्रष्टव्यं । नन्वेवमादौ गृहीतामिति तस्य सादित्वोक्तिरनुपपन्नेत्यतस्तस्यार्थमाह ।। अनादिगृहीतमेवेति । गृह्यते चेत्यन्वयो व्यक्तीक्रियत इत्यर्थः । तथा चादावनाद्यनंतकाले गृहीतमेवादावादिकाले गृहीतामिति मूलार्थ इति भावः । उक्तार्थे प्रमाणसंवादं दर्शयति ।। यत्तदिति । क्षीरसागरमध्यगमित्यनेनावतारशतैक-

बीजमित्येतल्लब्धार्थो दर्शितः श्वेतद्वीपगतस्यैव नानावतारबीजत्वात् । शश्वन्निवृत्ततमस इत्यादिविशेषणतात्पर्यप्रदर्शनाय दिव्यामित्युक्तं । आनंदमात्रमित्यत्रानंदग्रहणमुपलक्षणमित्यभिप्रेत्योक्तं ॥ सत्ज्ञानानंदैकमात्रामिति । सतौ ज्ञानानंदावेकौ मुख्यौ येषां बलादीनां ते तथा । तन्मात्रं केवलं तदात्मकमित्यर्थः । परममुत्तमं । अनेनातः परत्मित्येतदुक्तार्थं । कचिद्देशे काले च । आदौ गृहीतमित्यस्य तात्पर्यं ॥ अनादिनित्यादिति । तथा च मूले नित्यत्वमपि ग्राह्यमिति भावः । अद इत्यस्य तात्पर्यं ॥ अव्यक्तादिति । तस्माज्जज्ञ इत्यनेन यन्नाभिपद्मेत्यादिकमुक्ततात्पर्यं । ननु तथाऽपि भूतेंद्रियात्मकमित्यनेन तस्य भूतेंद्रियस्वरूपत्वकथनात्कथमुत्तमत्वमित्यतस्तस्यापि विवक्षितमर्थं दर्शयाति ॥ भूतेंद्रियाणामिति । आत्मकं व्यापकमादातृ संहर्तृ वा । आत्म शब्दस्य व्याप्त्याद्यर्थत्वे प्रमाणं दर्शयाति ॥ यच्चेति । यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति भण्यत इति समग्रवाक्यप्रदर्शनायादि शब्दः । इत्यादेर्वाक्यादिति शेषः । ततश्चायं श्लोकद्वयार्थः ॥ अवबोधरसोदयेन ज्ञानश्रेष्ठाविर्भावेन शश्वत्सदा निवृत्तं तमोऽज्ञानं यस्य स तथा तस्य तव सतां मदादीनामनुग्रहायादावनाद्यनंतकाले गृहीतं व्यक्तीकृतं । यच्चावताराणां मत्स्यादीनां शतस्य मूलं बीजं । यच्च नाभौ स्थितात्पद्माख्यभवनादहमाविरासं । जातोऽस्मि । यच्च भवतः । स्वरूपं न जीवदेहवद्भिन्नं न । कुतः । आनंदमात्रं केवलज्ञानानंदाद्यात्मकमत एवाविकारमविद्धमतिवद्धं वर्चः प्रकाशो यस्य तत्पश्यामि । अनेनैवं भूते मदीयं प्रत्यक्षमेव प्रमाणमिति दर्शयाति । यच्च विश्वसृजं विश्वस्य स्रष्टृ । एकं स्रष्ट्रन्तररहितं । अविश्वं प्रपंचविलक्षणमाद्यं सर्वस्यादिभूतं भूतेंद्रियाणामात्मकमादातृ संहर्तृ वा अदः पुरुषप्रयत्नादव्यक्तं ते तव यदेतद्रूपमुपाश्रितोऽस्मि । हे परम सर्वोत्तम । अत एतस्मात्परमुत्तमं निरुपाधिकं नास्ति । अत इदमेव निरुपाधिकमुत्तमं । इदं चाहमुक्तरूपं पश्यामि । अतो यन्न ज्ञायते भगवतो गतिरित्यवद्यमित्यनेन स्वप्रसादाज्ज्ञेयत्वमुक्तं तन्निरुपाधिकस्योत्तमस्यैव सिद्ध्यतीति ॥ २ ॥ ३ ॥ एतादृशरूपं दर्शितवतस्तव नमस्कारकरणमेव प्रतिक्रिया नान्यदित्याशयेनाह ॥ यद्वा इति । हे भुवनमंगल । ध्यानात्मनो ध्यानानुगुणरूपस्य ते तवोपासकानामस्माकं मंगलाय यदिदं रूपं दर्शितं तस्मै तद्रूपात्मने भगवते नमोऽनुविधेम योग्यतामनुसृत्य कुर्मः । तर्हि किमिति केचिन्मां नाद्रियंत इत्यत उक्तं ॥ यो नादृत इति । असत्स्वमंगलेषु विषयेषु

प्रकर्षेण संगः स्नेहो येषां ते तथा तैरत एव निरयभाग्भिर्विषयवैराग्यशून्यास्त इति भावः ॥४॥ आदरं कुर्वतां तु नैवमित्याह ॥ ये त्विति । तु शब्दः पूर्वेभ्यो विशेषसूचकः । असत्प्रसंगा न भवंतीत्यर्थः । श्रुतिं गुरुमुखाद्वेदोक्तप्रकारेण श्रवणं तल्लक्षणेन वा तेन कर्णविवरैर्नीतं प्रापितं त्वदीयचरणांबुजकोशगंधं जिघ्रंति । अपरोक्षीकृत्यास्वादयंति । हे नाथ । तेषां स्वपुंसां हृदयांबुरुहान्नापैषि नापयासि । तत्र निमित्तमाह ॥ भक्त्येति । च शब्दो हेत्वर्थः । यस्मात्तु परया भक्त्या गृहीतचरणो भक्तिलक्षणदृढपाशेन बद्धपाद इत्यर्थः । अत्र गंध शब्दस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ हृदीति । तु शब्दस्तत्तदुपास्यगुणविशिष्टमिति विशेषणार्थः । तथा च त्वदीयचरणांबुजकोशं त्वदीयश्चरणः स्वरूपं । उत्तमानां स्वरूपं तु पाद शब्देन भण्यत इति वचनात् । तल्लक्षणो योऽबुजकोश उदकांतःस्थत्वसाम्यात् । तस्य यो गंधोंऽशः । गंधो लेशो विनिर्दिष्ट इति वचनात् । हृदि व्यक्तं रूपमिति यावत् । तं ये जिघ्रंतीति मूलं योज्यमिति भावः । नन्वेवं गंध शब्दगृहीतस्य हृदि व्यक्तरूपस्य हर्येकदेशत्वमेव प्राप्तं न हरिस्वरूपत्वं । अतः कथं हरे रूपं गंध इत्युक्तमित्यत आह ॥ गंधगंधवतोरिति । अंशांशिनोरित्यर्थः । क्वच न कस्मिन्नपि भगवद्रूपे इष्यते । प्रामाणिकैरिति शेषः । तथा च यस्माद्गंधगंधवतोर्न भेदस्तस्माद्धरे रूपं गंध इत्युक्तिरुपपन्नेति योजना द्रष्टव्या ॥५॥ भक्तिपाशेन बद्धचरणस्य भगवतोऽपगमाभावेऽपि किं फलमित्यत आह ॥ तावदिति । द्रविणादौ विद्यमाने भयं गते शोकः पुनः स्पृहा ततः परिभवस्तथा विपुलो लोभः पुनः कथंचित्प्राप्ते ममेत्यसदाग्रहः । आर्तिमूलं भय शोकादेः कारणं न प्रवृणीत न सर्वदा भक्तिपूर्वकमाश्रयेत् ॥ ६ ॥ शोकाद्यशुभनाशार्थं हरिचरणाश्रयणमेव सर्वदा मुमुक्षुभिः कार्यमित्याशयेन तदभावे निंदारूपार्थवादमाह ॥ दैवेनेति । दैवेन हरिणा हतधियो नष्टमतयः प्रसंगाच्छ्रवणादिरूपात्सुखलेशलवायाल्पादप्यल्पाय लोभः सम्यगनिच्छुत्वं । अकुशलान्यक्षेमकराणि ॥७॥ क्षुत्तृट् च त्रिधातवश्च वातपित्तश्लेष्माणस्तैराध्यात्मिकैरित्यर्थः । शीतोष्णवातवर्षैराधिदैविकैरितरेतरादाधिभौतिकैः । हे अच्युत । रुषा क्रोधेन च सुदुर्भरेण सुदुःसहेन कामाग्निना च मुहुरर्द्यमानाः पीड्यमाना इमाः प्रजाः संपश्यतो मे मनः । भो उरुक्रम । सीदते मत्सृष्टाः प्रजा एवं जाता इति खेदयुक्तं भवतीत्यर्थः ॥८॥ श्रवणादिरूपभगवत्प्रसंगस्य शोकस्पृहादिरूपसंसारानिवर्तकत्वं प्रपंचयन्नन्वयव्यतिरेकौ क्रमेणाह ॥

यावदिति श्लोकद्वयेन । अत्र माया शब्दस्यानिर्वाच्याविद्यापरत्वप्रतीतिनिरासायार्थमाह ॥ मायाबलमिति । परपक्षे बल शब्दा-स्वारस्यं नेति दर्शयितुं बलशब्दग्रहणं । अत्र माया शब्दस्य भगवदिच्छापरत्वमेव वाच्यं । पश्येदिति मोक्षार्थं ज्ञेयत्वस्योक्त-त्वात्तस्य च भगवदिच्छालिंगत्वादित्याशयेन माया शब्दार्थनिर्णायकानि लिंगानि प्रमाणेनैव दर्शयति ॥ ज्ञेयत्वमिति । मोक्षार्थं ज्ञेयत्वमित्यर्थः । तु शब्दोऽवधारणे । श्रीरेवेत्यन्वयः । दोषयुक्ता परिणामिनी च मायोच्यते सा जडा । जडप्रकृतिरूपा स्मृता । यस्यास्तु मायाया दोषास्तथा चेतनतोच्येत सा माया शेवली नामा स्मृता । तस्याः स्वरूपमाह ॥ जगद्बंधात्मिकेति । बद्ध्यतेऽ-नयेति बंध शब्दः करणसाधनः । सदेति मध्यमजीवाभिप्रायेण । एवं माया शब्दार्थमुक्त्वेदानीं पृथक्त्वमयमात्मन इंद्रियार्थं मायाबलमित्येतावद्वाक्यं प्रमाणेनैव व्याख्याति ॥ ध्यायत इति । इति शब्दः प्रभृत्यर्थः । विभक्तता पृथक्त्वं । पृथक् शब्देन तत्तदिंद्रियव्यापारकर्तृत्वानुसंधानमेवात्र विवक्षितमित्यर्थः । आत्मन इत्यस्यार्थः ॥ जीवस्येति । तु शब्दोऽवधारणे । हरेरिच्छा-बलादेवेति संबंधः । अनेन भगवतो मायाबलमित्येतद्विवृतं । इंद्रियार्थमित्यस्य व्याख्यानं ॥ इंद्रिय भुक्तय इति । इंद्रियैर्विषय-भोगायेत्यर्थः । कथमिदं व्याख्यानमिंद्रियार्थमित्यनेन लब्धमित्यपेक्षायामाह ॥ इंद्रियाणामिति । अनेन मध्यमपदलोपी समास इति सूचयति । व्यर्थाऽपि क्रियार्थेति व्याहतं । अतो व्याख्याति ॥ व्यर्थाऽपीति । तथा च व्यर्थाऽप्यात्यंतिकसुखरूपप्रयो-जनशून्याऽपि यज्ञादिक्रियमाणमर्थः फलं यस्यां सा तथोक्तेत्यर्थः। अध्याहृतार्थकरणा इत्येतदप्रतीत्या व्याख्याति ॥ अर्थैरिति । तथा चाध्याहृतार्थेत्यत्रार्थ पदस्य परनिपात इति भावः । निशि निःशयाना इत्यत्र निट् शब्दस्य न रात्रिपरत्वं निःशयाना क्षणभंगनिद्रा इत्यनयोर्विरोधापत्तेरतोऽत्राभिमतनिट् शब्दार्थं प्रमाणेनैव दर्शयति ॥ अज्ञानमिति । निशा शब्दो निट् शब्दपर्यायः। अतो नासंगतिरिति ध्येयं । एवं च निशि अज्ञाने नितरां शयानां बद्धा इति मूलार्थ इति भावः॥ ततश्चायं श्लोकद्वयार्थः॥जनः सज्जनो यावद्यदाऽऽत्मनः स्वस्येंद्रियार्थमिंद्रियाणां विषयभोगार्थमिदं पृथक्त्वं तत्तदिंद्रियव्यापारकर्तृत्वानुसंधानं भगवतो मायाबलं मायाया इच्छाया बलं प्रापकं यस्येति विग्रहेणेच्छाबलं प्राप्तं । हे ईश । पश्येत् । श्रवणादिनेति शेषः । तावच्च तदैव व्यर्थाऽ-प्यात्यंतिकसुखरहिताऽपि यज्ञादि क्रियाणामर्थः स्वर्गादिरूपं फलं यस्यां सा दुःखनिवहं दुःखपरंपरां वहत्येषा संसृतिः प्रतिसंक्रमेत

विनाशं गच्छेत् ॥९॥ नानामनोरथधियो यतोऽत एव क्षणभंगयुक्तनिद्रा निद्रातुमध्यवसरस्तेषां नास्तीति भावः । दैवाद्दैवेन हरिणा हताः सर्वतः प्रतिहता अर्थरचना अर्थार्थोद्यमा येषां ते तथा । ऋषयोऽपि ऋषिकुलप्रसूता अपि युष्मत्प्रसंगविमुखाः श्रवणादिरूपयुष्मत्सेवाशून्याः । इह जीवलोके ॥१०॥ न केवलं यत्प्रसंगरूपश्रवणादेः संसाररूपानिष्टनिवृत्तिरेव फलं किं त्विष्टप्राप्तिरपीत्याह ॥ त्वद्भावेति । हे पुंसां नाथ पुरुषोत्तम । ये सच्छ्रुतेक्षितपथाः सत उत्तमादाचार्याच्छ्रुतेन शास्त्रश्रवणेनेक्षितो ज्ञातः पंथा विष्णुभक्त्यादिलक्षणो मोक्षमार्गो यैस्ते तथोक्ताः । अत एव त्वद्भावयोगेन त्वद्भक्तिलक्षणोपायेन परिभावितमधिवासितं हृत्सरोजं मनःकमलं येषां ते तथा । हे उरुगाय । ते पुरुषास्ते तव यद्यद्वपुर्यद्यद्गुणविशिष्टं रूपं धिया विभावयंति ध्यायंति तत्तद्वपुः प्रणयसे । नन्वत्र तत्तद्वपुः प्रणयस इत्यत्रापेक्षितं पूरयति ॥ तद्वपुस्तेषामिति । तथा च तेषां तत्तद्वपुस्तत्तत्सदृशं वपुः स्वरूपदेहं प्रणयसे प्रकटयसीति मूलार्थ इति भावः । अत्र नन्वित्यनेन सूचितं प्रमाणं दर्शयति ॥ यादृश इति । निरवकाशैस्तत्प्रमाणानुसारेण श्रुतिरपि व्याख्यायेत्याशयेन तां पठति ॥ तं यथेति । यथा यथा यद्गुणविशिष्टत्वेन तदेव तत्सदृशमेव रूपं तेषां मुक्तौ भवतीत्यर्थः । इति च श्रुतिरिति शेषः ॥११॥ एवं भगवत्प्रसंगस्य संपूर्णमोक्षफलत्वमुक्त्वेदानीं तत्र निष्कामकत्वरूपं तदर्पणरूपं चेत्थंभावं क्रमेणाह ॥ नातिप्रसीदसीति श्लोकद्वयेन । अत्र सुरगणैर्हृदिबद्धकामैराराधित इति यथाश्रुतान्वये योग्यताभावमालोच्य योग्यमन्वयं दर्शयति ॥ सर्वभूतदययेति । मध्यमपुरुषप्रयोगात्त्वमित्युक्तं । बद्धकामैरित्यस्य विशेष्यं जनैरित्येतदध्याहृतं । उपचितैः संपादितैरुपचारैः पुष्पादिभिरनाराधित इति वर्तते । नातिप्रसीदसि तदभीष्टफलदानायाल्पमात्रप्रसादयुक्तोऽपि न मुक्तिजनकात्यर्थप्रसादयुक्तो भवसीत्यर्थः । अत्र सर्वभूतदययेत्यादिकं हृद्विबद्धकामैराराधितो नातिप्रसीदसीत्यत्र हेतुतया योज्यं । दया पदं च भक्तिज्ञानादेरुपलक्षकमित्याशयेन प्रमाणं पठति ॥ आराधित इति । ॥ ततश्चायं श्लोकद्वयार्थः । अंतरात्माऽतर्नियामकः सन् अत एव सुहृन्नानाजनेषु नानाविधप्राणिष्ववहितः स्थितो यस्त्वं । अनेन सर्वभूतदयाया विष्ण्वाराधनत्वमुपपादितमिति ज्ञातव्यं । असद्भिरसुरैरलभ्यया लब्धुमशक्यया सर्वभूतदयया भक्तिज्ञानादिभिश्च सुरगणैर्ह्याराधितो यतोऽतो हृदिबद्धकामैर्जनैस्तथा तत्तत्कामानुसारेणोपचितैरुपचारैराराधितो नातिप्रसीदसि सुरगणकृतसर्व-

भूतदयादिगुणपूर्वकनिरुपाधिकाराधनापेक्षयाऽस्यालपत्वादिति भावः । तथा चाराधने कामनापरित्याग आवश्यक इति हृदयं । यतः सकामानामत्यर्थप्रसादो न भवत्यतः पुंसामाधिकारिणां विविधकर्मभिरित्युक्तमेव विवृणोति ॥ अध्वराद्यैरिति । भगवतस्तवाराधनं न भवति तदाराधनं त्वत्प्रीतिजनकं न भवतीति यावत् । कदा । यत्र यर्हि सत्क्रियार्थः सत्यव्रताः क्रियाश्चाध्वराद्यास्तासामर्थोऽवांतरप्रयोजनरूपो धर्मः कर्हिचित्कदाचिदपि । आदौ मध्येंऽतेऽपि वा तवार्पितो न भवति तर्हीत्यर्थः । अतोऽर्पणमावश्यकमिति भावः ॥ १२ ॥ १३ ॥ पुनः भगवत्सेवायामित्थं भावांतरं दर्शयंस्तन्नमति ॥ शश्वदिति । निपीतभेदमोहायेत्यस्य निरस्तसकलभेदभ्रमायेत्यन्यथाप्रतीतिवारणाय भेदमोह शब्दस्य विवक्षितमर्थं दर्शयति ॥ ईशस्येति । । ईशतेत्यादावपि यथाज्ञानमेव ग्राह्यं । एव शब्दस्य नेत्यनेन संबंधः । तयोर्जीवेशयोर्जडाभेदोऽपि भेदमोह इति प्रोक्त इति । अधिष्ठानतत्त्वापेक्षया विपरीताकारो भेद इत्युच्यते । तद्विषयको मोह इति व्याख्यानादिति भावः । सदेत्यनेन शश्वदित्येतदुक्तार्थं । अन्येषामपि सतामित्यन्वयः । शनैस्तत्त्वज्ञानोत्कर्षानुसारेण । याति नश्यति । एतेन बोधधिषणायेत्येतदुक्ततात्पर्यं । अन्येषामपि सतां मोहनिवर्तकबोधजनिका धिषणा बुद्धिर्यस्मादिति व्याख्यानात् । अनेन भगवदाराधकस्यैतादृशभेदमोहराहित्यमावश्यकमिति सूचयति । तथा च शश्वत्सदा स्वरूपमहसैव स्वरूपभूतज्ञानेनैव न तु परोपदेशोत्पन्नेनेत्यर्थः । निपीतः सम्यक् निराकृतः । उक्तभेदमोहो यस्य तस्मै । अन्येषामप्युक्तभेदमोहनिवर्तकबोधबुद्धिजनकायात एव परस्मा इति मूलार्थ इति भावः । निपीतभेदमोहायेत्यनेनेशस्य पूर्णत्वमुक्तं । तदयुक्तं । यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वादित्याशंकां परिहरन् प्रभुदं त्वद्दर्शनं पूर्वकृतनमनादिसुकृतफलमित्याशयेनाह ॥ विश्वेति । निमित्तभूता लीला क्रीडा तस्या आरामायाश्रयाय लीलैव आ सम्यक् रामोरमणं यस्येति वा । इदं दर्शनमुद्दिश्य पूर्वं नमश्चकृम । इदमुक्तानुसंधानपूर्वकं नम इति वा ॥१४॥ भगवद्ध्यानादिरूपाराधनस्य मोक्षहेतुत्वं कैमुत्येनापि दर्शयन्नहमपि तं ध्यायामीत्याह ॥ यस्यावतारेति । अत्र विवशानां नामोच्चारणमात्रेण कथं मुक्तिरित्यतो व्याख्याति ॥ भक्तिविवशा इति । तथा च नात्र विवश शब्देन विषयपरवशा गृह्यंते येन मुक्त्यनुपपत्तिः किंतु हरिभक्त्या परवश एव । तेषां च नामोच्चारणमात्रेण मुक्तिर्नानुपपन्नेति भावः । अत्र प्रमाणमाह ॥ ये भक्त्येति । मात्र

शब्दः कात्स्न्यर्थः । एक शब्दः केवल शब्दार्थः । तथा चावतारगुणकर्मप्रतिपादकसर्वनाम्नां केवलं जल्पका उच्चारयितार इत्यर्थः । अनेनावतारगुणकर्मविडंबनानि नामानि ये केवलं गृणंति ते ऋतं संयांति इत्येतदुक्तार्थं । सदा ध्यायिनः किमुतेत्यनेन मूलेऽपीदमध्याहार्यमिति सूचयति ॥ तथा चायमर्थः ॥ यस्य विष्णोरवतारगुणकर्मविडंबनमनुकरणं येषु तानि । तत्प्रतिपादकानीति यावत् । तत्रावतारविडंबनानि वासुदेवो दाशरथिरित्यादीनि । सर्वज्ञः सर्वेश्वर इत्यादीनि गुणविडंबनानि । कंसारिः राक्षसारिरित्यादीनि कर्मविडंबनानि । नामानि येऽसुविगमे प्राणनिर्गमनकाले । चरममरण इति यावत् । विवशा भक्तिपरवशा गृणंति अर्थानुसंधानपूर्वकमुच्चारयंति । तेऽप्यनेकजन्मसंपादितं शमलं प्रारब्धपापं हित्वा देहे वा सूर्यमंडले विधूय सर्वपापानीति वचनात् । सहसैव शीघ्रमेव वायुर्नयेति वा विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरमिति वचनात् । अपावृतमपगतावरणं यथा स्यात्तथा ऋतं ज्ञानपूर्णं परं ब्रह्म संयांति प्राप्नुवंति । किमुत सदा स्वयोग्यगुणोपसंहारपूर्वकं तद्ध्यायिनः । अतस्तमजमहं प्रपद्ये । मनसेति शेषः । सदा ध्यायामीति यावत् ॥१५॥ विश्वस्योद्भवकर्ता भवान् प्रलयकर्ता शिवः प्रसिद्धः । अतः कथं विष्णोर्विश्वोद्भवादिनिमित्तलीलारामत्वमुक्तमित्याशंकां परिहरन्पुनः प्रणमति ॥ यो वा इति । अत्र विष्णुवदेव हरेर्ब्रह्मरुद्रभावः प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ ब्रह्मादिभाव इति । आदि पदेन रुद्रादिग्रहणं यत्रोच्यते तत्र तन्नियामकता ब्रह्मादिनियामकता विवक्षिता भवेत् । यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति वचनात् । मत्स्यादिभावो यत्रोच्यते । तत्र स्वभावस्तु स्वतादात्म्यमेवार्थतयेष्यते क्वचित् । वेदे वैदिकेऽपि वा नान्यथेष्यते । ब्रह्मादावपि मत्स्यादिवद्भेदोऽर्थतया नेष्यत इत्यर्थः । त्रिपादित्यस्य त्रयो ब्रह्मादयः पादा स्कंधा यस्येति व्याख्यानं प्रमाणविरुद्धमित्याशयेन प्रमाणेनैव तस्यार्थं दर्शयति ॥ अनंतासनेति । त्रिपादित्युच्यत इति शेषः । तथा चात्र त्रिपाच्छब्दः स्थानत्रयगतस्वरूपांशपर इति भावः ॥ तथा चायं श्लोकार्थः ॥ यस्त्रिपादनंतासनादिस्थानत्रयगतस्वरूपांशत्रयवान्हरिरेकोऽप्युरवः प्ररोहाः शाखोपशाखास्थानीयास्तत्तत्कार्यनियामकानंतांशा यस्य सः । तथा भूतः सन् ववृधे । तस्मै भुवनव्याप्तध्रुवाय नमः । किं कृत्वा ववृधे । आत्मा स्वयमेव मूलस्थानीयो येषां ते तथा स्थित्युद्भवप्रलयहेतवः । अहं मय्याविष्टो मन्नियामको मन्नामा गिरिशश्च यो

गिरिशाविष्टस्तन्नियामकस्तन्नामा स्वयं साक्षादेव विभुर्विष्णुश्चेत्येते भूत्वाऽवतीर्य । वै शब्दः प्रमाणप्रसिद्धिद्योतकः ॥१६॥ भगवदाराधकस्य मुमुक्षोर्निषिद्धत्यागेन विहितानुष्ठानेन चावश्यं भाव्यमिति विपक्षे बाधकप्रदर्शनमुखेनोपपादयन् कालप्रवर्तकमनिमिषनामकं भगवंतं प्रणमति ॥ लोक इति । अयं लोको विकर्मणि निषिद्धे कर्मणि नितरां रतः स्वे स्वयि स्ववर्णाश्रमविहिते भवतोऽर्चनं यस्मिंस्त्वदुदिते दत्तकपिलव्यासादिरूपेण त्वयैव कर्तव्यतया प्रतिपादिते कुशले क्षेमकारिणि कर्मणि प्रमत्तः । अदत्तचित्तो यदा वर्तते तावत्तदा यो बलवान्केनापि निवर्तयितुमशक्योऽस्य जनस्येह लोके जीविताशां सद्यः कालक्षेपमंतरेण छिनत्ति । वृथा तदीयं जन्म भवतीति यावत् । अतो यावदायुर्निषिद्धं त्याज्यं विहितं चानुष्ठेयमिति भावः । अत्रापि निमिष पदेन काल एवोच्यत इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव तत्पदार्थमाह ॥ नित्यज्ञानेति । इंद्रियाभावात्कथं पश्यतीत्याशंकापरिहाराय नित्यज्ञानदृशेत्युक्तं । नित्यं यथा स्यात्तथा । तात्कालिकं लवकालस्थितं वस्त्वित्यर्थः । तस्मादेवेत्यन्वयः । ननु कालोऽपि क्वचिदनिमिषेत्युच्यते तत्र किं निमित्तमित्यपेक्षयामाह ॥ कालस्येति । अनिमिषत्वमनिमिष शब्दवाच्यत्वं । लवादेः कालस्य नित्यवीक्षणान्नित्यवीक्षणत्वान्निमित्तादित्यर्थः । अत्र निमिष शब्दः कादाचित्कसूक्ष्मनिरीक्षणपरः । तथा च न विद्यते निमिषो यस्येत्यत्रान्यपदार्थतया कर्तृग्रहणे नित्यनिरीक्षता भगवान्वाच्यः । कर्मग्रहणे तेन नित्यं निरीक्ष्यमाणो लवादिः कालो लभ्यत एवेति भावः । अनेन हरेरनिमिष शब्दवाच्यत्वं लवादिकालांतर्गतस्यैवेति सूचयति ॥१७॥ ननु भगवतो न लोकमारकत्वं । तस्य द्वा सुपर्णेत्यादिश्रुत्या लोकसखत्वावगमादित्याशंकां परिहरन्पुनः प्रणमति ॥ यस्मादिति । अहमपि सर्वाधिकायुत्तमोऽपि यस्मादनिमिषाद्बिभेमि तस्मान्मरणं भविष्यतीति जानामीत्यर्थः । अपि शब्दसूचितं स्वस्योत्तमत्वमुपपादयितुमुक्तं ॥ द्विपरार्धेति । द्वयोः परार्धयोः संबंधि द्विपरार्ध्यं तच्च तद्धिष्ण्यं स्थानं सत्यलोकाख्यं । ब्रह्मशतवर्षकालावस्थायि तु पुरुषस्थानं सत्याख्यं लोकमिति वा । आधि शीङ्स्थासां कर्मेति । आधारस्य कर्मसंज्ञा । अनेन बहुतरायुष्यवत्त्वेन स्वस्योत्तमत्वमुपपादितं । प्रकारांतरेणाप्युत्तमत्वमुपपादयितुमुक्तं ॥ सकलेति । तथा च सकललोकवंद्यपदभोक्तृत्वान्ममोत्तमत्वमिति भावः । किमेतान्वाकालो वृथा नीतो नेत्याह ॥ तेपे तप इति । तपः संतापात्मकालोचनं वा तेपे तप्तवान् । किमि-

च्छन् । बहुतपः स्वयोग्यन्बृद्धिमुपेतं ज्ञानमवरुरुत्समानः प्राप्तुमिच्छन् विगतः सखा तत्कृतमरणशून्यो यस्य स तथोक्तस्तस्मै । एवं सर्वोत्तमोऽप्यहं तत्कृतमरणरहितो न भवामि किमुतेतर इति भावः । श्रुतिस्तु कर्मानुसारेणान्नदानादिना रक्षकत्वाभिप्रायेणेति भावः ॥१८॥ ननु तत्रापि मारकत्वेन यत्सर्वपुरुषोत्तमत्वं हरेरुक्तं तदयुक्तं । तस्य तिर्यगादियोनिषु जननेन विषयभोगेन चेतरसाधारणत्वादित्याशंकां परिहरन्पुनः प्रणमति ॥ तिर्यगिति । अत्र निरस्तरतिरपि रेमे इति व्याख्याने व्याहतिमालोच्याभिमतं छेदं दर्शयन्व्याख्याति ॥ अनिरस्तेति नित्यरतिरिति । ध्वंसाप्रतियोगित्वोक्त्या नित्यत्वस्यैव लाभादिति भावः ॥ ततश्चायमर्थः । तिर्यङ्मनुष्यादिजीवयोनिषु तन्मध्ये आत्मेच्छया न तु कर्मणा । अवतीर्येति शेषः । प्रयोजनमाह ॥ कृतेति । स्वकृतमर्यादापालनेच्छयाऽनिरस्तरतिः । नित्यरतिरपि रेमे विषयान् बुभुजे । ननु नित्यरतित्वमेव कुत इत्यत उक्तं ॥ उपलब्धकाष्ठ इति । श्रुत्यादिभिरुपलब्धः । आनंदतारतम्यस्य काष्ठावधिरपरिच्छिन्नानंदो यस्य स तथोक्तः । अत एव पुरुषोत्तमाय । तथा च नेतरपुरुषसाधारणत्वमिति भावः ॥१९॥ नन्वेवं कथं तस्याविद्याकार्यभूता निद्रेत्यतः साऽपि लोकनिद्राविलक्षणैवेत्याह ॥ यो विद्ययैवेति । दाशार्धाः पंचवृत्तयो यस्याः सा तया पंचपर्ववत्येत्यर्थः । अनुपहतोऽप्यनाभिभूतोऽपि यो निद्रामुवाह तस्मै नम इत्युत्तरेणान्वयः । जठरीकृतोदरेऽर्पिता लोकयात्रा लोकस्थितिर्येन भीमा भयंकर्य ऊर्मीणां मालाः पंक्तयोऽस्य संतीति भीमोर्मिमालिनि तस्मिन् जलेऽतर्मध्येऽहिः शेषः एव काशिपुस्तस्याः स्पर्शोऽनुकूलो यथास्यात्तथेति । क्रियाविशेषणमेतत् । नेयं निद्रा स्वार्था किंतु परार्थेत्याशयेनाह ॥ जनस्येति । स्वनिद्रासमये जनानामपि सुप्तिं प्रदाय तत्स्वरूपं सुखानुभवं प्रापयन्नित्यर्थः । भगवन्निद्राया लोकनिद्राया वैलक्षण्योपपादनायैतानि विशेषणानि । न हि लोके निद्राणोऽविद्ययाऽनुपहतो नापि जठरीकृतलोको न वाऽतर्जलेऽहि शरीरे वा निद्राति नापि परेषां सुखार्थमिति ॥२०॥ यो वाऽहं च गिरिशश्चेत्यत्र यत्स्वस्य गिरिशस्य च न साक्षाद्भवदवतारत्वमित्यभिप्रेतं तदुपपादयन्पुनः प्रणमति ॥ यन्नाभीति । लोकत्रयमुपकरणं हरिपूजासाधनं यस्य स तथा । लोकत्रयस्य सृष्ट्यादिनोपकरोतीति वा । लोकत्रयोपकारक इति यावत् । एतादृशोऽहं यदनुग्रहेणासं । अतो न मम साक्षादवतारत्वमिति भावः । नापि रुद्रस्येत्याह ॥ उदरस्थभवायेति । उदरस्थो भवो रुद्रो यस्य

तस्मै । पूर्वकल्पांते विनष्ट इदानीमुदर एव तिष्ठाति नाहमिव बहिरुत्पन्नः स कथं साक्षादवतारः स्यादिति भावः । निद्रामुवा- हेत्युक्तनिद्रां विवृण्वन् अनुग्रहसूचकं विशेषणमाह ॥ योगनिद्रेति । स्वात्मध्यानाय चक्षुर्निमीलनं योगनिद्रेत्युच्यते । तदावसाने विकसती नलिनवदीक्षणे यस्य तथा तस्मै ॥ २१ ॥ एवं स्तुत्वेदानीं स्वाभीष्टं प्रार्थयते ॥ सोयमिति चतुर्भिः । नान्यः प्रार्थनीयोऽस्तीत्याशयेनाह ॥ एक एव समस्तजगतां सुहृदात्मोत्कृष्ट इति । यत्त्वेन सत्त्वेन गुणेन पराक्रमेण वा भोगैनैश्वर्येण च मृडयते रक्षति । विश्वमिति शेषः । अनुस्पृशताद्ददात । स्पृश दान इति धातोः । दृशं विशिनष्टि ॥ यथेति । ययेत्यर्थः । यतःप्रणतप्रियोऽसौ । अहं च प्रणत इति भावः ॥ २२ ॥ आत्मशक्त्येत्यत्र शक्ति शब्दस्य भार्यार्थत्वे वैयर्थ्यं । रमया सहेति व्याख्याने हरेरस्वातंत्र्यं च प्रतीयतेऽतोऽत्र विवक्षितं व्याख्यानं प्रमाणेनैव दर्शयति ॥ स्वसामर्थ्यादिति । आत्मशक्त्येत्यस्य तात्पर्यमिदं । तथा च यानि कर्माणि रमया सह कुरुते तान्यपि स्वसामर्थ्यादेव कुरुत इत्यर्थः । तत्र रमासाहित्यं तदनुग्रहार्थमेवेति भावः । कुत इत्यतः । यत एषः स्वयमेव रमां विहायैव कानिचित्कुरुते । अन्यथा तन्न स्यादिति भावः । किंचायं क्षराक्षरपुरुषोत्तमः । अतः स्वाधीनरमायामपेक्षयामपि न स्वातंत्र्यहानिरिति भावः ॥ ततश्चायं श्लोकार्थः ॥ रमया सहात्मशक्त्या स्वसामर्थ्ये स्थित्याद्यर्थं गृहीता ये सत्त्वादयो गुणास्तत्प्रवर्तका विष्ण्वाद्यवतारा यस्य स तथोक्तः । स्वस्मिन्स्वविक्रमे स्वपराक्रमरूपे जगत्पालनसर्जनसंहरणादिरूपव्यापारे । इदं जगत्सृजतोऽपि तदाज्ञया नानाविधं जगत्सर्जनव्यापारमग्नस्यापि मे चेतः स एव युंजीत प्रवर्तयतु । जगत्सृष्ट्यादिव्यापारकरणेन मम हरिपराक्रमविषयं स्मृतिलोपो यथा मा भूत्तथा करोत्विति भावः । यत एषः प्रपन्नवरदोऽहं च प्रपन्नो यथा येन कर्ममोक्षविलंबे कारणं शमलं च तामसदेत्यादिसृष्ट्यादिप्राप्तं पापं च विजह्यां त्यक्ष्यामि ॥ २३ ॥ इहांभसि सतोऽनंतशक्तेर्यस्य पुंसो नाभिह्रदाद्विज्ञानं शक्तिर्यस्य महत्तत्त्वस्य तदभिमान्यहमासं । अस्य रूपं प्रतिमास्थानीयमिदं विश्वं विवृण्वतो विस्तरेण कुर्वतो मे निगमस्य वेदस्यावयवभूतानां गिरां वाक्यानां पदानां च विसर्गो विशिष्टमुच्चारणं व्याख्यानं वा मा रिषीष्ट मा लुप्यतामित्यर्थः । अनंत- शक्तिरयं । अहं च तत्पुत्रो विज्ञानशक्तिरतस्तत्प्रसादेनान्यत्र व्यापृतस्य मम वेदव्याख्यानादिलोपो मा भूदिति भावः ॥२४॥

अदभ्रकरणोऽनल्पकृपो विजृंभन्विजृंभयन्विश्वस्य विजयायोद्भवोपकारायास्मदनुग्रहाय चोत्थाय । अस्मन्मानसविषादपरिहाराय समीचीनां वाचं ब्रवीत्वित्याशयः ॥ २५ ॥ स्वस्य संभवो यस्मात्तं स्वापितरं निशम्य दृष्ट्वा तप आलोचनं विद्यानिष्ठा समाधिर्ध्यानं प्रकृतकार्यविषये यावन्मनोवाचस्तावत्स्तुत्वा खिन्नवदलंबुद्धिरहितवत् । अनेन तस्य पुनरपि स्तोतुमिच्छां सूचयति ॥ २६ ॥ कल्पव्यतिकरः प्रलयस्तदंभसा ॥ २७ ॥ आत्मनः स्वस्य लोकानां संस्थानस्यावयवसंनिवेशविशेषस्य विज्ञाने परिखिद्यतोऽलंबुद्धिमकुर्वतो ब्रह्मणोऽभिप्रेतामित्यन्वयः । आलक्ष्य दृष्ट्वा । कश्मलं मनोविषादमित्यनेन तद्विषादस्य गतत्वान्न तत्र वचनापेक्षेति सूचयति । आत्मन इत्यात्म शब्दस्य स्ववाचकत्वं जगतां सुहृदेक आत्मेति पूर्वं विष्णुवाचकत्वं तत आत्मनि योगेनेत्यग्रे देहवाचकत्वं जीववाचकत्वं चाभिप्रेतं । तत्र सर्वत्र किमात्म शब्दप्रवृत्तिः साम्येनैवेत्याशंकां प्रमाणेनैव परिहरति ॥ आत्म शब्दस्येति । संदोहो मध्यदेहः । लिंगानुशासने ह्यक्चस्यैव सांतस्य नपुंसकत्वविधानात् । समस्तोऽयं मनः शब्दो बव्हृष्क इति न नपुंसक इति ज्ञेयं । बुद्धिजीवा इत्यत्र बहुवचनं जातौ । स्वयं स्वो विष्णुरेव मुख्यार्थ इत्यत्र निमित्तमाह ॥ उत्कर्षो हीति । व्याप्तिरित्यर्थः । आत्मताऽऽत्म शब्दप्रवृत्तिनिमित्तं । आङ् पूर्वोत्तनोतेर्डमन् प्रत्यये आत्मेत्यस्य निष्पन्नत्वादिति भावः ॥ २८ ॥ मूले हे वेदगर्भ वेदप्रतिपाद्य । तंद्री विषादकृतमालस्यं मागाः । तेनैव मे दृशमनुस्पृशतादित्यादिरूपं यत्प्रार्थनं त्वया पूर्वं कृतं तत्रापि न तव स्वातंत्र्यमस्तीत्याह ॥ तन्मयेति । अयत्ज्ञानं भवान्प्रार्थयते मया चोदितमित्यन्यथाप्रतीतिवारणाय तात्पर्यमाह ॥ प्रार्थनमपीति । हि इत्यस्यार्थः ॥ अपीति । मम प्रेरणा यस्य तन्मत्प्रेरणं मत्प्रेरणाजन्य इत्यर्थः । तत्रापि भवान्न स्वतंत्र इत्यर्थः ॥ ततश्चायमर्थः ॥ भवानग्रे पूर्वं मां प्रार्थयते यत्त्वत्कर्तृकं प्रार्थनं यदित्यर्थः । तद्धि तदपि मया चोदितं मत्प्रेरणाजन्यमेवेत्यर्थः । तत्रापि भवान्न स्वतंत्र इति भावः ॥ २९ ॥ इदानीं प्रार्थितज्ञानस्य साधनमुपदिशति ॥ भूयश्चेति । अत्र तपो विद्या शब्दयोर्विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ तप आलोचनमिति । निष्ठा श्रद्धा । मदाश्रयामेवेति संबंधः ॥ ३० ॥ लोकदर्शनमेव विशिनष्टि ॥ तत इति । ततस्तेन योगेन ध्यानेन समाहितो यथावस्थितज्ञानः सन् आत्मानि सर्वदेहेषु ततमंगुष्ठमात्ररूपेण व्याप्तं मां द्रष्टासि द्रक्ष्यासि । आत्मानि जीवे स्थिते मयि लोकान्द्रष्टाऽसीत्यन्वयः । अत्र देहांतर्गतेंऽगुष्ठमात्रे हरौ

कथं लोकावस्थानमित्याशंकां प्रमाणेनैव परिहरति ॥ देहे देह इति । अनेनात्मनीत्येकवचनं समुदायापेक्षमिति सूचयति । परशक्तिरघटितघटकशक्तिः । अंगुष्ठमात्रोऽप्यघटितघटकशक्त्या विभुर्व्याप्तो यत इत्यर्थः । आत्मनि मयीति सामानाधिकरण्येनाभेदप्रतीतिवारणायापेक्षितमध्याहृत्य योजनां दर्शयति ॥ आत्मनीति । तथा चात्मनि जीवे स्थितेऽपि मयीत्यर्थः । ततश्च पुनरालोचने कृते सर्वदेहस्थिते सर्वजीवस्थिते च मयि लोकान्द्रष्टाऽसीति भावः ॥ ३१ ॥ एवंविधत्वद्दर्शनेनापि किं फलमित्यत आह ॥ यदा त्विति । तु शब्दो लोकाधारत्वरूपविशेषणार्थः । सर्वभूतेषु देहेषु जीवेषु च प्रतिचक्षीत पश्येत् । तर्ह्येव तदानीमेव कश्मलं बाह्यमनोगतं विषादं ॥ ३२ ॥ न केवलमुक्तविधमज्ञानेनैव पूर्यते । किंतु स्वस्वरूपज्ञानमपि जीवस्य पुरुषार्थतयाऽपेक्षितमित्याह ॥ यदा रहितमिति । अत्र स्वरूपेण मयोपेतमित्येतदनूद्याभेदप्रतीतिवारणाय स्वरूपेणेत्यस्यार्थं सूचयन्मयोपेतमित्येतदुपपादयाति ॥ स्वरूपेणेति । हृत्स्थं जीवरूपमित्यनेन स्वरूपशब्दार्थो दर्शितः । दक्षिणाक्ष्यादिस्थितजीवरूपव्यावृत्तये हृदिस्थितमित्युक्तं । हि शब्दः श्रुत्यादिप्रसिद्धिद्योतकः । भवतीत्यनंतरमतो मयोपेतमित्येतदुपपन्नमिति शेषः । ततः स्वरूपेणेत्येतन्न मयेत्यस्य विशेषणं येनाभेदःस्यात् । किंतु स्वरूपेण हृदिस्थितस्वसमग्ररूपेणैवात्मानं स्वं मयोपेतं हृदिस्थितं मत्समीपस्थं पश्यन्निति मूलं व्याख्येयमिति सूचयति । अप्रतिपत्तिविप्रतिपत्तिनिरासाय समग्रश्लोकं प्रमाणेनैव व्याख्याति ॥ त्यक्त्वेति । देहादावात्मभावमात्मत्वाभिमानं । अनेन भूतेंद्रियगुणाशयैरित्येतदुक्तार्थं । आत्मभावं जीवभावं चेति च शब्दान्वयः । अनेन स्वरूपेण स्वधर्मेण जीवत्वेनात्मानं हृदिस्थितं स्वं पश्यन्नित्यपि मूलयोजनां सूचयति । तमपि हृदिस्थितं जीवमपि । हरिपादाब्जसंस्थितमित्यनेन स्वरूपेणेत्येतदुक्तरीत्या मयोपेतमित्यनेनापि संबध्यत इति सूचयति । स्वाराज्यमृच्छतीत्यस्यार्थः ॥ मुक्तिं व्रजतीति । ॥ ततश्चायं श्लोकार्थः ॥ लोकोऽधिकारी जनो यदा भूतानि पंच इंद्रियाणि दश गुणाः शब्दाद्या आशयो जडांतःकरणं । एतै रहितमेतदात्मके देहे परित्यक्तात्मभावमात्मानं स्वं स्वरूपेण हृदिस्थितस्वसमग्ररूपेणैव मयोपेतं हृदिस्थितं मत्समीपस्थं पश्यन्वर्तते । आत्मानं हृदिस्थितं स्वरूपेण स्वधर्मेण जीवत्वेन पश्यन्निति वा तदा स्वाराज्यं स्वरागविषयं मोक्षमृच्छति गच्छतीति ॥३३॥ इदानीं तस्मिन्स्वविक्रम इदं सृजतेऽपीति यत्प्रार्थितं तद्ददातीत्याह ॥ नानेति । नानाविधकर्मफलभूतेनादृष्टेनात्मबुद्धिरस्मिन्मदीयस्रष्ट्यादि-

कर्मणि नावसीदाति नापगता भविष्यति। यतो वृषीयान्वृषतरः। अत्यधिकोऽस्तीति शेषः ॥३४॥ अनुग्रहमेव दर्शयति ॥ ऋषिमिति चतुर्भिः। ऋषिस्त्रिकालदर्शी स्यादिति वचनात्सर्वज्ञं। आदौ भवमाद्यं यस्मान्मयि माद्विषये नितरां बद्धं। त्वयाऽहं सम्यग्ज्ञात इत्यर्थः ॥ ३५ ॥ एतदेव प्रपंचयति ॥ ज्ञात इति। ज्ञातः साक्षात्कृतो यद्यस्मान्मन्यसे ध्यायसि। अत्र भूतेंद्रियगुणात्मयुक्त-जीवसाधारणं भगवति बाधितमतः प्रमाणेनैव तद्युक्तत्वं दर्शयति ॥ भूतेंद्रियेति। मनोबुद्धिरित्यात्म शब्दस्यार्थद्वयमुक्तं। गुण शब्दार्थकथनं ॥ त्रिगुणादिष्विति। आदि पदेन शब्दाद्या ग्राह्याः। युक्तं संबद्धं। स्थितमिति यावत्। पश्यन्मनसा ध्यायन् जानाति पश्यति। तथा च भूतेंद्रियगुणात्मभिर्भूतेंद्रियगुणमनोबुद्धिभिर्नियम्यैर्युक्तं। तत्र नियामकतया स्थितमिति मूलं व्याख्येयमिति भावः ॥ ३६ ॥ इदानीं तव मद्दर्शनमपि मदनुग्रहेणैवेत्याह ॥ तुभ्यमिति। विचिकित्सायां दिदृक्षायां तन्निमित्त मनो विषादे सतीति यावत्। आत्मदेहो बहिस्थितः। सलिले प्रलयजले पुष्करस्य कमलस्य नालेन नालनाडीद्वारेण पुष्करस्य मूलकारणभूतं मां विचिन्वतो मृगयतस्तव मद्विचिकित्सायामित्यन्वयः ॥ ३७ ॥ स्तोत्रकरणमपि मदनुग्रहेणैवेत्याह ॥ यच्चकर्थेति। मत्कथाभ्युदयांकितं मत्प्रतिपादकवाक्यप्रबंधोत्कर्षयुक्तं मदनुग्रहो ममानुग्रहो यस्य स मदनुग्रहसाध्य इत्यर्थः ॥३८॥ इदानीं स्तोत्रफलं व्यंजयन् तमभिनंदति॥ प्रीतोऽहमिति। विजयेच्छया सृष्टीच्छया। गुणमयं निर्गुणमिति पदयोर्व्याहतिपरिहारार्थं दर्शयितुं समाख्याप्रमाणं दर्शयति ॥ सार्वज्ञादिति। अनेन गुणमयमित्येतदुक्तार्थं। निर्गुणमित्यस्य व्याख्यानं॥ सत्त्वादीति। तथा च गुणमयं सार्वज्ञादिगुणपरिपूर्णं मां निर्गुणं सत्त्वादिगुणशून्यं। अनुवर्णयन्प्रतिपादयन् यस्मादस्तौषीद्भगवांस्तेनाहं प्रीतोऽस्मि। मत्प्रीत्या च ते भद्रं कल्याणमस्त्वित्यर्थः। अत्र विजयेच्छयाऽस्तौषीदिति ब्रह्मकृतस्तोत्रस्य कामनया कृतत्वमुच्यते। तदुत्तमाधि-कारिणां निषिद्धं। अतोऽत्रोपपत्तिं प्रमाणेनैव दर्शयति ॥ आधिकारिकेति। स्वाधिकारमभि तत्संबंधि यदस्ति तत्कामनमित्यर्थः। तेन लोकानां विजयेच्छयेत्यत्रेदं नासंगतमिति ध्येयं। सदा भक्त्यादेरपि यत्कामनं तदपि विष्णोः प्रीतये भवतीत्यर्थः। तथा च ब्रह्मणो लोकसृष्टिव्यापारस्यापि स्वाधिकारसंबंधित्वात्तत्कामनस्य हरिप्रीतिसाधनत्वान्न तस्य निषिद्धत्वमिति भावः ॥ ३९ ॥ त्वत्कृतस्तोत्रेण यो मां भजते तस्यापि प्रसन्नो भवामि किमु तुभ्यमित्याशयेनाह ॥ य इति। सर्वकामवरेश्वरः

सर्वकामितवराणां दाने समर्थः ॥ ४० ॥ प्रीतोऽहमिति प्रीतिरेव फलत्वेनोक्ता तयाऽपि किं प्रयोजनमित्याकांक्षायामुत्तमाधिकारिणां मत्प्रीतिरेव परमपुरुषार्थरूपा । अतः सर्वकामिभिः सैवाशास्या मोक्षोऽपि तदर्थमेवाशास्य इत्याशयेनाह ॥ पूर्तेनेति । अत्र प्रीतेर्निःश्रेयसत्त्वं राज्यत्वं च कथमित्यतस्तदाभिप्रायमाह ॥ निःश्रेयसमिति । तथा च सप्तसु प्रथमेति सूत्रान्निःश्रेयसमिति प्रथमा सप्तम्यर्थे । राज्य शब्दोऽपि न रूढ्या देशपरः किंतु योगेन रंजनीयार्थकः । रंजन् राग इति धातोः । अतः पुंसामुत्तमाधिकारिणां निःश्रेयसे मोक्षेऽपि मत्प्रीतिरेव पूर्तादिभी राज्यं । लिंगव्यत्ययेन रंजनीया एष्टव्या । मोक्षस्तु तदर्थमेवेति तत्त्वविदां मतं । अतत्त्वविदां तु पूर्तादिना स्वर्गादिकमेव राज्यमिति मतमिति मूलार्थ इति भावः । अत्र प्रमाणसंवादमाह ॥ मुक्तस्यापीति । कर्तरि षष्ठी । मुक्तेनाप्युत्तमाधिकारिणा सर्वतः पूर्तादितो हरेः प्रीतिरेवानुरज्यते योग्यतानुसारेणेष्यत इत्यर्थः ॥ ४१ ॥ एतादृशमत्प्रीतौ मद्भक्तिरेव साधनमित्याशयेन तां विधत्ते ॥ अहमिति । अत्र प्रेयसामप्यात्मनां प्रेष्ठ इति स्वात्मापेक्षया हरेरतिशयेन प्रीतिविषयत्वमुच्यते । तत्कथमित्यपेक्षायां तदुपपादकं प्रमाणमेव पठति ॥ सर्वतोऽपीति । सर्वतो देहादेः । आत्मा जीवः । हि शब्दोऽत्रानुभवप्रसिद्धिद्योतकः । अनेन देहादिर्यत्कृते प्रिय इत्येतदुक्तार्थं । प्रियो हरिरुच्यत इति शेषः । ततश्च हे धातश्चतुर्मुख । अहं देहादिर्यत्कृते येषामर्थे प्रियस्तेषां प्रेयसामपि देहाद्यपेक्षयाऽतिशयेन प्रियाणामप्यात्मनां जीवानां श्रेष्ठः सन् प्रियत्वापादकत्वेनातिशयेन प्रीतिविषयः सन् आत्मांऽतर्यामी भवामि यतोऽतो मयि रतिं कुर्यादिति मूलार्थ इति भावः ॥ ४२ ॥ इदानीं सृष्टिकर्मणि तं नियोजयति ॥ सर्ववेदेति । सर्ववेदार्थविषयकेनात्मयोगिनाऽऽत्मानां जीवानामात्मा स्वामी यस्तद्विषयकध्यानादिरूपयोगवताऽऽत्मना मनसा इमा देवऋष्यादिरूपा या इदानीं मय्यनुशेरते ताः प्रजा यथापूर्वं पूर्वकल्पे यथाऽभूवन् तथा विचार्य सृज । वेदार्थानुसारेणैव नामरूपात्मकं प्रपंचं सृजेत्यर्थः । च शब्देन तदाश्रयान् भूरादिलोकांश्च सृजेति ग्राह्यं ॥४३॥ प्रधानपुरुषयोः प्रकृतिब्रह्मणोरीश्वरः । व्यज्य व्यक्तीकृत्य ॥४४॥

इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ३—१० ॥ ॥

॥ हरिः ॐ ॥ मे मया त्वयि वक्तृतयोपस्थिते सति वदस्व वद । संचोदितः प्रार्थितो हृदिस्थान्स्वहृदि विद्यमानान् ।

अविस्मृतानीति यावत् । भो भार्गव शौनक ॥ १ ॥ २ ॥ ३ ॥ आत्मन्यात्मानमित्यात्म शब्दद्वयस्यात्माश्रयत्वपरिहारायार्थ भेदं दर्शयति ॥ आत्मनीति । आत्मानमित्यस्यार्थः ॥ मन इति । अन्यथाऽवेश्येति क्रियाऽऽनुपपन्नेति दर्शयितुमावेश्येत्यस्यानुवादः ॥ ४ ॥ ५ ॥ यस्त्वेनाधिष्ठितं तत्पद्मंभश्च विलोक्य । कथं भूतं । स चासौ कालश्च तत्कालः प्रलयकालस्तेन कृतं वीर्यं पराक्रमो यस्य स तथोक्तः । तेन वायुना कंपितं ॥ ६ ॥ विवृद्धे विज्ञानबले यस्य स तथोक्तः । न्यपात्पीतवान् ॥७॥ कल्पितास्मि स्रक्ष्यामि ॥८॥ भगवान् ब्रह्मा कर्मणा लोकजनकादृष्टेन चोदितः प्रेरितः कर्मणि जगत्सर्जनरूपे चोदितो हरिणेति वा । एकं पद्ममुरुधाऽनेकप्रकारेण व्यभांक्षीद्विभाज । उरुधेत्युक्तमेव विवृणोति ॥ त्रिधेति । त्रिधा भूम्यंतरिक्षस्वर्गात्मना भाव्य कृत्वा द्विसप्तधा चतुर्दशभुवनात्मना । व्यभांक्षीदित्यनुवर्तते । चतुर्दशभुवनात्मना विभागपक्षे सप्तलोकस्योपचयमात्रामिति द्रष्टव्यं ॥९॥ एवमेव विभागे हेतुमाह ॥ एतावानिति । जीवलोकस्य जीवावस्थानयोग्यलोकस्य संस्थाभेदः स्थितिविशेष एतावान् एतावानेव । अत एवमेव विभागः कृत इति भावः । वैकुंठं ब्रह्मांडबाह्यदेशं च व्यावर्तयितुं समासत इत्युक्तं । नन्वन्यैः कर्तुमशक्योऽयं लोकविभागः । कथमनेनैव कृत इत्याशंकायां तदीयपूर्वार्जितपुण्यफलरूपोऽयमित्याह ॥ धर्मस्येति । अत्रानिमित्तस्येत्यस्य न विद्यते निमित्तं यस्येति व्याख्यानवारणायार्थमाह ॥ अनिमित्तस्येति । तथा च अः परब्रह्म निमित्तमुद्देश्यं यस्येति विग्रहलब्धार्थकथनमेतत् । अस्य शब्दस्य ब्रह्मवाचकत्वे स्यादिदं तदेव कुत इत्यत आह ॥ अ इति । श्रुतेरशब्दो ब्रह्मवाचीत्यवगम्यत इति शेषः । निषेधार्थत्वं तु बाधितं । लोकानां विजयेच्छयेत्युद्देश्यस्योक्तत्वादिति भावः ॥ १० ॥ यदात्थेति । अत्र लक्षण शब्दस्य स्वरूपार्थत्वमेव नासाधारणधर्मत्वमित्याशयेन तस्य स्वरूपार्थत्वेऽभिधानमाह ॥ लक्षणमिति । स्वरूपं लक्षणं लक्ष्यमात्मेति शब्दैः कथ्यत इत्यर्थः । तथा च ब्रह्मरुद्रविष्णुसंज्ञानि सकलनियामकानि वा रूपाणि यस्य तस्य यत्कालाख्यं स्वरूपमहं च गिरिशश्च विभुः स्वयं चेति उरुप्ररोह इति च बहुरूपत्वेनोक्तस्यैव निमिषायेत्यनिमिष शब्देन ब्रह्मस्तुतिकथनव्याजेनानंतानि बहूनि रूपाणि तत्कालाख्यं स्वरूपं च यथा यथावद्वर्णयेति मूलार्थ इति भावः ॥ ११ ॥ तत्र तावदुक्ताविधानि हरेर्बहूनि रूपाणि कालाख्यं च रूपं दर्शयन् अंडबाह्याभ्यंतरसृष्टिं निरूपयत्यस्मिन्नध्याये । तत्रादौ तावत्सृष्ट्याद्यर्थं गुणोपादानकर्तॄणि त्रीणि

द्यभिमानिप्रकृत्यादिकं तदतिरिक्तं परामृश्यते । तदन्यस्मिन्महदादावित्यर्थः । तथा च शब्दोऽवधारणे । स्वरूपावस्थितस्येत्यनेन यद्दार्ष्टांतिकतया विवक्षितं व्याप्तं कालादिकं तदतिरिक्ते परिच्छिन्नपरिमाणे महदादावेवानवस्थानं विवक्षितं न स्वस्वरूपातिरिक्ते सर्वत्रातो नासंभव इति भावः । ननु स्वरूपावस्थितस्येत्यनेनानन्यगतत्वमेवोच्यते न तूक्तरीत्या संकोच इत्यतोऽत्र प्रमाणमाह ॥ देव्यामिति । यद्यपि । तथाऽप्यनन्यगं स्वरूपावस्थितमुच्यते । आत्मवत्स्वरूपवदंतरंगत्वादिति भावः । सा प्रकृतिस्तदभिमानं कालादिकं च । तर्हि स्वरूपावस्थितस्येत्यनेन किं व्यावर्त्यमित्यत उक्तं ॥ महदादीति । तु शब्दोऽवधारणे । तदेवान्यगतमुच्यते । अतस्तदेव व्यावर्त्यमिति भावः ॥ ततश्चायं श्लोकार्थः ॥ सतो निर्दोषस्य यद्यो भावो रूपविशेषः स एव परममहानित्यन्वयः । ननु सच्छब्द उपचारेणान्यत्र मुक्तादावप्यास्ति । अतस्तद्रूपेष्वपि परममहत्त्वप्राप्तिरित्यत उक्तं ॥ पदार्थस्येति । सत्पदमुख्याभिधेयस्येत्यर्थः । तथा च परब्रह्मण इत्यर्थः । नन्वेवं परब्रह्मणो जगदाविष्टं यद्रूपं तत्रापि प्राप्तिः । तस्य परिच्छिन्नतया दृश्यमानत्वेनालक्ष्यत्वादत उक्तं ॥ स्वरूपावस्थितस्येति । अन्यत्र महदादावनवस्थितस्येत्यर्थः । नन्वेवमपि जगदावरकतया जगत्यनवस्थिते वासुदेवेऽपि प्रसंग इत्यत उक्तं ॥ कैवल्यमिति । व्यत्ययेन केवल इत्यर्थः । जगदावरक इति यावत् । ननु तथाऽपि परब्रह्मणः परमपुरुषादिरूपेषु वासुदेवाद्बहिरपि विद्यमानतया जगदनावरकेषु प्राप्तिरित्यत उक्तं ॥ निर्विशेष इति । दृश्यमानपरिच्छिन्नपरिमाणतादृशरूपविशेषा अपि नेत्यर्थः । नन्वेवं लक्ष्यतयाऽभिमते रूपे हस्तवितस्त्यादिपरिमितस्यैकदेशस्य प्राप्तिरत उक्तं ॥ निरंतर इति । तादृशैकदेशविशेषोऽपि नेत्यर्थः । व्याप्ततयैव दृश्यमान इति यावत् । तादृशो रूपविशेषः शून्यनामा नारायण एव स एव महान्दृश्यमानत्रिविधानंत्यवानित्यर्थः । अत्र परब्रह्मणो योगिभिर्दृश्यमानपरममहत्परिमाणरूपं लक्ष्यं । दृश्यमानपरिच्छिन्नपरिमाणानि रूपाण्यलक्ष्याणीति विवेकः ॥ २ ॥ एवं परमाणुपरममहती द्रव्ये दृष्टांततया लक्षयित्वेदानीं तदुभयलक्षणं दार्ष्टांतिकोभयविधकाले दर्शयति ॥ एवमिति । अत्रानुमित शब्दस्य लिंगजज्ञानविषयमात्रपरत्वे दार्ष्टांतिकयोर्लिंगकथनादुत्तरत्रापि तदकथनाद्योग्यताभाव इत्याशंकापरिहारायानुमित शब्दमनूद्य तस्यार्थमाह ॥ शास्त्रेति । अत्र लोक शब्देन लोकसिद्धदृष्टांतगृहीतव्याप्तिमूलकानुमानमुच्यते तथा चानुमित शब्दवाच्यं

द्विविधं । शास्त्रानुसारेण यथावज्ज्ञातं लिंगानुसारेण यथाज्ञानं चेति । अत्राभिधानमाह ॥ अनुमितेति । द्वयं द्विविधं । तु शब्दो यथाज्ञानस्य शास्त्रजत्वरूपविशेषसूचकः । लिंगजमित्यत्रापि यथाज्ञानमित्यनुवर्तनीयं । तथा चानुमितमपि द्विविधमिति भावः । उक्तलक्षणवत्तयोभयविधकालज्ञापकं शास्त्रं तावद्दर्शयति ॥ यावंतमिति । चरमस्तु विशेषाणामिति यद्द्रव्यपरमाणुलक्षणं देवलोकस्थमानुषैरंशांशिविभागं विना दृश्यमानत्वरूपमुक्तं तदेवात्र परमाणुरूपे कालेऽनेनोच्यते । यावदंतमनंतांशोपेतमपि त्र्यणुककालषष्ठभागपरिमितं कालं । तु शब्दोंऽशांशत्वविभागं विनेत्यर्थः । अवधारयेत्पश्येत् । देवजूको यज्ञादिना प्राप्तदेवप्रसादः । परमाणुकः परमाणुरूपतया ज्ञातव्यः । स्वरूपावस्थितस्येत्यादिना यत्परममहद्द्रव्यलक्षणमुक्तं तत्परममहति काले दर्शयति ॥ सर्गाद्यैरिति । सर्गस्थितिसंहारैरनवच्छिन्नो न युक्त इत्यर्थः । सर्गकालादिकालत्रिकाभिन्न इति यावत् । तस्मात्कालत्रयादनंतरः किंचिदधिक इति शब्देनाप्यनवच्छिन्नो युक्तो न । एतादृशशब्दप्रतिपाद्यकालेऽपि नात्र लक्ष्यतयाऽभिमत इत्यर्थः । अपि तथा शब्दो समुच्चये । नो भवेदेवेत्येवकारान्वयः । पूर्वापरादिभेदस्तद्रूप एकदेशोऽप्यत्र विवक्षितो नेत्यर्थः । स कालः प्रवाहतोऽपरिच्छिन्नः परमो महान्परममहच्छब्दवाच्यतया ज्ञेय इत्यर्थः । ननु मूले एवं शब्देन स्वरूपावस्थितेत्यस्य यत्कैवल्यमित्यादिनोक्तं यत्परममहद्द्रव्यलक्षणं तद्दार्ष्टांतिके परममहतिकालेऽतिदिष्टमुदाहृततत्प्रमाणेन त्वन्यथैव तल्लक्षणमुक्तमतो विरोध इत्यत आह ॥ स्वरूपावस्थितस्येति । अत्रापीत्यन्वयः । प्रमाणेऽप्यर्थत उक्तानीत्यर्थः । स्वरूपावस्थितेत्यस्य तात्पर्यं ॥ सर्गाद्यैरनवच्छिन्न इति । तदनंतर इत्यपीति कैवल्यमित्यस्यार्थः । अविशेषमित्यस्यार्थः ॥ परमाण्वादीति । निरंतर इत्यस्य पूर्वपरादिभेदो नेत्यर्थ इति द्रष्टव्यं । विमतः कालः परमाणुपदवाच्यस्तल्लक्षणवत्त्वात् द्रव्यपरमाणुवत् । विवादास्पदः कालः परममहानिति व्यवहर्तव्यस्तल्लक्षणवत्त्वात् शून्यनामकब्रह्मवत् । इत्यनुमानेऽप्यत्र द्रष्टव्ये । नन्वत्र कालशब्दस्योपलक्षकतया प्रकृत्यादिकमपि दार्ष्टांतिकांतर्भूतमित्युक्तं । तत्र कुत्रापि त्रिविधानंत्यरूपं परममहत्त्वं नास्ति । गुणत आनंत्यस्यान्यत्र काप्यभावात् । अतोऽत्र कालांतर्यामी हरिरेव दार्ष्टांतिकतया विवक्षित इति वक्तुमन्यत्र त्रिविधानंत्याभावे तावत्प्रमाणमाह ॥ देशत इति । हरिरेवेति संबंधः । च शब्दोऽवधारणे । तथाऽन्यस्य नैवेत्यर्थः । एतदेव विशदयति ॥ प्रकृतेरित्यादिना । देश-

कालतो देशकालाभ्यां । आनंत्यमिति वर्तते । कालतश्चानंत्यमिति संबंधः । नन्वचेतनेषु प्रकृत्यादिषु गुणानंत्यासंभवेऽपि कालाद्यभिमानिन्यां चेतनप्रकृतौ तत्संभावितमित्याशंकामपाकरोति ॥ कालशब्दात्मिकेति । शब्दो वर्णात्मकः । कालशब्दात्मिका तदुभयाभिमानिनी। तु शब्दो यद्यपीत्यर्थे। सैव चेतना प्रकृतिरेव। हरेः सामर्थ्यलेशो हरिसामर्थ्यलेशसमानं सामर्थ्यमस्या नेत्यर्थः। ज्ञानानंदादिगुणेष्वपि साम्यं नेत्यर्थः। नन्वथाऽपि न चान्यस्येत्युक्तमयुक्तं। सर्वोत्तमानां वाय्वादीनां तत्संभवादित्याशंकां कैमुत्येनापाकरोति ॥ ज्ञेय इत्यादिना । इंद्राद्या अवरा इति वर्तते । तथा च गुणानंत्यशून्यप्रकृत्यपेक्षयाऽपि तारतम्येनावरेषु वाय्वादिषु गुणानंत्यमसंभावितमेवेति भावः । एवमन्यत्र । त्रिविधानंत्यरूपपरममहत्त्वस्य बाधितत्वात्तदुपपत्तये कालांतर्यामिहरिरूपमेव दार्ष्टांतिकतयाऽत्र विवक्षितमित्याशयेनैवं कालोऽप्यनुमित इति श्लोकद्वयतात्पर्यं प्रमाणेनाह ॥ अण्वादीति । आदिपदेनापरिच्छिन्नकालग्रहणं । संस्थानं परमाण्वाद्यवस्था तद्भोक्तृत्वं तन्नियामकतया तादृशावस्थयैव तत्र स्थितत्वं तस्मादित्यर्थः। अण्वादिनामवाच्योऽसावित्यंतेन द्वितीयश्लोकस्य तात्पर्यमुक्तं । कालश्चेत्यनेनाद्यस्यापि परमेश्वर इत्यनेन भगवानित्येतदुक्ततात्पर्यं । परमात्मनि युगपदणुत्वमहत्वोपपादकमेतत् । स कालः परमो महानिति पदद्वयतात्पर्यमुक्तं । अण्वादिनामवाच्योऽसाविति । कालश्चेत्यनेन कालशब्दत्रयमुक्तार्थं । सतोऽविशेषभुगित्यादिकमप्रतीत्या व्याख्याति ॥ ततो ब्रह्मण इति । शून्यनामकस्येत्यर्थः । अविशेषमखंडस्वरूपमवस्थां भुंक्तेऽनुभवति । प्राप्नोतीति यावत् । दृष्टांतदार्ष्टांतिकयोर्भेदशंकानिरासायोक्तं ॥ तदेव ब्रह्मेति । अनेन मूले तु शब्दार्थो दर्शित इति ज्ञातव्यं । नन्वेवं दार्ष्टांतिकस्य दृष्टांतादेः पुनर्वचनं व्यर्थमित्याशंकां परिहरन् स कालः परमो महानित्यस्यार्थमाह ॥ तदपीति । अपरिच्छिन्नकालांतर्गतमपीत्यर्थः । दृष्टांतीकृतरूपसमुच्चयार्थोऽपि शब्दः । तथा च रूपविशेषापेक्षया पुनर्वचनमिति भावः । अत्र सतोऽविशेषभुगित्यनेन सूचितं हेतुं दर्शयति ॥ तस्यापीति । नन्वपरिच्छिन्नकालगतोऽपि हरिः सर्वज्ञत्वात्परमाण्ववस्थां भुंक्ते । एवं परमाणुकालगतोऽपि सतोऽविशेषभुक् । तथा च कथमिदमसंकीर्णतयोच्यत इत्याशंकां प्रमाणेनैव परिहरति ॥ सर्वं सर्वत्रेति । विशेषादेवासाधरण्यादेव भोक्तृवत्तत्तद्वस्तुभोक्तृवत्स्थितः। कुत इत्यत उक्तं ॥ निजैश्वर्यादिति । अचिंत्यात्मेत्यादिविशेषणानि निजैश्वर्यस्याघटितघटकत्वमुपपादयितुं ॥ ततश्चायं श्लोकार्थः ॥

न केवलं परमाणुपरममहती द्रव्ये एवोक्तविधेऽनुमिते शास्त्रादिना यथावज्ज्ञाते किंतु कालोऽपि कालांतर्यामी कालनामा हरिरपि सौक्ष्म्ये परमाणुत्वे विषये स्थौल्ये परममहत्त्वे च विषये एवमुक्तलक्षणवत्तयाऽनुमितः शास्त्रानुसारेण लिंगानुसारेण च यथावज्ज्ञातः । कथं भूतः सौक्ष्म्ये कथं भूतश्च स्थौल्येऽनुमित इति विविच्याह ॥ संस्थानेति । भगवान्परमेश्वरः संस्थानं । अण्वादिकालावस्थात्तदुक्तिः । तादृशावस्थयैव तन्नियामकतया तत्रावस्थितिः । तथाऽव्यक्तोऽस्मदाद्यप्रत्यक्षः परमाणुरूपद्रव्यसाम्यभुक् सौक्ष्म्ये विषयेऽनुमितो व्यक्तभुक् । व्यक्तं व्याप्ततयैव दृश्यमानं यच्छून्यनामकं रूपं तत्साम्यमनुभवतीति व्यक्तभुक् । अत एव विभुः कालांतर्यामी हरिः स्थौल्येऽनुमितः । एतदेव विशदयाति ॥ स काल इति । कालः कालांतर्यामी तन्नामा हरिः परमाणुः परमाणुकालसंस्थानभागेन परमाणुः परमाणु शब्दवाच्यः । वै शास्त्रलिंगानुसारेण प्रसिद्धः । स कः । यः परमाणुतां पूर्वं दृष्टांततयोक्तः परमाणुद्रव्यसमानतां भुंक्ते प्राप्नोति स कालः कालांतर्यामी परममहाकालसंस्थानभोगेन परमो महान्परममहाकाल शब्दवाच्यः सः को यः सतः शून्यनामकस्य ब्रह्मणोऽविशेषः । साम्यं तद्भुक् तद्वान् । तु शब्दोऽत्र दृष्टांतदार्ष्टांतिकयोर्भेदाभावरूपविशेषसूचकः ॥ ३ ॥ ४ ॥ इदानीं परमाणुपरममहतो मध्यमगतानां कालावयवानां परिमाणानि नामानि वक्तुं तावदादौ द्व्यणुकत्र्यणुकनामकं द्रव्यस्वरूपं दर्शयति ॥ अणुरिति । द्वौ परमाणू अणुर्द्व्यणुकापरनामा । त्रयोऽणवस्त्रसरेणुनामकः । स तु प्रत्यक्ष इत्याह ॥ जालार्केति । जालं गवाक्षं । तत्र वर्तमानार्करश्मिनावगतः । कोऽसौ । योऽतिलघुत्वेन खमेवानुपतन्नगात् । गतः । अत्र नगादिति पदच्छेदभ्रमवारणाय पदच्छेदं दर्शयति ॥ अगादिति । नगादिति छेदेऽर्थासंभव इति भावः ॥ ५ ॥ इदानीं त्रुटिकालमारभ्य कालस्वरूपं दर्शयति ॥ त्रसरेणुत्रिकामिति । त्रसरेणुनामकद्रव्यसाम्यं भुंक्ते प्राप्नोति । त्रुटिस्त्रुटिनामकः कालः । अत्र त्रुट्यर्धांतर्गतस्तन्नामा हरिरपि विवक्षितः । अत एव भुंक्त इत्युक्तं । अत्र द्व्यणुकसाम्यभुक् द्व्यणुकनामकः कालस्त्र्यणुकसाम्याभुक् त्र्यणुकसंज्ञकः काल इत्यपि वक्तव्यं । शास्त्रेणानयोरव्यवहारान्न स्वशब्देनोपपादनामिति ज्ञातव्यं । ता उक्तरूपास्तिस्रस्त्रुट्यो भागा यस्य स वेधो वेधनामकः कालः । तैर्वेधैः । तु शब्दोऽवधारणे ॥ ६ ॥ ते निमेषास्त्रयः क्षण इत्याम्नातः । ताः काष्ठा दशपंच च लघु लघुसंज्ञकः कालः ॥ ७ ॥ दशपंच च लघूनि

नाडिका घटिका ते द्वे नाडिके मुहूर्तं षण्णाडिकाः प्रहरो दिवसस्य पंचमो भागः सप्त वा नाडिका यामो दिवसस्य चतुर्थो भागः । अत्र सप्त वेति विकल्पः कुत इत्यतोऽभिप्रायमाह ॥ राशिभेदादिति । अत्र राशि शब्देन संक्रमणं लक्ष्यते । तथा च कर्कादिसंक्रमणभेदमपेक्ष्येत्यर्थः । ऊनातिरेकात् । नाडीनामिति शेषः । ततश्च कर्कसंक्रणमारभ्य धनुः संक्रमण-पर्यंतं नाडीनामूनात्क्रमेण न्यून्यत्वाद्धनुसंक्रमणसमये यामस्य सप्तनाडीत्वं । मकरसंक्रमणमारभ्य मिथुनसंक्रमणपर्यंतं नाडीनां क्रमेणातिरेकादाधिक्यान्मिथुनेऽष्टनाडीत्वं । मेषतुलयोः सार्धसप्तनाडीत्वमित्यादिविशेषसूचनाय वेति विकल्प इति भावः ॥ ८ ॥ नाडिका परिज्ञानाय तत्पात्रलक्षणमाह ॥ द्वादशार्धेति । अत्राप्रतिपत्तिविप्रतिपत्तिनिरासाय श्लोकतात्पर्यं प्रमाणे-नैव दर्शयन् माष शब्दार्थं वक्तुं तदुपयुक्तं तावदाह ॥ काकणिकेति । काकणिकविंश शब्दौ मानविशेषवाचकौ । तं काकणिका-चतुष्कं । तैः कृष्णलैः । तु शब्दोऽवधारणे । माप शब्दोऽपि मानविशेषपरः । अनेन मूले माष शब्द उक्तार्थः । तु शब्दोऽ-वधारणे । माषाणां चतुष्टयं यस्य स तथोक्तं तस्मिन् ॥ सुवर्ण इति शेषः । चतुरंगलदीर्घे चतुरंगुलसमविस्तारदीर्घदंडाकारेण कृते सति परिणाहेन तद्दंडविस्तारेण द्वारं यावत्तावद्विधीयते । नाडीपात्रस्य नाडीज्ञापकपात्रस्य । अनेनोन्मीयते नाड्यनेनेत्युन्मान शब्दार्थो दर्शित इति ज्ञेयं । द्वारमिति शेषः । अनेन चतुर्भिरित्यादेः छिद्रमित्यंतस्य तात्पर्यमुक्तं । कथं भूतस्य षट्पलस्य । षट्पलपरिमिति ताम्रमयस्य । अनेद्वादशार्धेत्यस्य । शुभे जले प्रस्थस्य प्रकर्षेण स्थितस्य । प्रस्थजलपूर्तियोगस्येति वा । शुभ शब्दार्थं सूचयंस्तद्व्यावर्त्यं दर्शयति ॥ भाराधिक्येनेति । क्षिप्रं पूर्तिर्भविष्यति नाडीपात्रस्य । प्रस्थजलेनेति शेषः । तथा च भाराधिक्यादिदोषशून्यत्वमेव जलस्य शुभत्वमिति भावः । एतादृशशुभजलप्राप्त्यै देशकालावाह ॥ तस्मादिति । तु च शब्दाववधारणे । न समं भवेत् । उक्तरीत्या नाडीपात्रस्य प्रस्थजलपानं नाडीकालेन समं न भवेदित्यर्थः । प्रयागोदकालाभे नाडीशुद्धिप्रकारं प्रमाणेनाह ॥ निर्मलेनेति । भाराधिक्यादिदोषशून्येनेत्यर्थः । सूर्यस्यांशवो यस्मिंस्तत्सूर्यांशुस्तद्वारि च । अत एव समोष्णेन । भावप्रधानो निर्देशः । शैत्यसमोष्णेन ॥ तथा चायं श्लोकार्थः ॥ उन्मीयतेऽनेनेत्युन्मानं पात्रं द्वादशार्धपलं षट्पलपरि-मितं ताम्रमयं तच्च तदुन्मानं च । चतुर्भिः स्वर्णमाषैश्चतुरंगुलैश्चतुरंगुलविस्तारदंडाकारेण परिणितैश्चतुरंगुलविस्तारपरिमितदैर्घ्येण

माषचतुष्कस्वर्णनिर्मितदंडेनेति यावत् । कृतं छिद्रं यस्य तत् । पात्रं यावद्यावता कालेन प्रस्थं प्रस्थपरिमितं जलं पिबेत् । तेन जलेन पूरित सन्निमज्जति । तावान्कालः । नाडिकेति शेषः । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं पूर्तिरल्पत्वे च विलंबनात उभयोर्नियम उक्तः ॥ ९ ॥ अहनी अहोरात्रे । अत्र द्विवचनेनैव विवक्षितोभयलाभे पुनरुभे इति व्यर्थमित्याशंकां तत्सार्थक्या- भिधायकप्रमाणेनैव परिहरति ॥ यत्रेति । यत्र वाक्ये उभयोः । विजातीययोरिति शेषः । स शब्द एक एव शब्दः प्रयुक्तः स्यात् । तत्र द्विवचनेऽपि द्विवचनप्रयुक्तेऽपि विजातीयद्वयग्रहणार्थोभे इति पुनः प्रयोक्तव्यमेवेत्यर्थः । अन्यथा सजातीयद्वयग्रहणमात्रेण द्विवचनपर्यवसानेऽपेक्षितस्य विजातीयद्वयस्य बोधो न स्यादिति भावः ॥ १० ॥ विधेयलिंगापेक्षया तदित्युक्तं । तन्मनुष्यमासः पितॄणामहर्निशमहोरात्रौ तौ । द्वौ मासौ ऋतुः । षण्मासोऽयनं । तत्तु दाक्षिणं चोत्तरमिति द्विविध- मित्यर्थः । दिवीत्यस्योत्तरत्रान्वयः ॥ ११ ॥ दिवि स्वर्गे देवानामयने द्वेऽहनी अहोरात्रे । रात्रिरपि तेषामहस्तुल्येति ज्ञापनाय उभे इति नोक्तं । द्वादशमनुष्यमासा एको वत्सर इत्यर्थः । परमुत्तमं ॥ १२ ॥ आदित्यादि ज्योतिश्चक्रं । परमाण्वादिकालो वा । स्वपरिभ्रमणेनैव नृणामायुः प्रवर्तयतीत्यत आह ॥ ग्रहेति । ग्रहाः सूर्यादयः । ऋक्षाण्यश्विन्यादीनि । तारा ध्रुवाद्याः । ग्रहनक्षत्रताराणां चक्रं । चंक्रमणाच्चक्रनामकं मंडलं तत्र स्थितः । परमाण्वादिना संवत्सरावसानेन कालेन सह जगन्मनुष्यादि- रूपं पर्येति सततं गच्छति । हरिरेव सूर्यादीनां मंडलेषु स्थित्वा परमाण्वादिकालविशेषान्सृष्ट्वा तन्नियामकेन तत्तन्नामकेन स्वरूपविशेषेण सह मनुष्याद्यायुः प्रवर्तयति न सूर्यादय एव तेषामस्वतंत्रत्वादिति भावः । अनिमिष शब्दव्याख्यानमुत्तरत्र भविष्यति । विभुः समर्थः । अनेन ग्रहादीनामस्वातंत्र्यं सूचयति ॥ १३ ॥ उक्तरीत्या कालविशेषवाचकपरमाण्वादि शब्द- वाच्यो हरिरेवेत्यत्र युक्तिमाह ॥ संवत्सर इति । भाष्यते । वेदादाविति शेषः । तथा च हरिः परमाण्वादिकालविशेष- वाचकशब्दाभिधेयस्तत्समानयोगक्षेमं च संवत्सरादि शब्दवाच्यतया श्रुत्यादिसिद्धत्वादिति युक्तिरुक्ता भवतीति ज्ञातव्यं । अत्र संवत्सरादि शब्दानामर्थविशेषं भगवत्परं प्रमाणेनैव दर्शयति ॥ इडेति । असौ हरिरश्विन्यादिसप्तविंशतिनक्षत्राणां द्वादश- वारमावृत्तौ यावान्कालस्तस्मिन्काले नियामकत्वेन स्थित इत्यर्थः । तिथीनां शुक्लप्रतिपदमारभ्यामावास्यादिपर्यंतानां त्रिंश-

त्संख्याकानां द्वादशवारमावृत्तमावृत्तिर्यस्मिंस्तद्द्वादशावृत्तस्तस्मिन्काले । स्थित इत्यनुवर्तते । अनुवत्सरोऽनुवत्सरनामा ॥ अन्हां षष्ठ्युत्तरशतत्रयेति । यं कंचनदिवसमारभ्य गणनायां यावता कालेनान्हां षष्ठ्युत्तरत्रयं भवति तावति काले स्थित इत्यर्थः । स्थितीनां द्वादशावृत्ते तु वृद्धिह्राससंभवेनान्हां षष्ठ्युत्तरशतत्रयत्वनियमः । अतोऽस्य ततो भेद इति ज्ञातव्यं । गुरोर्बृहस्पतेर्मेषादिराशिष्वावर्त्त आवृत्तिर्यस्मिन्द्वादशवत्सरात्मके काले स गुर्वावृत्तो यस्मात् द्वादशे द्वादशमेंऽशे भागे स्थः स्थितः । स परिवत्सपरिवत्सरस्तन्नामा । सौरेः सूर्यसंबधिनि द्वादशके संक्रमणभेदेन द्वादशसंख्याके मासे माससमुदाये संवत्सरस्तन्नामा । एवं कालविशेषवाचकशब्दाभिधेयत्वमुक्त्वेदानीं कालशब्दाभिधेयत्वमाह ॥ एवमिति । अनेनैवं कालोऽप्यनुमित इत्यादौ ये कालशब्दास्तेषां तात्पर्यमुक्तमेवेत्यवगंतव्यं । इदानीमानिमिषपदमप्रतीत्या प्रमाणेनैव व्याख्याति ॥ सर्वदेति । महात्मनस्तस्य हरेरनिमिषत्वमनिमिष शब्दवाच्यत्वं सर्वदा दर्शनानिमित्तात् । चक्षुर्निमीलनं निमिष इत्युच्यते । स यस्य न विद्य इत्युक्तेऽनिमिषशब्दो नार्थात्सर्वदा दर्शनमेवायातीति भावः । वा शब्दस्तु शब्दार्थः । कालस्थस्य तस्य संततं गमनाद्वा निमित्तादित्यर्थः । मिष गताविति धातोः । मिषो गमनं निकृष्टो मिषो निमिषो न विद्यते निमिषो यस्येति विग्रहे संततं गमनं लभ्यते । तच्च कालस्य तदंतस्थस्य हरेश्चास्तीति प्रदर्शनाय कालस्थस्येत्युक्तं । अनेन यतः पर्येत्यतोऽनिमिषोऽनिमिप शब्दवाच्य इति मूलयोजनां सूचयति । यद्यपीदं पदं पूर्वश्लोकस्थं पूर्वमेव व्याख्येयं तथाप्युत्तरश्लोकेऽपि कर्तृसमर्पकतयाऽस्य संबंधोस्तीति ज्ञापनाय तद्व्याख्यानानंतरं व्याख्यानमिति ज्ञातव्यं ॥ १४ ॥ एतादृशकालनियामको हरिः परमोपकारित्वात्सर्वैः पूजनीय इत्याशयेनाह ॥ य इति । अत्र भ्रमायेति पदच्छेदेऽर्थासंभवमालोच्याकारप्रश्लेषेण छेदं दर्शयति ॥ अभ्रमायेति । भूतभेद इत्यत्र षष्ठीतत्पुरुषो बाधितार्थकः । अतो भूतानां भेदो यस्मादिति व्यधिकरणो बहुव्रीहिरित्याशयेन तत्तात्पर्यमाह ॥ भूतभेदक इति । क्रतुभिरित्यस्य यज्ञार्थत्वेऽसंगतिरतोऽत्र विवक्षितमर्थं दर्शयति ॥ क्रतुभिरिति । प्रज्ञानामसु पाठादिति भावः । भूतानां भेदस्य स्वत एव सिद्धत्वात्कथमस्य भूतभेदकत्वं कथं चाभ्रमायेत्यस्य प्रयोजनत्वमित्यतः श्लोकतात्पर्यं प्रमाणेनैवाह ॥ भूतानामिति । तथा च भेदपदं ज्येष्ठ्यादिरूपधर्मपरं । तेन च तत्ज्ञानमुपलक्षणीयमिति भावः । अभ्रमायेत्यस्य तात्पर्यं ॥ यज्ञादिवृत्तय इति ।

आदि पदेन प्रातरादिकालविहितकर्मांतरग्रहणं । कालपरिज्ञानाभावे संगवादिकालेषु मध्यंदिनत्वादिभ्रमप्रसंगेन यज्ञादिप्रवृत्तिः सम्यङ्न भवतीति भावः । सृज्यानामंकुरादीनां प्रतिदिनं वर्धने शक्तिं सृज्यविषये कारणशक्तिमिति वा बोधयन् । अनेन सृज्यशक्तिमुच्छ्वसयन्नित्येतदुक्तार्थं कालस्थ इत्यनेन वत्सरपदमुक्तार्थं । वर्तत इत्यनेन वर्तत इत्यध्याहार्यमिति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ यः कालांतर्यामी हरिः सृज्यशक्तिमुरुधाऽनेकप्रकारेणोच्छ्वसयन् उद्बोधयन्पुंसो विहितकर्मकर्तुरभ्रमाय यज्ञादिकर्मांगकालभ्रमाभावाय । यज्ञादिप्रवृत्तय इति यावत् । दिव्यंतरिक्षे धावति । ज्योतिश्चक्रं गत इति शेषः । प्रयोजनांतरमाह । भूतानां प्राणिनां भेदो ज्यैष्ठ्यकानिष्ठ्यभेदज्ञाप्तिर्यस्मादिति । कालाख्यया स्वशक्त्येत्यन्वयः । स्वरूपशक्त्या सहकारिशक्त्या चेत्यर्थः । प्रयोजनांतरमाह ॥ गुणमयीमिति । क्रतुभिः स्वप्रज्ञाभिः सत्त्वादिमयीं प्रकृतिं वितन्वन्विस्तारयन् सृष्टिकाले रजोमयीं स्थितिकाले सत्त्वमयीं संहारकाले तमोमयीं विस्तारयन्यो वर्तते तस्मै संवत्सरपंचकस्थाय तन्नाम्ने हरये बलिं पूजां हरत कुरुतेति ॥ १५ ॥ इदं वर्षशतगणितमायुर्मानं नृणामितरेषां दिनमानादिकं च कल्प्यते प्रतिदिनं सृज्यत इति कल्पास्त्रैलोक्यं तस्माद्बहिर्महरादिषु ये विदो ज्ञानिनः स्युस्तेषां परेषामुत्तमानां गतिं स्थितिं दिनमानादिरूपामाचक्ष्व ॥ १६ ॥ मैत्रेयस्य वक्तव्यार्थे ज्ञानमस्तीत्याह ॥ भगवानिति । कालस्य कालांतर्यामिणो गतिं स्थितिं मानं वा कुतो यस्माद्धीरा भवदादयो योगराद्धेन योगसिद्धेन चक्षुषा । ज्ञानदृष्ट्येति यावत् । विश्वं सर्वं विचक्षते विशेषेण पश्यंति तस्मादित्यर्थः ॥ १७ ॥ त्रैलोक्याद्बहिःस्थितानां दिनादिमानं वक्ष्यन्नादौ तावत्कृतादिचतुर्युगानां तत्संध्याकालानां च परिमाणं वक्ति ॥ कृतमिति । दिव्यैर्देवानां विद्यमानैः । निरूपितं विद्वद्भिः ॥ १८ ॥ द्वादशसहस्रवर्षाणां चतुर्षु युगेषु त्रिसहस्ररूपैश्चतुर्भिर्भागैः । किं साम्येन निरूपणं नेत्याह । चत्वारीति । कृतयुगे चत्वारि सहस्राणि त्रेतायुगे त्रीणि द्वापरे द्वे सहस्रे कलियुगे त्वेकं सहस्रमिति दशसाहस्र्या विनियोगः । अवशिष्टसहस्रद्वये विंशतिशतानि भवंति । तेषां चतुर्युगसंध्यांशयोर्विनियोगः स कथमित्यपेक्षायामाह ॥ द्विगुणानि शतानि चेति । कलियुगपूर्वापरसंधिमारभ्य द्विगुणानि ज्ञेयानीत्यर्थः । तथाहि । कलियुगपूर्वापरसंध्ययोरेकैकं शतं द्वापरपूर्वापरसंध्ययोर्द्वे शते त्रेतायुगपूर्वापरसंध्ययोस्त्रीणि त्रीणि शतानि । कृतयुगपूर्वापरसंध्ययोश्चत्वारि

श्चत्वारीति ॥ १९ ॥ एवं तर्हि कृतादियुगत्वं कियंतः कालस्येत्यपेक्षायामाह ॥ संध्यांशयोरिति । संध्यासंध्यांशयोरंतस्थो यः काल इत्यन्वयः । कृतादियुगपूर्वापरकोटिसंबंधः कालः संध्यातदुत्तरकालविशेषः संध्यांश इति ज्ञातव्यं । शतसंख्ययो रुक्तक्रमेणैकत्वादिविशेषितशतसंख्ययोः । धर्मो युगधर्मः ॥ २० ॥ युगधर्मस्थितिं दर्शयाति ॥ धर्मश्चतुष्पादिति । धर्मः सत्यादिरूपश्चतुष्पात्संपूर्णः । मनुजानुदिश्य स एवान्येषु त्रेतादियुगेषु । अधर्मेणासत्यादिरूपेण हेतुना प्रतियुगं पादेन वर्धताव्येति क्रमेण ह्रसति ॥ २१ ॥ एवमुपयुक्तमुक्त्वेदानीं परेषां गतिमाचक्ष्वेति पृष्टस्योत्तरमाह ॥ त्रैलोक्यादिति । त्रैलोक्याद्बहिर्महर्लोकमारभ्य ब्रह्मणः सत्यलोकपर्यंतं युगसाहस्रं चतुर्युगसाहस्रं दिनमुच्यत इत्यर्थः । तावत्येव चतुर्युगसहस्रस्यैव यद्यस्यां विश्वसृक् ब्रह्मानिमीलाति चक्षुर्निर्मीलनं करोति । स्वपितीति यावत् ॥२२॥ तत्र दिनस्थितिमाह ॥ निशावसान इति सार्धैश्चतुर्भिः । लोकानां भूरादीनां जनानां कल्पः सृष्ट्यादिरूपस्तावदनुवर्तते यावद्भगवतो ब्रह्मणो दिनं स्यात् । कथं भूतं दिनं । चतुर्दशमनून् भुंजन् भुंजानं । नन्वत्र कथं जडस्य दिनस्य भोक्तृत्वमुच्यत इत्यतोऽभिप्रायमाह ॥ दिनस्थ इति । भगवदभिप्रायेण भोगोक्तिः । अत एव भुंजन्निति पुल्लिंगप्रयोग इति भावः । अत्र भोगोऽनुभवः प्राप्तिर्वा ॥ २३ ॥ यद्यप्येकस्मिन्दिने चतुर्दशमनवो भवंति तर्हि ते किं युगपदेव दिनं भुंजते । क्रमतश्चेदेकैकस्य कियान्काल इत्यपेक्षायामाह ॥ स्वं स्वमिति । तथा च न युगपद्भोग इति भावः । द्वितीयस्योत्तरमाह ॥ साधिकेति । महायुगानां किंचिदधिकैकसप्ततिर्मनुकाल इत्यर्थः । अत्राधिक्यं कियता कालेनेत्यपेक्षायां श्लोकतात्पर्यं प्रमाणेनैवाह ॥ युगैकेति । महायुगैकसप्ततेरित्यर्थः । सार्धाष्टादशलक्षकमित्यनेन साधिकेत्येतद्व्याख्यातमि[त] ज्ञातव्यं । मनुप्रलयकालोऽपि साधिकेत्यत्राधिक शब्देन विवक्षित इत्याशयेन मनूनां प्रलयकालपरिमाणमाह ॥ सहस्रमिति । शतानां चतुरुत्तरं वत्सराणां सहस्रमेव मनोः प्रलयकालश्चेत्यन्वयः । शतचतुष्टयेनाधिकं वत्सरसहस्रमेकैकस्य मनोः प्रलयकाल इत्यर्थः । आद्येषु षट्सूक्तस्यापवादमाह ॥ पंचोत्तरमिति । शतानां पंचोत्तरं पंचशतोत्तरं वत्सराणां सहस्रमित्यर्थः । अथापि चेति निपातसमुदायः । त्रिशतोत्तरमिति पक्षांतरत्वद्योतकः । तत्रापि प्रथमेपवादमाह ॥ प्रथम इति । स्वायंभुवमन्वंतरे वत्सराणां द्विसहस्रं मनोरंतर्मनुप्रलयकाल इति प्रकीर्तितं । शास्त्र इति शेषः । तथा चाद्येषु षट्सु प्रथमे द्विसहस्रं

द्वितीये पंचशतोत्तरं सहस्रं तृतीये चतुःशतोत्तरं शिष्टेषु त्रिशतोत्तरमिति ज्ञेयं । मनुप्रूक्तप्रकारं इंद्रादावतिदिशति ॥ एवमिति । इंद्रादीनां । आदि पदं ऋष्यादिसंग्रहार्थं । भवेत् । मुक्तिकालः प्रलयकालश्चेति शेषः । अनेन ऋषयः सुरा इत्यादिकमुक्तार्थं । मन्वंतरेष्वधिकृतानाह ॥ मन्वंतरेष्विति । तद्वंश्या मनुवंशभवा राजानः क्रमेण भवंति । मनवो ऋषयः सुराः सुरेशा इंद्रश्च । तान् सुरेशान् । अनुचरतो ये ये गंधर्वादयस्तेऽपीत्येते युगपदेव भवंतीत्यर्थः ॥ २४ ॥ ब्राह्मो ब्रह्मकृतः । त्रैलोक्यं वर्तयतीति त्रैलोक्यवर्तिनः । संभव उत्पत्तिः ॥२५ ॥ मन्वादीनां जगत्पालकत्वममुख्यं मुख्यतो भगवानेवैतेषु स्थित्वा जगत्पालयतीत्याह ॥ मन्वंतरेष्विति । सत्त्वं सत्त्वगुणं बिभ्रत्कार्योन्मुखं कुर्वन्स्वमूर्तिभिः स्वस्य मूर्तिर्येषु तैः । स्वरूपविशेषावेशवद्भिः । स्वस्य प्रतिमाभूतैरिति वा । यज्ञतापसादिस्वमूर्तिभिर्मन्वादिभिर्द्वारभूतैरिति वा । उदितपौरुष आविष्कृतपराक्रमः ॥ २६ ॥ रात्रिस्थितिमाह पंचभिः । तमोमात्रां तमोगुणं । मात्र शब्दस्य गुणपरत्वेनान्यत्र व्याख्यातत्वात् । उपादाय कार्योन्मुखीकृत्य । प्रतिसंरुद्धः प्रत्याहतो विक्रमः पालनानुकूलो व्यापारो यस्य स तथोक्तः । दिनात्यये रात्रौ शेषे प्रलयजलगतानंतभोगपर्यंके तूष्णीमास्ते शेत इत्यर्थः । अत्र कालेनानुगत इत्यर्धस्यार्थं प्रमाणेनैव दर्शयति ॥ ब्रह्मणेति । तु शब्दः प्रसिद्धकालव्यावृत्त्यर्थः । अनेन कालेनेत्येतदुक्तार्थं । अनुगत इत्यस्यार्थः ॥ सहेति । तूष्णीमास्त इत्यस्य तात्पर्यं ॥ शेत इति । पूर्वश्लोकस्थं भगवानिति पदमत्रानुवर्तनीयमित्याशयेन हरिरित्युक्तं । दिनात्यय इत्यस्यार्थः ॥ निशीति ॥ २७ ॥ तमेव प्रसुप्तमेवानुसृत्य । तत्संकल्पानुसारेणेति यावत् । शशिभास्करयोर्निर्मुक्त निर्मोकोऽभावः । निर्मुक्तशशिभास्करस्तस्मिंश्च सति । अंधकारे सतीति यावत् । परनिपातश्छांदसः ॥ २८ ॥ विलीयंत इत्येतदेव स्पष्टयन् तदा महर्लोकगतानां स्थितिमाह ॥ त्रिलोक्यामिति । संकर्षणमुखनिर्गताग्निना संकर्षणशक्त्या च दह्यमानानामित्यर्थः । ऋभ्वादयो महर्लोकवासिन ऊष्मणौष्ण्येनार्दिताः संतो जनं जनलोकं ॥ २९ ॥ विषसिंधवः संकर्षणमुखगतविषमिश्राः सप्तसमुद्रा उत्कट उत्कृष्ट आटोपो वेगो यस्य स उत्कटाटोपोऽत एव चंडः क्रूरो वातस्तेनेरिता उज्जृंभिता ऊर्मयो येषु ते तथोक्ताः ॥ ३० ॥ जनालयैर्महर्लोकादागतैरन्यैश्च ॥ ३१ ॥ एवं ब्रह्माहोरात्रयोः स्थितिमुक्त्वेदानीं तदायुःप्रमाणं दर्शयति ॥ एवंविधैरिति । अतिस्थूलप्रमाणैरित्यर्थः ।

उपलक्षितैर्ज्ञातिः । अत्रास्येत्यनेन प्रकृतस्य हरेः परामर्शे परमायुर्वयः शतमित्येतद्बाधितार्थकं स्यात् । हरेरायुर्मानाभावस्य वक्ष्यमाणत्वादतस्तत्परामृश्यं दर्शयति ॥ अस्य ब्रह्मण इति । नन्वप्रकृतस्य ब्रह्मणः कथं परामर्श इत्यत आह ॥ ब्रह्मण इति । बहिराब्रह्मणो दिनमिति पूर्वमुक्तत्वाद्ब्रह्मापि प्रकृत एवेति भावः । यद्वा । यावद्दिनं भगवत इत्यत्र भगवतो ब्रह्मणो दिनमित्युक्तत्वान्न तस्याप्रकृतत्वमित्यर्थः । वयः शतमिति मूलं । वर्षशतरूपं यत्परनामकमायुस्तदप्यस्य ब्रह्मणोऽपेक्षितमिव हरिसेवोपयोगित्वादपेक्षितं । वस्तुतः परमविरक्तस्यानपेक्षितमेवेति द्योतनायेव शब्दः ॥ ३२ ॥ यदर्धमायुष इत्यारभ्य चतुर्भिर्वस्तुस्थितिकथनं ॥ ३३ ॥ पूर्वस्य परार्धस्यादौ । ब्रह्मा विराट्संज्ञः । ग्रंथांतरविरोधपरिहारायाह ॥ शब्देति । यं ब्रह्माणं शब्दब्रह्मेति वेदवेद्यमिति विदुर्ज्ञानिनः ॥ ३४ ॥ पूर्वापरार्धांते च जातं कल्पमाह ॥ तस्यैवेति । पूर्वापरार्धस्यैवेत्यर्थः । अंते चेत्यन्वयः । पाद्मत्वे हेतुमाह ॥ यादिति । यद्यस्मिन्कल्पे । यस्मादिति वा ॥ ३५ ॥ द्वितीयपरार्धस्यार्धकल्पमाह ॥ अयं त्विति । द्वितीयपरार्धस्यायं वाराह इति व्याख्यातः कल्पः । तु शब्दस्तस्याद्यत्वरूपविशेषसूचकः । आद्यत्वेन कथित इत्यर्थः । वाराहत्वे निमित्तमाह ॥ यत्रेति । प्रथमामिति शेषः ॥३६॥ एवं भगवत्स्रष्टानां कालकृतमायुर्मानमुक्त्वेदानीं भगवतो यस्त्रिविधानंत्यरूपं परममहत्त्वमुक्तं तदुपपादयन्नादौ तावत्कालानंत्योपपादनाय तस्य कालकृतमायुर्मानं नास्तीत्याह ॥ काल इति । अत्र यत्रासीत्सूकर इति वराहरूपस्य कालकृतपरिच्छेदश्रवणात् । मूलरूप एवायुर्मानाभाव उच्यत इति प्रतीतिवारणाय श्लोकतात्पर्यं प्रमाणेनैवाह ॥ नायुर्मान इति । कस्मिन्रूपेऽपीत्यनेन मूले सर्वेषु रूपेष्विति पूरणीयमिति सूचयति । अनादित्वादित्यादिना द्वितीयार्धतात्पर्यमुक्तं । अव्याकृतस्येत्यस्यार्थः ॥ अमध्यत्वादिति । पंचमीप्रयोगेनाव्याकृतस्येत्यादिकं हेतुगर्भमिति दर्शयति । आयुर्मानाभावात्सः सर्वरूपोऽपि भगवान् अव्ययः कालपरिच्छेदशून्य इत्युच्यत इत्यर्थः । तथा चासीदित्यादिप्रयोगो लोकदर्शनमपेक्ष्योपपादनीय इति भावः ॥ ततश्चायं मूलार्थः ॥ निमेषस्त्रिलव इत्युपचर्यते । न मुख्यवृत्त्योच्यते । हरेरिति शेषः । मुख्यत्वाभावे निमित्तमाह ॥ अव्याकृतस्येति । व्याकृतं विकारानंतरं विद्यमानं मध्यावस्थं न व्याकृतमव्याकृतं तस्येत्यर्थः । हेतुगर्भाणीमानि विशेषणानि । तथा च मध्यावस्थाशून्यत्वादंतशून्यत्वादादिशून्यत्वादिति हेतुत्रयमायुर्मानाभावे उक्तमिति

ज्ञातव्यं । जगदात्मनो जगदंतर्यामिणः सर्वेष्वपि रूपेषु निमेष उपचर्यत इति संबंधः । हि शब्द उक्तप्रमाणप्रसिद्धिद्योतकः ॥ ३७ ॥ एवं कालकृतमायुर्मानं हरेर्नास्तीत्युक्त्वेदानीं तदधीनत्वमपि तस्य नास्तीत्याह ॥ कालोऽयमिति । अत्र काल शब्द-वाच्यो न जडः कालः । तस्येशितृत्वासंभवात् । नापीश्वरः । तस्य भूम्न इति पृथगुक्तत्वेनार्थासंभवात् । नापि यमादिः । तत्र धाममानिनामित्यसंभवात् । अतोऽत्र विवक्षितं कालं ज्ञापयितुं श्लोकतात्पर्यं प्रमाणेनैवाह ॥ यम इति । सुदर्शनचक्राभि-मानी कामः । तु शब्दोऽवधारणे । तस्यापि ब्रह्मणोऽपि दुर्गैव कालः संहारकर्त्री । एतदेव दर्शयति ॥ सेति । ग्रंथांतरविरोध-परिहाराय चक्ररूपिणीत्युक्तं । सैव ब्रह्मादिसंस्थिता । प्रेरणायेति शेषः । अनेन धाममानिनामीश्वर इत्येतदुक्ततात्पर्यं । प्रभु-रित्यस्य तात्पर्यं ॥ तस्या नियामक इति । स कालो भूम्नो नैवेष्ट इत्यस्य तात्पर्यं ॥ कालाभिमानिनीति । निगमयति ॥ तस्या इति । अनेन मूले दुर्गैव कालाभिमानिनी काल शब्दवाच्यतया ग्राह्या । अन्यथा वाक्यार्थासंभवादिति ज्ञापितं भवति ॥ ततश्चैवं श्लोकयोजना ॥ योऽयं कालः कालाभिमानिनी सर्वसंहर्त्री दुर्गेरिता पूर्वं तव कथितोऽस्यापि पूर्वग्रंथे वा दार्ष्टांतिकांतर्भूततयाऽ-भिप्रेतत्वात् । यश्च धाममानिनां लोकाभिमानिनामीश्वरः सः सा दुर्गा भूम्नः पूर्णगुणस्य हरेर्नैवेष्टे प्रेरणाय न समर्था । यतः स भूमैव तस्याः प्रभुरिति मूलं योज्यमिति भावः ॥ ३८ ॥ एवं कालकृतायुर्मानाभावेन कालानंत्यमुपपाद्य तस्य देशानंत्यमुप-पपादयति ॥ विकारैरिति । अत्र विकार शब्देन विशेषादिशब्देन च भूतादीनां ग्रहणेऽडकोशस्य तद्युक्तत्वं तदावृतत्वं चोच्यमानं विरुद्धमतस्तद्घटनाय प्रमाणमेव पठति ॥ दशेंद्रियाणीति । तु शब्दोऽवधारणे । अंडगतान्येवोपादानतयाऽडानुस्यूतान्येव । विकारा इति बहुवचनांतेन शब्देन वाच्यतया विज्ञेयानि । भूताहंमहतो भूतानि चाहं च महांश्च भूताहंमहांतः । सुपां सुलु-गित्यादिना जसः शसादेशः । अतो महत इति द्वितीयाबहुवचनं साधु । परेऽनुपादानभूता ब्रह्मांडाद्बहिरपि सतीत्यर्थः । तथा चोपादानतयाऽनुस्यूतैर्भूतादिभिर्युक्तत्वं बहिर्विद्यमानैरावृतत्वमतो न विरोध इति भावः । ननु विशेषादिभिरित्यत्र विशेष शब्दाभिधेयं किं । पृथिवी चेत्तस्यास्तच्छब्दवाच्यत्वे किं निमित्तं । तस्या आदि पदेन गृहीताबादीनां च परिमाणं किं । समप्रुत विषममिति शंकापरिहाराय प्रमाणमेव पठति ॥ पृथिवीति । शब्दादीनां गुणानां बहुत्वतः पंचत्वसंख्यया सत्वादित्यर्थः ।

परान्वयेन सत्त्वादिपंचगुणाधारत्वात् । पृथिवी विशेषशब्दवाच्येति भावः । सा पृथिवी द्विगुणा । अंडकटाहापेक्षया द्विगुणा-सत्यंडं वृणोत्यावृणोति । नन्वंडस्यापि तथात्वे कथमावृततत्वमित्यत आह ॥ सूक्ष्मत्वादिति । अंडकटाहस्येति शेषः । तथा चांड-कटाहापेक्षया द्विगुणा पृथिवी । अतस्तस्यास्तदावरकत्वं युक्तमिति भावः । यद्वा । असूक्ष्मत्वादिति पदच्छेदः । अंडा-पेक्षयेति शेषः । अबादयः प्रकृत्यंताः । गुणत्रयांतास्तु दशोत्तरा दशगुणितपरिमाणाः । अतस्तेषां युक्तं पूर्वापूर्वावरकत्वं । ग्रंथांतरविरोधपरिहारायाह ॥ अष्टप्रकृतय इति । यत्राष्टप्रकृतिभिरावृतत्वमुक्तं तत्राप्यष्टप्रकृतिशब्देनोपपादनत्वनिमित्तेन विशेषा-दय एव प्रकृत्यंता विवक्षिताः । अतो न विरोध इति भावः ॥ ततश्चायं श्लोकद्वयार्थः ॥ विक्रीयंत इति विकारा एकादशें-द्रियपंचभूताख्यास्तैः षोडशैः षोडशसंख्याकैर्युक्तो विकृतः । विशिष्यत इति विशेषः । पृथिवी साऽऽदिर्येषां ते तथोक्तास्तैः । अतद्गुणसंविज्ञानत्वेन नाबादिभिर्बहिरपि विद्यमानैर्दशोत्तराधिकैः पंचाशत्कोटिविस्तृतोऽयमंडकोशो यत्र हरौ प्रविष्टः परमाणु-वल्लक्ष्यते । न केवलमयमेक एवांडकोशः सावरणे हर्यंतर्गतः किं त्वन्येपीत्याह ॥ लक्ष्यंत इति । ब्रह्मणा दृश्यंत इत्यर्थः । अनेन योगिप्रत्यक्षं प्रमाणमत्र दर्शयाति । हि शब्दः प्रमाणप्रसिद्धिद्योतकः । अत्र युगपदेव ब्रह्मांडबहुत्वमुक्तं तत्कथमित्यतस्तदुप-पादयितुमपेक्षितं पूरयाति ॥ अंतर्गता इति । अत्र शरीराणीति द्वितीयांतपदमध्याहृत । तथा च शरीराण्यंतर्गताः शरीराणामंतः कोटिशो ह्यंडराशयो गताः प्रविष्टा इति । विष्णुशरीरबहुत्वेन तद्गतानामंडानां बहुत्वमित्युक्तं भवति । उक्तमर्थमर्थांतरं च प्रतिपादयत्प्रमाण पठति ॥ शरीराणामिति । विष्णुशरीराणामित्यर्थः । बहुत्वेनांडानां बहुत्वमुच्यमानं भवेदित्यन्वयः । प्रकारांतरमाह ॥ अतीतानागतैरिति । अंडानां बहुत्वं भवेदित्यन्वयः । तथा च मूलेऽतीतानागतं ब्रह्मांडाभिप्रायेण वा लक्ष्यं-तेंऽतर्गताश्चान्य इत्युक्तामिति भावः । ननु शरीराणां बहुत्वेऽपि कथमंडानां बहुत्वमित्यतस्तदुपपादयाति ॥ अस्यैवेति । देवस्य विष्णोः कायेष्वस्यैकस्यैव ब्रह्मांडस्य प्रति प्रति कायं विष्णुसामर्थ्यतो दर्शनाच्चांडानां बहुत्वं भवेत् । अन्यथा घटादिवद्भिन्नानां बहुत्वोक्तेरर्थो न भवेदित्यर्थः । एवं विष्णुशरीरबहुत्वेनांडबहुत्वमुपपाद्येदानीमेकस्मिन्नेव विष्णुशरीरे रोमकूपबहुत्वेनापि तदुप-पादयत्प्रमाणं दर्शयाति ॥ एकमंडमिति । हरे रोमकूपगमिति संबंधः । प्रत्येकमित्यस्य रोमकूपेत्यनेन बुद्ध्या विविक्तेनान्वयः ।

तेषु प्रत्येकं रोमकूपगेषु ब्रह्मांडेषु तथांऽडवदात्मानं च पृथक् पृथक् स्थितं ददर्शेत्यर्थः। एकस्यैवांडस्यानेकत्वं प्रमाणांतरमप्याह ॥ बृहदंडमिति । एकमंडं बृहदनेकमभूदित्यर्थः ॥ ३९ ॥ ४० ॥ इदानीं गुणतोऽप्यानंत्यं हरेर्दर्शयन् ब्रह्मांडाधारे तस्मिन् ब्रह्मांडांतर्गतत्वमप्यस्तीत्याह ॥ यमाहुरिति । अत्र यमाहुस्तद्धामेत्यन्वयभ्रमवारणायान्वयं दर्शयन् अत्र विवक्षितं धाम शब्दार्थमाह ॥ धामेति । तथा चांडराशय इति पूर्वानुवृत्त्याऽन्वय इति भावः ॥ ततश्चायं मूलार्थः ॥ यमक्षरं देहनाशरहितं सर्वकारणानां ब्रह्मांडादीनां कारणं विष्णुं ब्रह्म गुणपूर्णमाहुस्तस्य महात्मनः पुरुषस्य विष्णोरंडराशयो धाम गृहभूताः । आश्रया इति यावत् । तथा चांडांतर्बहिश्चास्तीति तस्य देशत आनंत्यं युक्तमिति भावः ॥ ४१ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ३—१२ ॥

॥ हरिः ॐ ॥ वेदगर्भो विराण्णामको ब्रह्मा । अथ वैकारिकदेहसृष्ट्यनंतरं ॥ १ ॥ अग्रे वैकारिकसृष्टेः पूर्वं । षष्ठस्तु तामसः सर्ग इत्युक्तप्रपंचोऽयमिति ज्ञातव्यं । अत्रांधतामिस्रादिशब्दार्थान्प्रमाणेनैव दर्शयति ॥ तमस्त्विति । इतराविद्यावृत्तिवैलक्षण्यसूचकस्तु शब्दः । शर्वर्यां भवं शार्वरं । अंधकाररूपं । अंधकारवैलक्षण्यसूचनाय च शब्दस्तु शब्दार्थः । विपर्यय एव मिथ्याज्ञानमेव । उच्यत इति सर्वत्र संबध्यते । तदाग्रहो विपर्ययाग्रहः । मरणं मरणकालीनक्लेशनिमित्ता मूर्च्छा । एवमविद्या पंचपर्विका पंचवृत्त्युपेता । अनेनाज्ञानवृत्तय इति मूलमुक्तार्थं । प्रबलकार्यक्रममपेक्ष्य मूलेंऽधतामिस्रादितया निर्देशः । दुर्बलकार्यक्रमानुसारेण प्रमाणे तम आदितयेति ज्ञातव्यं । प्रकारांतरेण तम आदिस्वरूपं प्रमाणेन दर्शयति ॥ तमोऽज्ञानमिति । अज्ञता सम्यग्ज्ञाननाशः । अविद्याकार्यस्यैवात्र प्रकृतत्वात् ॥ अन्ये त्विति । तु शब्दस्तरतमादिरूपविशेषसूचकः । तथा चान्ये महामोहस्तामिस्रांधतामिस्राः क्रमेण विपर्यासा ग्रहाग्रहतरा ग्रहतमरूपा इत्यर्थः । एतेषां मूलकारणं किमित्यपेक्षायामाह ॥ अज्ञानवृत्तय इति । एतेंऽधतामिस्रादयो भावरूपाविद्याकार्यभूता इत्यर्थः ॥ २ ॥ अत्र सनकं च सनंदेत्यादिना सनकाद्युत्पत्तिमादावुक्त्वा पश्चाद्रुद्रोत्पत्तिं वक्ष्यति । सृष्टिक्रम एव तारतम्यज्ञापकोऽतो रुद्रापेक्षया सनकादीनामुत्तमत्त्वं प्राप्तमित्याशंकायामादिसृष्टिक्रम एव तारतम्यज्ञापको नार्वाचीनसृष्टिक्रमः । अत्रोक्ताऽनादिसृष्टिरतो न कोऽपि विरोध इति परिहारमभिप्रेत्य देवानां तारतम्यं तज्ज्ञापकमादिसृष्टिक्रमं च प्रमाणेनैव दर्शयति ॥ काल इत्यादिना। अनंतांशेन। तदवमा विष्णोर्नीचा । कालतोऽप्यवमत्वं

प्राप्ते सत्यपवादमाह ।। कालादिति । तु शब्दश्चशब्दार्थो देशादपीत्यनुक्तसमुच्चायकः । बहुलांशेन कोटिगुणांशेन । समत्वे हेतुमाह ।। नियमादिति । मुक्तावित्यस्य व्यावर्त्यमाह ।। वायुत्व इति । वायुत्वावस्थायां किंचिदूनता । तत्पदस्येति शेषः । वायुर्ब्रह्मापेक्षया कालतोऽप्यून इत्याह ।। दशवर्षमिति । तु शब्दो वर्षाणां दिव्यत्वरूपविशेषसूचकः । तथा च दिव्यदशवर्षं यथा स्यात्तथा तस्य ब्रह्मणः पश्चाद्वायोर्जननमित्यर्थः । तत्स्त्रियोर्ब्रह्मवायुस्त्रियोः सरस्वतीभारत्योस्तद्दशांशो ब्रह्मवाय्वानंदादिशतांशन्यून इत्यर्थः ।काल- स्तत्स्त्रियोर्जननकालः । वायूत्पत्त्यनंतरं संवत्सरात्परः पश्चात्तनः । उत्पत्तिक्रमवत्तद्विपरीतलयक्रमोऽपि तारतम्यज्ञापक इत्याशयेन मध्ये लयक्रममप्याह ।। यावदिति । देहक्षयः । उक्तानां वक्ष्यमाणानां च । महाप्रलय इति शेषः । यो यदपेक्षया यावता कालेन पश्चाज्जातः स तदपेक्षया तावता कालेन पूर्वमेव देहक्षयं प्राप्नोतीत्यर्थः । तु शब्दः प्रकृतत्वानुसंधानार्थः । तद्दशांशो ब्रह्मवायुदेव्यो- रानंदादिः शतांशन्यून इत्यर्थः । कालो भारतीसरस्वत्योरुत्पत्त्यनंतरभाविशेषगरुडयोर्जननकालो देवतावर्षसहस्रात्मक इत्यर्थः । नन्वत्र रुद्रानुक्तिः किमित्यतस्तस्य शेषसमत्वाच्छेषग्रहणे रुद्रोऽपि गृहीत एवेत्याशयेनाह ।। शेषरुद्राविति । यथा परस्परं समौ वायुत्वे किंचिदूनता । तद्वत्तथा परस्परं समौ । रुद्रत्वे किंचिदूनतेत्यर्थः । तद्देव्यः शेषगरुडरुद्रदेव्यः । तद्दशांशाः तदानंदा- दिशतांशशून्यानंदादिका इत्यर्थः । ततस्ताभ्यः । तु शब्दः शतांशन्यूना इत्यस्य समुच्चायकः । कचित्कालदेशे च । नन्वेवं सर्वेषां देवानां साम्यमेव न तारतम्यमिति वचनानां का गतिरित्यत आह ।। अन्यथोक्तिरिति । च शब्दोऽवधारणे । मोहार्थ- मेवेत्यन्वयः । नन्वेवं तारतम्यस्य सृष्टिक्रमो यदि ज्ञापकस्तर्हि मूले सनकाद्युत्पत्त्यनंतरं रुद्रोत्पत्तेरत्रोक्तत्वात्तस्य तदपेक्षया न्यूनत्वं स्यादित्यत आह ।। पूर्वापरेति । आदिसृष्टौ पूर्वोत्पन्नपश्चादुत्पन्नयोर्विपर्यासो वैपरीत्यनेन वचनं पूर्वोत्पन्नस्य बहुरूपत्व- निमित्तादित्यर्थः । आदिसृष्टिक्रम एव तारतम्यज्ञापकोऽतोऽर्वाचीनसृष्टावुत्तमस्य रूपांतरेण नीचानंतरमप्युत्पत्तिकथनेऽपि न तारतम्यभंग इति भावः । किंच देवतातारतम्यं श्रुत्योत्तरग्रंथेन चोक्तरीत्यैवाभिहितमतः सनकादेर्न रुद्रापेक्षयोत्तमत्वमित्याशये नाह ।। अथात इति । इत्यादि च वाक्यमुक्तरीत्यैव देवतातारतम्यं । ज्ञापयतीति शेषः । विशिष्य सनकादीनां रुद्रापेक्षय नीचत्वं कैमुत्येन प्रतिपादयत्प्रमाणं दर्शयति ।। इंद्राद्या इति । उमाया अवरास्तदा रुद्रादवरा इति किं वाच्यमित्याशयः ।

इति वक्तव्यं तत्समानेति वाक्यं पूरणीयमित्यर्थः । अन्यदुमाया एव सर्वोत्तमत्वं । बहुमन्यतेति मूलं नाभ्यनंददित्यर्थः भगवद्ध्यानपूतेनेति वचनं मनःस्रष्टानां सनकादीनां न पूर्ववदसाधुत्वमिति प्रदर्शनाय ॥ ३ ॥ आत्मभूर्ब्रह्मा । निष्क्रियान्परमहंसान् अत एवोर्ध्वरेतसः ॥ ४ ॥ स्वः स्वतंत्रः परमात्मा । तस्माद्भवतीति स्वभूर्ब्रह्मा । भो पुत्रकाः । तत् प्रजासर्जनं । मोक्षधर्माणो मुच्यतेऽनेनेति मोक्षो ज्ञानं स एव धर्मो येषां ते तथोक्ताः । ज्ञानमार्ग एव रता इत्यर्थः ॥ ५ ॥ अवज्ञामेव दर्शयन्नाह ॥ प्रत्याख्यातेति । प्रत्याख्यातं निराकृतमनुशासनमाज्ञापनं यैस्ते तथोक्तास्तैः । अनेनाज्ञातिक्रम एवावज्ञेति दर्शितं भवति । जातं । स्वात्मनीति शेषः ॥ ६ ॥ प्रजापतेर्ब्रह्मणः स चासौ मन्युश्च तन्मन्युः । सद्यो नियमात्पूर्वमेव । अनेन सद्योजात शब्दार्थो दर्शित इति ज्ञातव्यं । नीललोहितो रुद्रः ॥ ७ ॥ रुद्रनामार्थं वक्तुमाह ॥ स वा इति ॥ ८ ॥ तन्नामादिकं ॥ ९ ॥ बालक इव हृन्मनः ॥१०॥ मरुरेताः । मरुराग्निः कृष्णवर्त्मेत्यभिधानात् । तद्दाहकं रेतो यस्य स मरुरेताः ॥१२॥ हे रुद्र । एताः स्त्रियस्ते दत्ता अतो रुद्राण्यः । भविष्यंतीति शेषः ॥ १३ ॥ पुष्णात्यनया धर्ममिति पोषणा भार्या । सपेषणमिति क्रियाविशेषणं । आभिः स्थानैर्नामभिश्च युक्तः । यद्यस्मात्प्रजानां पतिरसि । प्रजानामभावे तत्पतित्वं ते मृषा भविष्यतीति भावः ॥ १४ ॥ गुरुणा पित्रा ब्रह्मणा । सत्त्वं बलमाकृतिर्मूर्तिः स्वभाव उग्रत्वं । द्वंद्वैकवद्भावः । तेन । आत्मसमाः स्वसमाः ॥ १५ ॥ रुद्राणां क्रूराणां यूथान्दृष्ट्वेत्यन्वयः ॥ १६ ॥ १७ ॥ यथा पूर्वं तथा स्रष्टा ॥ भविष्यतीति शेषः । स्रष्टा स्रक्ष्यतीति वा ॥ १८ ॥ मोक्षसाधनमपि तप एवेत्याह ॥ तपसैवेति । आलोचनादिरूपेणैवेत्याशयः । विंदते प्राप्नोति ॥१९॥ आत्मभुवा ब्रह्मणा । गिरां पतिं सरस्वतीपतिं ब्रह्माणं ॥ २० ॥ प्रातिजज्ञिरे । अंगेभ्य इति शेषः ॥ २१ ॥ २२ ॥ कस्मात्कस्मादंगादेतेषामुत्पत्तिरित्यपेक्षायामाह ॥ उत्संगादिति । अंकादित्यर्थः ॥ २३ ॥ २४ ॥ ब्रह्मांगेभ्योऽन्येषामुत्पत्तिमाह ॥ धर्म इत्यादिना । दक्षिणतो दक्षिणात् । यत्र यस्मान्नारायणः । स्वयं प्रसन्नो भवतीति शेषः । पृष्ठतः पृष्ठभागात् । मृत्युर्नरकाद्यनर्थः । भवतीति शेषः ॥ २५ ॥ हृदि मनसि । अधरदच्छदादधरोष्ठात् । सिंधवस्तदभिमानी वरुणो मेंढ्राद्गुह्येंद्रियात् । अघाश्रयोऽधर्माभिमानी । अधर्म इत्यत्रोक्तोऽधर्मस्त्वसुर एवेति ज्ञेयं ॥ २६ ॥ विश्वकृतो ब्रह्मणः ॥ २७ ॥ ब्रह्मणोऽसुरजन-

मोहनाय कामिजनविडंबनप्रकारमाह ॥ वाचमिति । अस्मादुत्पन्नां तन्वीं सुंदरीं नोऽस्माभिः श्रुतं ॥ २८ ॥ २९ ॥ योगजं काममनिगृह्य स्वां दुहितरं गच्छतस्तवैतत्कर्म पूर्वैस्तदन्यैर्न कृतं । अद्यतना न कुर्वंति । येऽपरे पश्चात्तनास्तेऽपि न करिष्यंतीत्यन्वयः ॥ ३० ॥ ननु ममापरोक्षज्ञानित्वान्नैतल्लेप इत्याशंक्याह ॥ तेजयिसामिति । अपरोक्षज्ञानिनामपीत्यर्थः । न सुश्लोक्यं सत्कीर्तिमिदं जगद्गुरुत्वाच्च नैतत्तव योग्यमित्याशयेन जगद्गुरो इति संबोधनं । अत्राप्रयोजकतापरिहाराय विपक्षे बाधकं सूचयन्नाहुः ॥ यद्वृत्तमिति । यदाचारमित्यर्थः । तस्य नैतत्सुश्लोक्यमित्याशयः । तथा च यद्यदाचरति श्रेष्ठ इति वचनात् । लोकस्याप्येतादृशाचारप्रसक्तावनर्थप्राप्तिरेवस्यादिति बाधकं सूचितमिति ज्ञातव्यं ॥ ३१ ॥ क्रोधभीत्या नमंतः प्रार्थयंतीत्याह ॥ तस्मा इति । रोचिषाज्ञानेनात्मस्थं परमात्मस्थमिदं जगद्व्यंजयामासोत्पादयामास ॥ ३२ ॥ तन्वीं वाचं तत्याजेत्युक्त्या सरस्वतीत्यागः प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ यां तत्याजेति । तु शब्दोऽवधारणे । मनुष्यसंबंधिनी वागेव कणादादिनिर्मितकुशास्त्ररूपा । तदभिमानिनीति यावत् । तां देवीमेव । वाचं वेदादिरूपवागभिमानिनीं ज्ञानिनो विदुरित्यर्थः ॥ ३३ ॥ मूले दिशो दिशि विद्यमाना जना नीहारमिव नीहारं बाष्पवत्सम्यग्ज्ञानप्रतिबंधकं तमो मिथ्याज्ञानं यत्रस्याः सकाशाद्भवतीति विदुर्ज्ञानिनस्तामित्यर्थः । चतुर्मुखाच्चतुर्भ्यो मुखेभ्यः । पाद्मकल्पेऽप्येवमेव वेदादिसृष्टिरिति प्रदर्शनायैवमुक्तमिति ज्ञातव्यं । एवमग्रेऽपि ॥ ३४ ॥ ध्यानप्रकारं दर्शयति ॥ कथमिति । स्वस्वविहितकर्मादिसमवेतान्मुक्तानिति ध्यायत इत्यन्वयः । न केवलं वेदा एवासन्किंतु कर्मादयोऽपीत्याह ॥ चातुर्होत्रमिति । होत्रादीनां चतुर्णां संबंधि कर्मतंत्रं यज्ञविस्तारः । उपवेदा गंधर्वादयो नया नीतिशास्त्राणि तैः सह धर्मस्य चत्वारः पादा वक्ष्यमाणा आश्रमा ब्रह्मचर्यादयस्तद्वृत्तयस्तदाचारास्तज्जीवनोपाया वा । आसन्नित्यनुवर्तते ॥ ३५ ॥ ३६ ॥ पूर्वादिभिः पूर्वदक्षिणपश्चिमोत्तरदिग्भेदभिन्नैः । चतुर्होत्रसृष्टिक्रममाह ॥ शस्त्रमिति । शस्त्रं ऋग्वेदमंत्रशासनं होतुः कर्म । इज्यां यागामध्वर्योः कर्म । स्तुतिस्तोमशब्दौ सामवेदगस्तोत्रविशेषपरौ । तच्छासनमौद्गात्रं कर्म । प्रायश्चित्तं ब्राह्मं ॥ ३७ ॥ उपवेदसृष्टिक्रममाह ॥ आयुर्वेदमिति । आत्मनो मुखैरायुर्वेदं वैद्यशास्त्रं । धनुर्वेदमायुधविद्यां । गांधर्वं भरतशास्त्रं स्थापत्यं तक्षशास्त्रं ॥ ३८ ॥ सर्वदर्शनः । सर्वज्ञः । अनेनाप्तत्वं सूचयति ॥ ३९ ॥

षोडश्यादयो यज्ञविशेषाः । तद्भेदः कल्पतोऽवगंतव्यः । पुरीष्याग्निष्टुदादिकं च द्वयं दक्षिणादिवक्त्रेभ्य उत्पन्नं ॥ ४० ॥ तप आदि धर्मपादानामपि पूर्वादिमुखेभ्यो जन्मेति ज्ञातव्यं । वृत्तिभिर्भैक्ष्यचर्यादिभिः सहाश्रमाद्ब्रह्मचर्यादीन्यथासंख्यं ब्रह्मचर्यं पूर्वमुखादित्यादिक्रमेण । अत्र वेदानामपौरुषेयत्वात्कथं सर्जनमुच्यते । इतिहासपुराणानां च मूलरूपेण हरिणा व्यासेन च कृतत्वात्कथं ब्रह्मकर्तृत्वमित्याशंकां प्रमाणेनैव परिहरति ॥ ॥ अभिमानित इति । वेदान्ससर्जेत्यस्य वेदाभिमानिनो देवतादेहा-न्ससर्जेत्येवार्थो न त्वितरशास्त्रवच्छब्दतः सर्जनमित्यर्थः ॥ शब्दत इति । पूर्वकल्पीयवेदक्रमादितुल्यक्रमादिविशिष्टस्य वेदस्य ब्रह्मबुद्धिक्रमजन्यत्वादित्याशयः । षोडशयुक्तकृत्यादीनां सर्जनं कीदृशमित्यपेक्षायामाह ॥ यज्ञादीनिति । आदि पदात्तप आदेर्ग्रहणं । वाचा तत्प्रतिपादकशास्त्रकरणेन चक्लृपे प्रदर्शितवान् । प्रकारांतरमाह ॥ तथेति । सर्वेषां यज्ञादीनामभिमानिन इत्यर्थः । तथा च षोडश्यादिशब्दैस्तदभिमानिनामेव ग्रहणात्तत्स्रष्टिरेवात्राभिप्रेतेति भावः । तु शब्दस्तयोर्हरिकृतत्वरूपविशेष-सूचकः । तथा च पूर्वं हरिकृते इतिहासपुराणे हरिमुखाच्छ्रुत्वा स्वयं चक्लृप इत्यन्वयः । तर्हि किं भागवतभारतादिकं च ब्रह्म चकार नेत्याह ॥ भारतादीन्विनेति । कुत इत्यतस्तत्र हेतुं सूचयन्नाह । पश्चादिति । हरिणा व्यासरूपिणाऽन्यैश्च मार्कंडेयादिभिः पश्चाद्ब्रह्मनिर्मितेतिहासाद्यनंतरं । तथा च भारतादीनां पश्चाद्व्यासादिभिः कृतत्वान्न तान् ब्रह्मा चकारेति भावः ॥ ४१ ॥ ब्रह्मचर्याश्रमावांतरभेदोत्पत्तिमाह ॥ सावित्रमिति । इति चतुर्विधं ब्रह्मचर्यमसृजदित्यन्वयः । अत्र सावित्रं ब्रह्मचर्यमुपनयना-दारभ्य वेदग्रहणपर्यंतं गायत्रीमधीयानस्य व्रतं । ब्राह्मं द्वादशवर्षपर्यंतं गुरुकुले वेदमधीयानस्य व्रतं । बृहत्तु यावज्जीवं ब्रह्मचर्यं नैष्ठिकापरनामकं । प्राजापत्यं ब्रह्मचर्यं तु कीदृशमित्यपेक्षायां प्रमाणेनैव दर्शयति ॥ प्राजापत्यमिति । गृहस्थस्यापीति शेषः । तथा च यस्य गृहस्थस्यैकैव भार्या तस्यां च ऋतुकाल एव गमनं तदप्येकं ब्रह्मचर्यं तदेव प्राजापत्यनामकमित्यर्थः । गृहस्था-श्रमस्यापि वृत्तिभेदेन चातुर्विध्यमाह ॥ वार्तेति । अत्र वार्ता कृष्यादिना वृत्तिरसंचयः सर्वथा संचयाभाव इत्यन्यथाप्रतीति-वारणाय वार्तासंचयेत्येतत्प्रमाणेनैव व्याख्याति ॥ वार्तेति । यायावर्यं भैक्षचर्यविशेषः । एकाहित्वं तद्दिनार्जितव्रीह्यादेस्तद्दिन-एव व्ययः । शालीनं वत्सरपर्यंतं स्ववृत्तिहेतुधान्यादिसंग्रहः । शिलोंछस्तु क्षेत्रेषु गलितव्रीह्यादिना वृत्तिः । सुपां सुलुगित्या-

दिना बहुवचनस्यैकवचनादेशः । इति वृत्तिभेदेन गृहे गृहस्थाश्रमे चातुर्विध्यं । भवतीति शेषः ॥ ४२ ॥ वृत्तिभेदेन वानप्रस्थाश्रमेऽपि चातुर्विध्यं दर्शयति ॥ वैखानसा इति । अत्र वैखानसा अकृष्टपच्यवृत्तयो वालिखिल्या नवे लब्धे पूर्वसंचितान्नत्यागिन औदुंबराः प्रातरुत्थाय यां दिशं प्रथमं पश्यंति तत आहृतैः फलादिभिर्जीवंतः । फेनपाः स्वयं पतितैः फलादिभिर्जीवंत इति व्याख्यानं प्रमाणविरुद्धमित्याशयेन वैखानसादि शब्दान्प्रमाणेनैव व्याख्याति ॥ वैखानसा इति । वत्सफेनपा गोवत्समुखगलितक्षीरफेनपा इत्यर्थः । वने वानप्रस्थाश्रमे वसंतोऽप्येवं । चतुर्विधा इति शेषः । न्यासे संन्यासाश्रमे वसंतोऽपि चतुर्विधा इति शषेः । तान्निर्दिशति ॥ कुटीचक इति । कुट्यां स्वगृह एव पुत्रादिदत्तान्नादिना चकते तृप्यति । चक तृप्ताविति धातोः । स कुटीचकः पूर्वं प्रथमः । बहूदस्तीर्थयात्रापरस्त्रिदंडी द्वितीयः । हंसनिष्क्रियौ तृतीयचतुर्थौ हंस एकदंडी यज्ञोपवीती । निष्क्रियः परमहंस एकदंडी हंसादिक्रियारहितो यज्ञोपवीतधारणाशून्यः । ब्राह्मणादिवर्णानां वृत्तयोऽपि यथासंख्यं पूर्वादिमुखेभ्यो जाता इत्याह ॥ आन्वीक्षिकीति । अत्रान्वीक्षिक्यादिशब्दान्प्रकृतोपयुक्ततया प्रमाणेनैव व्याख्याति ॥ आन्वीक्षिकीति । तंत्रविद्या तर्कविद्या । वेदबहिष्कृता अतोऽत्र न सा ग्राह्येति भावः । राजधर्मो राज्यपरिपालनं । आदि शब्देन त्रैवर्णिकशुश्रूषणं ग्रहणं । नन्वेतेषां कथं ब्राह्मणादिवृत्तित्वमित्यत आह ॥ एताभिरिति । आन्वीक्षिक्या त्रय्या च ब्राह्मणानां जीवनं । राजनीत्या क्षत्रियाणां । वार्तया वैश्यादीनामिति विवेकः । तथा च मूले आन्वीक्षिक्यादिशब्दैस्तदुपजीवनं लक्षणया व्याख्येयमिति भावः । एव शब्दः शिवाद्युक्तव्यावृत्त्यर्थः । व्याहृतयो भूर्भुवःस्वारिति तिस्रः प्रणवेन सहास्पदं ब्रह्मणः पूर्ववत्क्रादिरूपं । गताः प्राप्ता आसन्नभिव्यक्ता इत्यर्थः । अत्र व्याहृतीनां प्राधान्येन निर्देशात्तासामेव पूर्ववत्क्रादिजातत्वं प्रतीयतेऽतोऽभिप्रायमाह ॥ प्रणव इति । अत्र प्रमाणमाह ॥ प्रणव इति । प्रदक्षिणं यथा स्यात्तथाऽऽवर्तंतेऽभिव्यक्ताः । वेदाश्चैवाश्रमास्तथेत्यनेन कदाचिद्ध्यायतस्तस्य वेदा आसंश्चतुर्मुखादित्यादिनोक्तमपि प्रमापितामिति ज्ञातव्यं ॥ ४४ ॥ ब्रह्मणो रोमादिभ्यः सप्तछंदसां सर्गमाह ॥ तस्येति । स्नुतः स्नायुतः ॥ ४५ ॥ वर्णानामपि ब्रह्मणोऽभिव्यक्तिमाह ॥ स्पर्शा इति । स्पर्शाः कादयो मावसानाः । जीवाच्चैतन्यात् । स्वरोकारादिः । देहो देहात् । ऊष्माणः शषसहाः । इंद्रिया-

णींद्रियेभ्यः । अंतस्था यरलवाः । बलं बलात् । आत्मनो ब्रह्मणः । अत्र देहादिशब्दाः पंचम्यर्था एव सप्तसु प्रथमेति सूत्रादित्याशयेन समाख्याप्रमाणं पठति ॥ स्पर्शा इति । पंचम्यर्थत्वाभावेऽपि प्रथमांतानां देहादिशब्दानां तज्जन्यपरत्वस्य प्रमाणसिद्धत्वान्न सामानाधिकरण्यानुपपत्तिरित्याशयेनाप्याह ॥ यस्मादिति । यत्स्वरादिकं यस्माद्देहादेरंगाज्जायते तत्स्वरादिकं तदंगाभिधं तदंगाभिधायकशब्दवाच्यं तज्जन्यत्वनिमित्तेन भवेदित्यर्थः । तथा च स्वरादिर्देहादिजन्य इत्यर्थस्य विवक्षितत्वान्न सामानाधिकरण्यानुपपत्तिरिति भावः ॥४६॥ सप्तस्वरा निषादर्षभगांधारषड्जमध्यमधैवताः । पंचमश्चेत्यमी सप्ततंत्रीकंठोत्थिताः स्वरा इत्यादिनोक्ताः प्रजापतेर्विहारेण शरीरसंचरणविशेषेण भवंति स्म अभवन्नित्यर्थः । एवं विधस्य सृष्टिकर्तृत्वं ब्रह्मणो नासंभावितं तस्य भगवन्मात्रवाचकशब्दादतिरिक्तसर्वशब्दवाच्यत्वात् । अव्यक्तादिसर्वतत्त्वव्याप्तत्वाच्चेत्याशयेनाह ॥ शब्दब्रह्मेति । अत्र शब्दविस्ताराद्वेदोऽव्यक्तादिसर्वजगद्भेदश्च ब्रह्मणः प्रतीयते तदुभयं बाधितमतोऽत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ शब्दब्रह्मात्मक इति । इत्युच्यत इति शेषः । सर्वशब्दाभिधेयत्वतः । तु शब्दो रुद्राद्यपेक्षया विशेषव्याप्तिसूचकः । तथा च शब्दब्रह्म नारायणादिनामव्यतिरिक्तं वैदिकशब्दविस्तरं विषयतया प्राप्नोतीति शब्दब्रह्मा । तस्य व्यक्तं ब्रह्मांडमव्यक्तं महदादिकं च व्याप्नोतीति व्यक्तात्मा तस्य । अत एव प्रभोरिति मूलं व्याख्येयमिति भावः ॥४७॥ एवं ब्रह्मा स्वदेहात्तदवयवेभ्यश्च सृष्टिं चकारेत्युक्तं इदानीं प्रकारांतरेण सृष्टिं कर्तुं मनश्चक्रेत्याह ॥ ब्रह्मेति । स ब्रह्मा ततः पूर्वोक्तादपरां स्त्रीपुरुषसर्जनशक्तिमुपादाय कार्योन्मुखीकृत्य सर्गाय नानाविधजगत्सृष्टये मनो बुद्धिं दधे चकार । किं स्वातंत्र्येण नेत्याह ॥ ब्रह्मेति । ब्रह्मणः परब्रह्मणोऽनुभाव आनुकूल्येन चिंतनमनुग्रहो वा तेन विततः पूर्णोऽत एव नानाशक्त्युपबृंहितो नानाविधसृष्टिसामर्थ्यपूर्णः ॥ ४८ ॥ अपरशक्त्युपादानेन सर्गं वक्तुं तावत्तच्चिंताप्रकारमाह ॥ ऋषीणामिति । ननु मरीच्यादिसृष्ट्यनंतरमेवेयं चिंता वक्तव्या प्रस्तुतत्वात् । अतः कथं कदाचिद्ध्यायतस्तस्येत्यादिनाऽन्यदुक्त्वेदानीं तत्कथनमप्रस्तुतत्वादित्यत आह ॥ ऋषीणामिति । सत्यं । तत्रैवेयं चिंता वक्तव्येति । तथाऽपि कदाचिद्ध्यायत इत्यारभ्य स्वराः सप्त विहारेणेत्यंतेनान्यदुक्त्वा सिंहावलोकनवत्पूर्वोक्तामृष्यादिसृष्टिमेवालोक्य ब्रह्मचिंताऽत्रोच्यतेऽस्मिन्प्रकृते नाप्रस्तुतत्वाविरोध इत्यर्थः । ननु कुत एव सिंहावलोकनन्यायेन व्यवहितचित्तोक्तिरित्यतोऽत्रो-

पपात्तिं प्रमाणेनैवाह ॥ यत्रेति । यत्र यस्मिन्प्रकृतेऽर्थे यन्निरूपणीयं तदपेक्षया पश्चात्तनः पश्चान्निरूप्यमाणोऽर्थः श्रेष्ठः श्रोतृबुभुत्सादीनां मध्ये निरूपणीयतां प्राप्तस्तत्र तस्मिन्प्रकृतेऽर्थे पुनर्विस्तरतो निरूप्यमाणे सिंहावलोकनं सिंहावलोकनन्यायानुसरणमावश्यकं । अन्यथाऽप्रस्तुतत्वोक्तित्वप्रसंगादित्यर्थः ॥ ततश्चायं मूलार्थः ॥ ऋषीणां मरीच्यादीनां सकाशात् । सृष्टौ व्यापृतस्य युक्तिमतो मनोयोगवतः । ध्यायत इति यावत् । दैवं दैवानुग्रहं कस्य ब्रह्मणो रूपं देहः स्त्रीपुरुषरूपेण द्वेधाऽभूत् । ब्रह्मदेहः सरस्वतीब्रह्मदेहद्वयात्मना परिणत इत्यर्थः । यद्रूपद्वयं कायं काय शब्दवाच्यमभिचक्षते निरुक्तिज्ञाः । अत्र रूपद्वये काय शब्दवृत्तौ किं निमित्तमित्यतस्तं शब्दं तत्र निर्वक्ति ॥ केनेति । केन ब्रह्मणा प्राप्तत्वाज्जातत्वात्काय इत्युच्यते देहसमुदाय इत्यर्थः ॥ ४९ ॥ ५० ॥ ताभ्यां ब्रह्मसरस्वतीदेहाभ्यां स्वराट् चक्रवर्ती ॥ ५२ ॥ या स्त्री सा । अस्य स्वायंभुवमनोर्महिषी भार्याऽऽसीत् । एधांबभूविरे वृद्धिं प्राप्ताः ॥ ५३ ॥ तदेवाह ॥ स चापीति ॥ ५४ ॥ यतः कन्यात्रयात् ॥ ५५ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ३—१३ ॥ ॥

॥ हरिः ॐ ॥ वक्तव्यत्वहेतुमाह ॥ विष्वक्सेनेति । हि यस्माद्विष्वक् सर्वत्र सेना यस्य हरेस्तदाश्रयस्तद्भक्तः ॥ ३ ॥ हरिचरितं तद्भक्तचरितं चेति द्वयमेव मुमुक्षुणा श्रोतव्यं । सूरिभिः सर्ववेदादिश्रवणफलत्वेन तयोः कथितत्वादित्याह ॥ श्रुतस्येति । सुचिरं श्रमो देहायासो यस्य स तथा । तस्य पुंसां श्रुतस्य कर्मपरवेदाद्यर्थश्रवणस्यांजसा मुख्यतया तस्य हरेर्गुणानुश्रवणं । येषां हृदयेषु मुकुंदपादारविंदं लसति तद्गुणानुश्रवणं च सूरिभिरीडितः स्तुतोऽर्थः । ननु स्तुतं फलं खलु यद्यस्मात्तस्माद्ब्रूहीति पूर्वेणान्वयः ॥ ४ ॥ सहस्रशीर्ष्णो हरेश्चरणोपधानं पादपीठायितं सहस्रशीर्ष्णः श्रीकृष्णस्य चरणावुपधीयेते यस्मिन् कृष्णः प्रीत्या यस्योत्संगे चरणौ प्रसारयतीत्यर्थ इति वा । तमभ्यचष्टाभाषत । भगवत्कथायां प्रणीयमाणः प्रेर्यमाणः ॥ ५ ॥ ६ ॥ सर्वभूतानां जन्मकृदतो पिता वृत्तिदः पोषकश्च त्वमेकस्त्वमेवातस्तव यद्यप्यन्यापेक्षा नास्ति । अथाऽपि नोऽस्माकमिज्यात्मशक्तिष्विज्यारूपेषु भगवत्पूजारूपेषु स्वशक्तिविषयेषु च कर्मसु मध्ये ते शुश्रूषा केन येन कर्मणा भवेत्ताद्विधेहि । विष्वक् सर्वतोऽमुत्र परलोके । गतिरात्यंतिकसुखप्राप्तिः ॥ ७ ॥ ८ ॥ त्वां युवाभ्यां यद्यतो मा मां शाधि अनुशिक्षयेत्यात्मना

स्वयमेवार्पितं निवेदितमतः प्रीतोऽस्मि ॥ ९ ॥ गुर्वाज्ञाकरणमेव तत्पूजेत्याह ॥ एतावदिति । अपचितिः पूजा । शासनमाज्ञा गृह्यत इति यत्सेयमित्यर्थः ॥ १० ॥ आज्ञामाह ॥ स त्वमिति । गां भूमिं शाधि पालय ॥ ११ ॥ तच्छुश्रूषणेनापि किमित्यत आह ॥ भगवानिति ॥ १२ ॥ भगवत्तोषणेनापि किमित्यत आह ॥ येषामिति । यज्ञलिंगो यज्ञप्रवर्तकदेहः श्रमो यज्ञानुष्ठानायासः । अपार्थायापगतोऽर्थो यस्मात् । न केवलं श्रमायैवेत्यर्थः । यद्यस्मात्परमात्मा स्वयं स्वेन ॥ १३ ॥ अनुजानीहि अत्र स्थातव्यमित्यनुज्ञापय ॥ १४ ॥ पृथिव्यामेव स्थातव्यमित्याह ॥ यदोक इति । सर्वसत्त्वानां सर्वप्राणिनां यदोक आवासस्थानं सा मही महांभसि प्रलयजले मग्नाऽभूत् । हे देव । अस्या देव्या भूमेः ॥ १५ ॥ सन्नां मग्नां समुन्नेष्ये उद्धरामि ॥ १६ ॥ चिंताप्रकारमेवाह ॥ पीतमिति । प्रायेण पीतमित्यर्थः । न तु निःशेषतया। वार्भिः प्लाव्यमानेत्यनेन विरोधप्रसंगात् ॥१७॥१८॥ देवादिप्रजाः सृजतः सत इत्यन्वयः । प्लाव्यमाना चंचलीक्रियमाणा । आलयं रसातलं । अथ तस्मात् । अत्रास्यामवस्थायां सर्गे ईश्वरेणनियुक्तैः ॥ १९ ॥ मेऽनुष्ठेयं स एव विदधातु संपादयतु । शमिति पाठे सुखमित्यर्थः । नासाविवरान्नासाबिलात् । वराहतोकः सूक्ष्मवराहः ॥ २० ॥ खस्थ आकाशे स्थितः ॥ २१ ॥ कुमारैः सनकादिभिः । चित्रधाऽनेकधा ॥ २२ ॥ अंगुष्ठशिरोमात्रोंऽगुष्ठाग्रप्रमाणकः । गंडशैलागिरिगिलंतः स्थूलपाषाणास्तत्सम एष वराहो यज्ञो विष्णुः खेदयन् अनलंबुद्धिं प्रापयन् ॥ २४ ॥ सूनुभिर्मरीच्यादिभिः । जगर्ज गर्जनं कृतवान् । अगेंद्रसंनिभो गिरींद्रतुल्यः ॥ २५ ॥ गर्जनप्रयोजनमाह ॥ ब्रह्माणमिति । प्रतिस्वनया प्रतिध्वनिमतीः कुर्वता । तस्य वराहस्य घर्घरितं स्वजात्यनुकरणध्वनिं । कथंभूतं । स्वखेदक्षपयिष्णु स्वदुःखविनाशनशीलं । मायया महिम्ना मयः पूर्णः स चासौ सूकरश्च तस्य त्रिभिर्वेदैः पवित्रैर्निर्दोषैः । अगृणन् अस्तुवन् । तेषां स्तुत्या प्रसन्न इत्याह ॥ तेषामिति । वेदैर्वितन्यते विस्तृतयोच्यत इति वेदविताना तथा विधा मूर्तिर्यस्य तत्तथा । ब्रह्मस्तुतिरूपं वेदं । यज्ञवितानमूर्तिरिति पाठे यज्ञविस्तारांगजनकमूर्तिरित्यर्थः । आत्मनः स्वस्य गुणानामनुवादो यस्मिंस्तत् । भूयो ननर्द ननाद । जलं प्रलयजलं ॥ २८ ॥ जनमाविशंतं तमुपवर्णयाति द्वाभ्यां । तत्राद्येन पर्वतसाम्येन वर्णनं । भगवान्महीध्रो नारायणाख्यपर्वतः कं जलमाविशदित्युत्तरेणान्वयः । कथंभूतः । उत्क्षिप्तबाल उद्धृतपुच्छः । अन्य-

त्रोद्धृतहीबेरः । बालं तु कपिलं वज्रहीबेरं दीर्घरोमकमित्यभिधानात् । खे आकाशे चरतीति खेचरः । उभयत्र समं । कठोराः कठिणाः सटाः स्कंधगतरोमविशेषान् । धुन्वन्कंपयन् । अन्यत्र सटा लताविशेषः । सखराः परुषा रोमशा रोमवती त्वग्यस्य स तथोक्तः । अन्यत्र रोमशः पिचुमंदः खरा पिचुमंदस्य त्वग्यस्मिन्स तथा । खुरैराहतमभ्रं येनासौ खुराहताभ्रः खुरसंताडितमेघः । अन्यत्र खुरैः शृंगैः । सितशृंगो धवलदंष्ट्रः । अन्यत्र धवलसानुः । ईक्षा निरीक्षणं तदेव ज्योतिरग्निज्वाला तेन विभासो विभासनं यस्य स तथा ॥ २९ ॥ पदवीं स्थितिं मार्गं विजिघ्रन्विमार्गयन् । तज्जात्यनुकरणमेतत् । क्रोडापदेशो देवकार्यव्याजेन क्रोडः । अत एव न प्रसिद्धक्रोडसदृश इत्याह । स्वयं सतोऽध्वरांगो यज्ञोपयुक्तकुशादिजनकांगः । गृणतः स्तोतॄन्विप्रान् । उत ऊर्ध्वं वीक्ष्य ॥ ३० ॥ तदानींतनं समुद्रमुत्प्रेक्षते ॥ स वज्रेति । स उदन्वान्समुद्रः स्तनयन् शब्दं कुर्वन् आर्तः सन् । भो यज्ञेश्वर मां पाहीति चुक्रोशाजुहाव । आर्तत्वे निमित्तमाह ॥ वज्रकूटेति । वज्रकूटवदयोघनवद्गुरुतममंगं तस्य निपातवेगेन विशीर्णः कुक्षिर्यस्य स तथा । आर्तसाम्यमाह ॥ उत्सृष्टेति । उत्सृष्टोर्ध्वं गता दीर्घा ऊर्मय एव करास्तैः । उदरविदारणार्तः पुमान्यथोर्ध्वबाहुः सन् विदारक प्रति मां पाहीत्याक्रोशति तथाऽयमप्युक्तरीत्याऽऽक्रोशतीवेति भावः । इदं तु जडजलराश्यपेक्षया । अभिमानिविवक्षायां स्तुतिरेवेयमिति ज्ञातव्यं ॥ ३१ ॥ यद्दर्शनार्थं तस्य जलप्रवेशस्तद्दर्शनं जातमित्याह ॥ खुरैरिति । क्षुरप्रैः क्षुरवन्निशितैः । अर्धचंद्रः क्षुरप्रः स्यादित्यभिधानात् । अर्धचंद्राकारैरिति वा । उत्पारवारामिति क्रियाविशेषणं । पारे तीरांतरे स्थितं वारं जलं यथोद्धतं भवति । तथा तस्य समुद्रस्यापो विदारयन् । त्रिभिर्वेदैर्विव्रीयत इति त्रिवरुः । ढ्लोपे पूर्वस्य दीर्घो ण इति दीर्घः । रसायां रसातले गां भूमिं । कथं भूतां । तत्राप्सु सुषुप्सुर्योगनिद्रां कर्तुकामः सन् अग्रे पूर्वं जीवा धीयंतेऽस्यामिति जीवधानी तां सर्वप्राण्याधारभूतां गां स्वयमेवाभ्यदत्त प्रलयजलस्योपरि निहितवान् ॥ ३२ ॥ तां विलग्नां रसातले विशेषेण संबद्धां रसाया रसातलादुत्थित उद्धतः सन् संरुरुहे उपरितनदेशमारुरुहे । तत्राप्यारोहसमयेऽपि दैत्यमादिहिरण्याक्षं गदया सह गदामुद्यम्य पतंतमागच्छंतं रुंधानं स्वगमनप्रतिबंधकं सोढुमशक्यो न सह्यो विक्रमो यस्य सोऽसह्यविक्रमः स वराहोऽभसि मृगराट् सिंहो गजमिव स्वदंष्ट्रया लीलया जघान । कथं भूतः । सुनाभस्य

सुदर्शनस्य संदीपितः प्रज्वालितस्तीव्रो मन्युर्येन भगवतः सुदर्शनमुपेक्ष्य स्वदंष्ट्रया दैत्यहनने कृते सति ममात्र किं कृत्यमिति सुदर्शनस्य तस्मिन्समये कोप उत्पादित इति भावः । गजेंद्रो जगतीं गैरिकाद्युपेतभूमिं क्रीडया स्वदंष्ट्रया विभिंदन् यथाऽरुणपंकांकिततुंडगंडो भवति । तथा तस्य रक्तमेव पंकस्तेनांकितौ गंडौ तुंडं च यस्य स तथोक्तः । जघानेति पूर्वेणान्वयः ॥ ३३ ॥ ॥ ३४ ॥ उत्क्षिपंतमुद्धरंतं प्रज्ञाय हरिरयमिति ज्ञात्वाऽनुवाकैर्वेदवाक्यैरुपतस्थुस्तुष्टुवुः ॥ ३५ ॥ भो अजित । ते त्वया जितं । जितमिति संभ्रमे द्विरुक्तिः । यज्ञभावन यज्ञोपयुक्तकुशाद्युत्पादक । त्रयीतनुं वेदप्रतिपाद्यां मूर्तिं स्वां स्वरूपभूतां परिधुन्वते रोमजलत्यागाय कंपनाय निलिल्युर्निलीनाः ॥ ३६ ॥ भूम्युद्धरणादिरूपकारणेन सूकरावताराय । अध्वरात्मकमित्यनेनोक्तं यज्ञांगपदार्थजनकत्वं प्रपंचयंतः स्तुवंति ॥ छंदांसीत्यादिना । गायत्र्यादिछंदःप्रभृतियज्ञांगं त्वचादिभगवदवयवेषु । आसीज्जातमाश्रितं चेत्यर्थः । बर्हिर्दर्भः । अत्र दीर्घाभावश्छांदसः । दृशि चक्षुषि चातुर्होत्रं चतुर्भिर्होत्रादिभिः क्रियमाणं कर्म ॥३७॥ इडा भक्षणपात्रं चमसश्चतुष्कोणो यज्ञपात्रविशेषः । प्राशित्रं ब्रह्मभागपात्रं ग्रहा द्वादशसोमग्रहाः । रसने जिव्हाव्यापारे यच्चर्वणं दंतैश्चूर्णनं तत्र ॥ ३८ ॥ आत्मजन्म स्वाभिव्यक्तिः । दीक्षा दीक्षणीयेष्टिर्व्रतसंग्रह इति वा । उपसद उपसन्नामानो यज्ञविशेषाः । उपसत्तिविशेषा वा । शिरोधो ग्रीवात्वं प्रायणीया दीक्षानंतरेष्टिः । उदयनीया समाप्तेष्टिः । त एव दंष्ट्रे यस्य स तथोक्तः । प्रवर्ग्यो नाम ऋत्विक्सभ्यो होमरहितोऽग्निरावसथ्य औपासनाग्निः । क्रतोर्यज्ञरूपस्य ज्ञानरूपस्य वा तव शीर्षणं शिरः । चितय इष्टिकाबंधनविशेषास्तवासवः पंचप्राणाः । क्रतुरिति पाठे क्रतुः संकल्पः शीर्षणं । सभ्यावसथ्यौ चितयश्च तवासव इति व्याख्येयं । हि शब्दः प्रमाणप्रसिद्धिद्योतकः ॥ ३९ ॥ सोमो लताविशेषः । प्रातरादीनि त्रीणि सवनानि । अवस्थितिर्निश्चलत्वेनैकत्रावस्थानं । संस्थाविभेदा अग्निष्टोमेत्याग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसंस्थाविभेदाः । त्वङ्मांसादिसप्तदेहधातवः । सत्राणि बहुभिः संभूय कर्तव्ययज्ञात्मकानि कर्माणि । असोमा यज्ञाः ससोमाः क्रतवस्ते सर्वेऽपि त्वमित्यर्थः । इष्टिः प्रतिपत्तिथ्यादिषु क्रियमाणकर्मविशेषः । बंधनं देहस्य संहननं यस्य स तथोक्तः । अत्र दीक्षेत्यादिश्लोकद्वये दीक्षादीनां भगवदवयवादिना सामानाधिकरण्येन निर्देशोऽपि तत्तदवयवादिजन्यत्वादिकमेवार्थतया वाच्यं । न त्वैक्यं ।

यस्माद्यज्जायते चांगात्तत्तदंगाभिधं भवेदिति पूर्वं प्रमाणोदाहृतत्वादिति ज्ञातव्यं ॥४०॥ पूर्वोक्तमेव सपरिकरं कथयतः प्रणमंति ॥ नमो नम इति । मंत्रादिसत्ताप्रदत्वेन मंत्रादिषु स्थिताय तन्नामकाय । सर्वक्रतवे सर्वविषयकज्ञानरूपाय क्रियात्मने विहित-क्रियादानादिकर्त्रे वैराग्यं च भक्तिश्चात्मनो मनसोजयश्च तैरनुभावितं योग्यतानुसारेणोत्पादितं ज्ञानं स्वसाक्षात्कारो येन स तथा तस्मै । अत एव विद्यागुरव । विद्यानामादिवक्त्र इति वा ॥ ४१ ॥ हे भूधर । सभूधरा सपर्वता वनाज्जलान्निःसरतो निर्गच्छतो मतंगजेंद्रस्य दता दंतेन पत्रैः सहिता पद्मिनी सरसी ॥ ४२ ॥ त्वया धृता भूर्विराजित इत्युक्तं । इदानीं भूमंडलेन त्वद्रूपं विराजित इत्याहुः ॥ त्रयीमयामिति । वेदप्रतिपाद्यं । ते रूपं कर्तृ । अथेत्यर्थांतरे । चकास्ति शोभते । शृंगेणोढेन घनेन मेघेन । भूयसा महता । विभ्रमो विलासः ॥ ४३ ॥ ते पत्नीमेनां भूमिं लोकाय लोकोपकाराय जलस्योपरि संस्थापय । हितायेत्यपि क्वचित्पाठः । सतस्थुषां स्थावरैः सहितानां जगतां जंगमानां मातरं । यतस्त्वं पिताऽसि । एवं सति तत्र तत्र स्थिताः संतस्त्वया सहास्यै मात्रे नमसा नमनं विधेम कुर्मः । मातृत्वं पितृत्वं च स्पष्टयंत आहुः ॥ यस्यामिति । यस्यां भूम्यां स्वतेजः स्ववीर्यमरणावग्निमथनदारुविशेषे याज्ञिका मंत्रतोऽग्निमिवाधा निहितवानासि ॥ ४४ ॥ त्वदन्येनेदं कर्म मनसा ज्ञातु-मशक्यं किं पुनः कर्तुमिति विज्ञापयंति ॥ क इति । श्रद्धीत करिष्यामीत्यध्यवस्येत । अन्यतमोऽन्यस्तव त्वया कृतं भुव उद्विबर्हणमुद्धरणं तवेदं नाश्चर्यमित्याहुः ॥ न विस्मय इति । असौ भूम्युद्धरणरूपो व्यापारो विश्वविस्मये सर्वाश्चर्यवति । एत-देवोपपादयति । यो भवान्यतो मायया स्वेच्छयेदं विश्वं ससृजेऽतोऽतिविस्मयः । अतिशयेन विस्मयवान् ॥ ४५ ॥ विस्मय-मेव दर्शयंत आहुः ॥ विधुन्वतेति । वेदमयं वेदप्रतिपाद्यं । सटानां शिखाभिर्ग्रैरुद्धृता उत्क्षिप्ता ये शिवा अंबुबिंदवस्तैर्विमृज्य-मानाः सिच्यमाना विशेषेण शुद्धयंत इति वा । पाविताः पवित्रीकृताः । सर्वकर्मस्वधिकृता इति यावत् ॥ ४६ ॥ अपार-कर्मणस्तव कर्मणां भूम्युद्धरणादीनां पारमंतं य एष ते ज्ञातुमिच्छति स भ्रष्टमतिर्मूर्खो वा इति प्रमाणप्रसिद्धमेतत् । वतेत्या-स्वादने । कर्मणां पारज्ञानप्रसक्तिरेव कुत इत्यतोऽत्र कारणं दर्शयंतोऽपारत्वज्ञानदार्ढ्याय प्रार्थयंते ॥ त्वद्योगमायेति । तव योगमाया बंधकशक्तिस्तस्या गुणाः सामर्थ्यं तेन मोहितात्मनां मोहयुक्तमनसामत एव विस्रंसतामदृढज्ञानानां शं ज्ञानदार्ढ्यप्रयुक्तं

सुखं ॥ ४७ ॥ अविता रक्षकोऽवनिं भूमिं ॥ ४८ ॥ ४९ ॥ इयं कथा यथावस्थिता तथैवेत्याशयेन श्रद्दधतः फलमाह ॥ य एवमिति । हरेर्मेधा धारणवती बुद्धिर्यस्मात्स तथोक्तस्तस्य हरेर्हर्यवताराख्यवराहस्य कथनीयमायिनः कथनीयमाहात्म्यस्य श्रवयेत। ह्रस्वं छांदसं । उशतीं कमनीयां ॥५०॥ तत्प्रसादेनापि किमित्यत आह ॥ तस्मिन्निति। सकलाशिषां सर्वेष्टानां । प्रभौ दातरि किं दुर्लभं न किमपि। सकला अप्याशिषः सुलभा इत्यर्थः। यद्यपि सुलभास्तथाऽपि न प्रार्थनीया इत्याह॥ ताभिरिति । आशीर्भिरलं ता न प्रार्थनीया इत्यर्थः । लवात्मभिस्तुच्छाभिः । तर्हि त्वद्भजनं व्यर्थमिति नाशंकनीयमित्याह ॥ अनन्येति । स्वगतिं स्वलोकं । स्वलक्षणगम्यामिति वा । गुहाशय इत्यनेन भक्तिपूर्वकं भजनज्ञानं तस्यास्तीति सूचयति ॥ ५१ ॥ अवश्यमियं कथा सारज्ञेन सादरं श्रोतव्येत्याशयेनाह ॥ को नामेति । पुराकथानां पूर्वतनकथानां मध्ये विद्यमानानां भगवत्कथालक्षणसुधामापीय सादरमाकर्ण्य पश्चात्को नाम पुरुषार्थसारविद्विरज्येत न कोऽपि । ननु दृश्यते तादृश इत्यत उक्तं ॥ नरेतरं पशुं विनेति । तथा च योऽत्र विरक्तः स पशुरिति भावः । नन्वत्र वराहहतत्वेनोच्यमानो हिरण्याक्षः कः किमादिसर्गे ब्रह्मज उतैतन्मन्वंतरे कश्यपाद्दित्यां जातः । नाद्यः । उत्तराध्यायेषु विदुरप्रश्नपूर्वकमुक्तस्यास्य हिरण्याक्षस्य कश्यपपुत्रत्वावगमात् । न द्वितीयः । तमादिदैत्यं गदया पतंतमित्यत्रादिदैत्यो हिरण्याक्ष इत्युत्तरत्र च तस्यादिदैत्यवचनात् । किं चात्र हतस्य दंष्ट्रया हननमुच्यते । अत एव तद्रक्तपंकांकितगंडतुंड इत्युक्तं । दंष्ट्राहतत्वं विना रक्तपंकांकिततुंडत्वाद्यनुपपत्तेः । उत्तराध्याये च करेण कर्णमूलेऽहन्नित्युक्तं । न ह्येकदैकस्य दंष्ट्रया हननं कर्णमूले करेण हननं च संभवति । किं चात्र प्रलयजले मग्नाया भुव उद्धरणमुक्तं । तत्कथं कश्यपजहिरण्याक्षस्य वधे विवक्षितेऽसंभवति । तदा प्रलयजलाभावात् । अतः कथमेतदित्याशंकायामेतदध्यायसमुदायतात्पर्यं प्रमाणेनैवाह ॥ ब्रह्मजास्त्विति । तु शब्दोऽवधारणे । तेन कश्यपजत्वं व्यावर्तयति । प्रथमं पूर्वं । अनेनैतदध्यायतात्पर्यमुक्तं । उत्तराध्यायानां तात्पर्यमाह ॥ स एवेति । पार्षदो विजयः । द्वितीयं पश्चात्कर्णताडनात्कर्णमूले करेण ताडनात् । हत इत्यनुवर्तते । तथा चादिसर्गे ब्रह्मजो यो हिरण्याक्षः स एव वराहेण दंष्ट्रया हत इत्यस्मिन्नध्याये उच्यते । उत्तराध्यायेषु तस्यैव भगवत्पार्षदविजयदेहाविष्टस्य पुनः करेण हननं । अत एकस्यैव देहभेदेन हननद्वयमत्राध्यायसमूहे विव-

क्षितमतो न कोऽपि विरोध इति भावः । नन्वेवं द्वितीयहनने प्रलयजलाभावात्कथं भुव उद्धरता हननमित्यत आह ॥ पूर्वामिति । लयोदके भगवत एव मग्नां भुवमुद्धरता क्रोडमूर्तिना हरिणाऽसौ ब्रह्मजो हिरण्याक्षः पूर्वमेव हतः । द्वितीयं पश्चात्तु तेन पार्षदाविष्टेन सामुद्रजले मज्जतां भुवमुद्धरता हतः । अतस्तदा प्रलयजलाभावेऽपि न दोष इति भावः । नन्वेवं विविच्यात्र कस्मान्नोक्तमित्यतोऽत्र प्रयोजनं प्रमाणेनैवाह ॥ व्यत्यासेनापीति । कुत्रचिद्ग्रंथे तत्र तत्र प्रदेशेषु कथा व्यत्यासेन कालव्यत्यासेन पुरुषव्यत्यासेन चोच्यंते । यथा श्रीकृष्णगमनानंतरं भीमः सुयोधनं प्राह सदिति क्वचिद्वचनं । यथा वाऽत्रैव ग्रंथे दशमे राजसूयकथनावसरे दिग्विजयकथनानंतरं जरासंधवधकथनं । पुरुषव्यत्यासेन वचनं तु श्रीकृष्णेन द्रौपदीं प्रति धनंजयशरैर्हतान्दुर्योधनादींस्ते दर्शयिष्य इत्यादिकं क्वचिदुक्तं तदेव द्रष्टव्यं । न विद्यते विवेको विविच्य वचनं यस्मिन्वाक्ये तदविवेकं तेनेत्यर्थः । कुत्रचिद्ग्रंथे । उभयत्र प्रयोजनमाह ॥ दुष्टानामिति । अत्राविवेकेनेत्यस्य कर्तुः सम्यग्ज्ञानाभावेनेत्यर्थ इति प्रतीतिवारणाय तात्पर्यमाह ॥ अविवेकेनेत्यस्येति । अक्षरार्थस्तु पूर्वमेवोक्तः कर्तुरविवेक एव किं न स्यादित्यतोऽत्र बाधकं वक्तुमाह ॥ नत्विति । नैवेत्यर्थः । कुत इत्यत आह ॥ सर्वज्ञस्येति । उत्तरात् स्कंदपुराण एवोत्तरत्राद्विद्यमानवाक्याच्चाद्विरोधादित्यर्थः । अनंतरंगज्ञापकमप्याह ॥ दुष्टानामिति । दुष्टानां मोहो ह्येतादृशव्यासवचनस्यात्र प्रयोजनतयोच्यते । व्यासस्य विवेकवचने तदभिप्रायानुसारेणैव दुष्टैर्वाक्यार्थस्य ज्ञातत्वान्न मिथ्याज्ञानरूपो मोहस्तेषां स्यात् । अतोऽत्राविविच्यावचनमेवाविवेक शब्दार्थतया वर्णनीयमिति ज्ञायत इति भावः । अस्योदाहरणं तु प्रकृतहिरण्याक्षवधकथनादिकमिति मंतव्यं ॥ ५२ ॥ इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥ ३—१४ ॥ ॥

॥ हरिः ॐ ॥ स्वस्यादरप्रदर्शनाय समुद्यतांजलिः । हरिमुद्दिश्येति शेषः । येन लयोदके मग्नां भुवमुद्धरता यज्ञांगजनकमूर्तिना हरिणा वराहरूपेण ब्रह्मजो हिरण्याक्षो हतस्तेनैव हरिणाऽऽदिदैत्यो हिरण्याक्षः स एव कश्यपजपार्षदविजयदेहाविष्टः पुनर्हत इत्यनुशुश्रुम ग्रंथांतरे ज्ञानिमुखात् ॥ २ ॥ तद्विस्तरतो वर्णयेत्याशयेन पृच्छति ॥ तस्य चेति । क्षोणी सामुद्रजले तेन मज्जितां । दैत्यराजस्य पार्षददेहाविष्टस्य । मृधो युद्धं ॥ ३ ॥ प्रश्नस्य साधुत्वं कुत इत्यत आह ॥ अवतारेति । यद्य-

स्मात्त्वं मृत्युपाशविशातनीं छेदिनीं हरेरवतारकथां पृच्छसि । तथा च पुरुषार्थसाधनीभूतकथाविषयकत्वादस्य प्रश्नस्य साधुत्वमिति भावः ॥ ४ ॥ हरिकथाया मृत्युपाशविनाशकत्वमेव न किं त्वैहिकामुष्मिकसकलपुरुषार्थसाधकत्वमिति दृष्टांतमुखेनाह ॥ ययेति । मुनिना नारदेन अर्भकः पंचवर्षो ध्रुवः । इह जीवलोके मृत्योर्मूर्ध्न्यंघ्रिं कृत्वा । मृत्युं जित्वेति यावत् । अनेन सशरीर एव हरेः । पदं ध्रुवस्थानमारुरोहेति गम्यते ॥ ५ ॥ तयोः संग्रामहेतुत्वं वक्तुं पुरावृत्तं कथयति ॥ अथेति । अथ तस्माद्धरिकथाविषयत्वदीयप्रश्नोत्तरस्यावश्यं वक्तव्यत्वात् । न केवलमत्रार्थे मदीयवचनं किं त्वयं वक्ष्यमाणेतिहासोऽपि मे मया श्रुतोऽस्ति । तमेव प्रश्नोत्तरत्वेन । वक्ष्यामीति शेषः ॥६॥ इतिहासमेवाह ॥ दितिरिति । दाक्षायणी दक्षस्य पुत्री दितिर्नामतो मारीचं मरीचिपुत्र । रामशरहतमारीचव्यावृत्त्यर्थं कश्यपमिति । तथा सांकेतितपुरुषांतरव्यावृत्तये मारीचमिति । चकमे कामितवती । संध्यायां सध्याकाले । तत्र हेतुर्हृच्छयः कामस्तेनार्दितेति ॥ ७ ॥ तदप्यग्निहोत्रगृहे तत्रापि समाहितं समाधियुक्तं । चकम इत्याह ॥ इष्ट्वेति । अग्निरेव जिव्हा यस्य स तथा तं यजुषां पतिं यजुर्वेदप्रतिपाद्यं यज्ञाराध्यं पुरुषं पूर्णषड्गुणं विष्णुं । निम्लोचत्यस्तंगच्छति । अग्न्यागारेऽग्निगृहे ॥ ८ ॥ त्वत्कृते त्वामुद्दिश्य दुनोति पीडयति । विक्रम्य शौर्यमाविर्भाव्य । रंभां कदलीं ॥ ९ ॥ न केवलं भोगेच्छुरहं त्वां याचे किंतु प्रयोजनांतरेच्छयाऽपीत्याह ॥ तद्भवानिति । प्रजावतीनां पुत्रवतीनां ते भद्रमस्तु । आयुंक्तां सर्वतो युनक्तु सम्यक् करोतु । मय्ययुंक्तामिति पाठेऽडागमः छांदसः ॥ १० ॥ अनुग्रहसाध्यं प्रयोजनं दर्शयति ॥ भर्तरीति । सप्तमी पंचम्यर्थे । भर्तुः प्राप्तबहुमानानामित्यर्थः । स्त्रीणामिति शेषः । मानमपि पुत्रप्राप्तिलक्षणमित्याशयेनाह ॥ पतिरिति । प्रजया पुत्ररूपेण तज्जाया । जाया भवति यदस्यां जायते पुनरिति श्रुतेरिति भावः ॥ ११ ॥ नोऽस्माकं पिता नोऽस्मान्पृथगपृच्छत् भावमभिप्रायमददाददात् ॥ १३ ॥ अथ तस्मान्महीयसि त्वादृशे महत्तमे पुरुषे आप्तत्वेनोपसर्पणं शरणगमनं । भो वीर । कृपणां । एष मां त्वत्कृते विद्वन्निति श्लोकद्वये पूर्वं कृपणत्वस्योक्तत्वात् । भर्तरीत्यादिश्लोकचतुष्टयोक्तरीत्या बहुभाषिणीं प्रवृद्धोऽनंगः कामस्तेन कृतं कश्मलं चित्तक्षोभलक्षणं यस्याः सा तथा तां ॥ १४ ॥ अथाऽपि काममेनं त इत्यादिना स्वेन वक्ष्यमाणमंगीकारयितुं भार्यां स्तौति ॥ एष त इति पंचभिः । यतो यस्याः सकाशात् । त्रैवर्गिकी त्रयाणां

धर्मार्थकामानां संबंधिनी सिद्धिः प्राप्तिः ॥ १६ ॥ सर्वाश्रमान् ब्रह्मचर्याद्याश्रमोक्तान् स्वाश्रमेण गार्हस्थ्याश्रमानुष्ठानेनोपादायान्नदानादिना संभाव्य ॥ १७ ॥ आत्मनो देहस्यार्धमग्निहोत्रादिकर्मसु द्वयोः सहाधिकारात् । यच्छब्दानां नानात्वमिति संबंधः । हे भामिनि । सुंदरी रमणी रामा कोपना सैव भामिनीत्यभिधानात् । कोपयुक्ते सुंदरीत्यर्थः । स्वधुरं दृष्टादृष्टकर्मभारं । अध्यस्य निक्षिप्य विज्वरो निश्चिंतः ॥ १८ ॥ इंद्रियाण्येवारातयः शत्रवस्तान् । इतर आश्रमो येषां तैर्हेलाभिर्लीलाभिर्जयेम । सभार्यस्येंद्रियाणि प्रायेणेतस्ततो न गच्छंतीति भावः ॥ १९ ॥ तामनेकोपकारकर्त्रीं त्वां कात्स्न्र्येनानुकर्तुं प्रत्युपकारैरनृणीभवितुं न प्रभवो न समर्थाः । गुणगृध्नवो गुणलुब्धाः पुरुषास्तेऽपि न समर्थाः । आयुषाऽपि संपूर्णेनाप्यायुषा । वा शब्दाज्जन्मांतरेऽपि न प्रभव इति सूचयति ॥ २० ॥ यद्यपि त्वदनुकरणमशक्यमथाऽपि प्रजार्थे पुत्रोत्पत्तौ । यथा येन मुहुर्तेन नातिवाचंति न निंदंति ज्ञानिनस्तदेकं मुहूर्तं प्रतिपालयानिष्टकारि यथा न स्यात्तथा कुरु । एकमुहूर्तगमनपर्यंतं धैर्यं कुर्वीति यावत् ॥ २१ ॥ घोराणां वेत्युक्तं स्पष्टयति ॥ चरंतीति ॥ २२ ॥ भूतान्यस्माकं किं करिष्यंतीत्यत आह ॥ एतस्यामिति । भूतान्येव पार्षदा भृत्यास्तैः । पार्षद शब्दपर्यायः पार्षच्छब्दः । वृषेण वृषमारुह्य । तथा च भूतराट् रुद्रोऽधिकारिणोऽस्मान्दंडयिष्यतीति भावः ॥ २३ ॥ तर्हि तदज्ञाता भवानीत्यतस्तदज्ञातत्वं तवाशक्यमित्याशयेनाह ॥ श्मशानेति । तत्कर्तृकदर्शनमपि भयप्रदमिति द्योतनायैतानि विशेषणानि । श्मशाने विद्यमानश्चक्रानिलश्चक्राकारवातस्तेनोत्पन्ना या धूलिस्तया धूम्रवर्णो विकीर्णो विक्षिप्तो विद्योतो विशिष्टद्युतिमान् जटाकलापो यस्य स तथा । भस्म नावकुंठोऽवरूषणं यस्य सः । अमलं रुक्मं रजतं । भस्मावकुंठोऽमलरुक्मवद्धवलदेहो यस्य स तथा । त्रिभिः । नेत्रैरिति शेषः । अस्मिन्मूहूर्तेऽधिकारिणो निलीनानपि तृतीयनेत्रेण पश्यतीति भावः । ते देवरः सहोदरीपतिः । इदं लज्जोत्पादनार्थमुक्तं ॥ २४ ॥ ननु स्वजनानामस्माकं स दंडं न करिष्यतीत्यत आह ॥ न यस्येति । स्वजनो बंधुः परो वैरी योग्यतातिरेकेण नास्तीत्यर्थः । एवमग्रेऽपि । विगर्ह्यो विशेषेण निंद्यः । वयमपि तादृशश्चेत्कुतोऽस्माकं तद्भयमित्यत आह ॥ वयमिति । येन चरणेनापविद्धां तिर्यक् प्रहरता भुक्तभोगा यया तामप्यजां गृहभार्यादिरूपां प्रकृतिं व्रतैस्तमाराध्याशास्महे इच्छामः । बत इत्यनेनास्माकं न तादृशवराग्यामति सूचयति ।

अतस्तद्भयमस्माकमस्त्येवेति भावः ॥ २५ ॥ नन्वयं पिशाचचर्यां चरन्दृश्यतेऽतः पिशाचवदेवाकिंचित्कर इत्यत आह ॥
यस्येति । यस्य श्री महारुद्रस्यानवद्यानि विषमरागादिशून्यान्याचरितानि हरिध्यानादिरूपाणि मनीषिणो नारदाद्या अविद्या-
लक्षणं पटलं ज्ञानदृष्टिप्रतिबंधकं विभित्सवो भेतुमिच्छव इंद्रादिसर्वजीवेषु निरस्तौ साम्यातिशयौ यस्य स तथा। सतां नारदा-
दीनां गतिरुपदेशार्थं गम्य एतादृशोऽपि स्वयं कारणविशेषेणैव पिशाचचर्यामचरत् । अतः कथमकिंचित्कर इति भावः ॥२६॥
नन्वेवं चेत्केचिदेनं कस्माद्धसंतीत्यत आह ॥ हसंतीति । स्वात्मन्स्वात्मानि स्वांतर्यामिणि समीहितमभिप्रेतमविदुषोऽविद्वांसः ।
सुपां सुलुगिति जसः शस् । श्वभोजनं शुनो भोजनमित्यन्नस्थानीयं शरीरं स्वात्मतयेदमेव स्वात्मेति बुद्ध्योपलालितं पोषितं
॥ २७ ॥ केनाचित्कारणेन रुद्रः पिशाचचर्यामचरादित्युक्तं । किं तत्कारणमित्यपेक्षायामाह ॥ ब्रह्मादय इति । अत्र यच्छ-
ब्दाभ्यां रुद्रपरामर्शे ब्रह्मादीनां तत्कृतसेतुपालनत्वसंभवान्नास्य रुद्रस्याज्ञाकर्यन्यस्य पिशाचचर्येत्यर्थप्रतीतिप्रसंगाच्च विवक्षितं
तात्पर्यं प्रमाणेनैव दर्शयति ॥ पिशाचचर्यामिति । गर्भिणी काचन तस्या वधजनितपापनाशार्थं या विष्णवाज्ञा तयैवेति योज्यं ।
तु शब्दो भक्तिपूर्वकत्वादिति विशेषसूचकः । अनेन मूले यच्छब्दद्वयं तच्छब्दश्च विष्णुपराः पिशाचचर्येत्यतः पूर्वं रुद्रस्येति
शेष इति दर्शयति । ननु रुद्रस्य ज्ञानिनः कथं गर्भिणीवधेन पापप्रसक्तिर्यन्नाशार्थं विष्णुना पिशाचचर्या ज्ञापितेत्यत आह ॥
अहो विष्णुरिति । विष्णुर्विडंबकृल्लोकानुकरणकर्ता । लोके हि भृत्यैः पापे कृते तत्प्रायश्चित्तार्थं तत्स्वामिभिः किंचिद्व्रतं
विधीयते । तथा तस्य पापाभावेऽपि लोकशिक्षार्थं चकारेति भावः । अहो आश्चर्यं । एतादृशानापि स्वाज्ञाकारिणः करोतीति ।
अनेन मूलेऽहो विभूम्न इति चतुर्थपादतात्पर्यमुक्तमिति ज्ञातव्यं ॥ ततश्चायं श्लोकार्थः ॥ ब्रह्मादयो देवा येन विष्णुना कृतं सेतुं
धर्ममर्यादां पालयंतीति यत्कृतसेतुपालाः । तस्याज्ञाकरीत्यत्रेदं हेतुतयोक्तमिति ज्ञातव्यं । अत्रापि हेतुं सूचयन्नाह ॥ यत्कारण-
मिति । इदं विश्वं यत्कारणं तद्यत्कारणं । विश्वनिमित्तत्वं चेच्छयैवेत्याह । माययेति । च शब्दोऽवधारणे । माययैवेत्यर्थः । ॥ ६४ ॥
तस्य विष्णोराज्ञाकरी गर्भिणीवधजनितपापनाशाय या विष्णुना कृताऽऽज्ञा तत्करणरूपा रुद्रस्य पिशाचचर्या । ननु रुद्रस्य
ज्ञानिनः पापप्रसक्तेरेवाभावात्कथमेवमाज्ञा विष्णुना कृतेत्यत आह ॥ अहो विभूम्न इति । विशेषण पूर्णस्य विष्णोश्चरितं रुद्रा-

द्याज्ञापनं विडंबनं लोकानुकरणरूपमहो आश्चर्यं । एतादृशानापि स्वाज्ञाकर्माणि प्रवर्तयतीति ॥२८॥ संवेदिता सम्यग्ज्ञापिता । वासः परिधानं । वृषलीव वेश्येव ॥ २९ ॥ निर्बंधं दुराग्रहं विकर्माणि निषिद्धकर्माणि दिष्टाय कर्मसाक्षिणे देवायोपविवेश । निर्वेश उपभोगः स्यादुपवेशस्तु मैथुनमित्यभिधानान्मैथुनं कृतवानित्यर्थः । हेति हरि संकल्प एतादृश इत्यास्वादने ॥ ३० ॥ उपस्पृश्य स्नात्वा जजाप । गायत्रीमिति शेषः ॥ ३१ ॥ कर्मावद्येन कर्मजनितदोषेण ॥ ३२ ॥ नावधीत् मा हंत्वित्यर्थः । वधशंकाबीजमाह ॥ यस्येति । अंहसमपराधमकरवं कृतवती ॥ ३३ ॥ नतानां न भयमिति मत्वा रुद्रं नमाति ॥ नम इति । रुद्राय भक्तापराधरूपरुग्द्रावणकर्त्रे । उग्राय दुष्टानामतिक्रूराय मीढुषे भक्ताभीष्टसेचकाय साधुषु न्यस्तदंडाय दुष्टेषु धृतदंडायात एव मन्यवे क्रोधवते मननशीलायेति वा ॥३४॥ मा भीर्यस्मादसौ भीमः । प्रसादकरणे हेतुं कैमुत्येनाह ॥ व्याधस्येति । हिंसकस्यापीत्यर्थः । सतीपातिरित्यनेन स्वभगिनीपातित्वरूपमपि हेतुं सूचयति । लोक्यां लोकद्वयार्हां । आशिषं शुभं । आशासानां कामयमानां प्रवेपतीं कंपमानां संध्यायां यो नियमः स निवृत्तो यस्य स तथा ॥३६॥ आत्मनो मनसोऽप्रायत्यान्निग्रहे प्रकृष्टयत्नाकरणान्मौहूर्तिकाद्दोषात् । संध्याकालरूपमुहूर्तसंबधिमुहूर्तजनितदोषात् । उतापि । मन्निर्देशातिचारेण मदाज्ञातिक्रमेण । रुद्रादिदेवानां हेलनादवज्ञानाच्च ॥३७॥ जाठराधमौ पुत्राधमावेव । अधमपुत्रत्वमेवोपपादयति ॥ लोकानिति । भो चंडि क्रूरे ॥३८॥ प्राणिनामिति श्लोके त्वत्पुत्राभ्यामिति शेषः । हन्यमानानां सतां निगृह्यमाणानां सतीनां । कोपितेषु सत्सु ॥ ३९ ॥ शतपर्वधृग्वज्रधर इंद्रः ॥४०॥ सुनाभेन सुदर्शनचक्रेणोदारौ बाहू यस्य तेन । आशासे इच्छामि । मह्यं मम महात्मसु कोपितेष्वित्युक्ते शंकितचित्ता सती प्रार्थयते ॥ मा क्रुद्धाद्ब्राह्मणादिति । एकवचनं समुदायाभिप्रायं । ब्राह्मणानां शापादित्यर्थः ॥ ४१ ॥ ब्रह्मशापेन हतस्य किमनिष्टं भवतीत्यत आह ॥ न ब्रह्मेति । दंडः शापो नारका नरके पतिता अपि । तथा यां यां योनिमसौ ब्रह्मदंडदग्धो भूतभयदो वा गतो भवति । तत्रस्थश्च नानुगृह्णंति न कृपां कुर्वंति ॥ ४२ ॥ कृतशोकानुतापेन कृतपापनिमित्तशोकजातेन पश्चात्तापेन । प्रत्यवमर्शनाद्युक्तायुक्तविचारानुसंधानादुरुमानाद्बहुमानात् । भवे रुद्रे ॥ ४३ ॥ पुत्रस्य हिरण्यकशिपुनामकस्य पुत्राणां मध्ये भाविता भविष्यति । तमेव वर्णयति ॥ गायंतीति सार्धैः पंचभिः । गायंति गास्यंति । समं सह

॥ ४४ ॥ साधवो यस्य त्वत्पौत्रस्य शीलं शमदमादिस्वभावं । अनुवर्तितुमनुगंतुं प्राप्तुं निर्वैरादिभिर्योगैरूपायैरात्मानमंतःकरणं भावयिष्यंति शोधयिष्यंति । किमिव । योगैर्दाहविशेषादिरूपैर्दुर्वर्णं हीनवर्णं हेमेव सुवर्णमिव ॥ ४५ ॥ यस्य भगवतः प्रसादादिदं विश्वं ब्रह्मादिकं प्रसीदाति प्रसन्नं भवति । अत एव यदात्मकं यत्स्वामिकं यः शश्वद्दृक् सर्वदैकप्रकारज्ञानः स भगवान्यस्य त्वत्पौत्रस्यानन्यया दृशा सर्वोत्तमो हरिरेव तत्समोऽन्यो नास्तीत्येवं रूपज्ञानेन तोष्यते तोषं प्राप्स्यति ॥ ४६ ॥ भगवत्तोषनिमित्तांतराण्याह ॥ स वा इत्यादिना । महात्मा श्रेष्ठांतःकरणो महानुभावो महाप्रभावो महतां मध्ये महिष्ठोऽतिशयेन महान् अनुभाविताशये शोधिते मनासि वैकुंठं नारायणं । अतद्धरेरन्यत् । आब्रह्मस्तंबपर्यंतं जगदसारमनित्यं चेति मत्वा विहास्यति त्यक्ष्याति ॥ ४७ ॥ निर्वैरादिभिरित्यत्रादिपदोक्तान् गुणानाह ॥ अलंपट इत्यादिना । अलंपटो विषयासक्तिशून्यः शीलधरः । शील समाधाविति धातोः । समाधिं कुर्वाणो गुणाकरः शमादिगुणाश्रयः परार्थे परेषां प्रयोजने सति स्वयं हृष्टः । परार्ध्येति पाठे परेषामृद्ध्या समृद्ध्येति व्याख्येयं । परेषु व्यथितेषु दुःखितेषु सत्सु स्वय दुःखितोऽभूत् । शत्रुरजातशत्रुः शोकहर्ता तत्त्वोपदेशेन नैदाघिकं उष्णकालजातं ॥ ४८ ॥ श्रीसंज्ञाया ललनायाः स्त्रियो ललाममलंकारस्थानीयं द्रष्टा द्रक्ष्यति ॥ ४९ ॥ अमोदत पौत्रेण पुत्रयोः सद्गतिर्भविष्यतीति भावेनामोदतेत्यर्थः । कृष्णाद्धरेर्महात्मनाः सोत्साहचित्ता । अत्र कृष्णहस्तवधमात्रेण सर्वेषामपि सद्गतिर्भवतीत्युच्यत इति प्रतीयतेऽतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ विष्णुहस्तेति । लोक ऊर्ध्वोऽन्यस्याभक्तस्य । तर्ह्येवं मूले विविच्य कस्मान्नोक्तमित्यत आह ॥ तथाऽपीति । न विविक्तं न विविच्योक्तं क्वचिद्ग्रंथे । ननु कुत एवं संकोचः । अभक्तानामपि विष्णुहस्तवधेनोर्ध्वलोकः किं न स्यादित्यतोऽत्र बाधकमाह ॥ हिरण्येति । यद्यभक्तस्यापि विष्णुहस्तवधादूर्ध्वलोकस्तर्हि भगवद्धतस्य हिरण्यकशिपोस्तमःप्रवेशप्रसक्तिरत्रोच्यमानाऽनुपपन्ना स्यादिति बाधकमनेनोक्तमिति ज्ञातव्यं । श्रुत्वा भागवतं पौत्रममोदतेत्युक्त्या पुत्रयोः पौत्रेण सद्गतिर्भविष्यतीत्यभिप्रेतं तदपि नाभक्तविषयमित्याशयेन प्रमाणं पठति ॥ स्वत इति । स्वभावत एव न तु दक्षिणा तर्पितवैष्णवर्त्विगनुग्रहेण । सद्गतियोग्यस्यापि तु । सद्गतिप्राप्ता विशेषः का स्वतः सद्गतियोग्यतेत्यत उक्तं ॥ योग्यतेति । कुत एवं संकोच इत्यत उक्तं ॥ अयोग्यस्येति । अनादिभक्तिरूपयोग्यताशून्यस्ये-

त्यर्थः । गातिः सद्गतिः कुतो न कुतोऽपीत्यर्थः । तथा च स्वपुत्रयोर्जीवद्वयसमावेशात् । अनादिभक्तिमतोः पौत्रेण सद्गतिर्भविष्यतीत्यमोदतेति तात्पर्यमत्रेति भावः ॥ ५० ॥ इति श्रीभागवतटिप्पण्यां पंचदशोऽध्यायः ॥ ३–१५ ॥ ॥

॥ हरिः ॐ ॥ प्राजापत्यं प्रजापतेः कश्यपस्य संबंधि तेजो वीर्यं परेषां तेजः सामर्थ्यं हंतीति परतेजोहनं । असुरार्दनाद्धरेर्वधं शंकमाना सती ॥ १ ॥ तेन गर्भेण हृता लोके निरस्तसूर्यादिप्रकाशे तत्परिहारार्थं हतौजसो नष्टसामर्थ्याः । विश्वसृजे ब्रह्मणे । ध्वांतेन कृतं व्यतिकरं व्यत्यासं । दिगंतरभ्रममिति यावत् ॥ २ ॥ वेत्थ जानासि । यद्यतो वयं संविग्ना भ्रांता हि यस्माद्भगवतस्तवाव्यक्तमज्ञानं न । कुत इत्यत उक्तं ॥ कालेनेति । कालेन कालादिनाऽस्पृष्टमतिरोहितं वर्त्म ज्ञानमार्गो यस्य स तथा तस्य ॥ ३४ ॥ सार्वज्ञ्यमेव विशदमाहुः ॥ देवदेवेति। परेषामुत्तमानामपरेषामधमानां भावविदभिप्रायज्ञोऽसि । केनाभिप्रायेण दितेर्गर्भोऽवर्धत इति जानासीत्यर्थः । प्रकृतोपद्रवशांतिकरणाय स्तुतिपूर्वकं नमंति ॥ नम इति । विज्ञानवीर्याय विशेषज्ञानलब्धपराक्रमाय । मायया हरेरिच्छयेदं पारमेष्ठ्यं पदमुपेयुषे ज्ञातवते गृहीतः सर्जनोन्मुखीकृतो गुणभेदो गुणविशेषो रजोगुणो येन स तथा तस्मै । अव्यक्तं ब्रह्मा योनिः कारणं यस्य तस्मै ॥ ५ ॥ दितिगर्भप्राप्ततिमिरकृतोपद्रवपरिहारः सर्वोपद्रवनाशकस्त्वदुपासकानामस्माकमवश्यं भविष्यतीत्येवेत्याशयेनाहुः ॥ ये त्विति । ये पुरुषास्त्वा त्वामनन्येन भावेनायमेवास्माकं गुरुरिति भक्त्या भावयंति ध्यायंति तेषां पुंसां न कुतश्चित्पराभव इत्यन्वयः । कुतोऽस्य मुख्यगुरुत्वमित्यत उक्तं ॥ आत्मभावनमिति । आत्मानं परमात्मानं भावयति ध्यायत्युपदिशति वेत्त्यात्मभावनस्तं । ध्याने उपसंहार्यान् गुणान्दर्शयंति ॥ आत्मनीति । आत्मनि परमात्मनि प्रोतानि ग्रथितानि स्थापितानि भुवनानि येन स तथा तं । अत एव परं सर्वजीवोत्तमं सदसदात्मकं कार्यकारणप्रपंचतयाऽऽप्तं । भावयंतीत्युक्तध्यानोत्तरभाविन्यवांतरफलानि दर्शयंत आहुः ॥ तेषां सुव्यक्तयोगानामित्यादि । त्वयि मुख्यगुरुत्वादित्यादिना सम्यग्ध्याते हरिविषयकध्यानादिरूपो योगः सम्यग्व्यक्तो भवति । प्राणेंद्रियजयश्च संपद्यते । अनंतरं मोक्षहेतुर्युष्मत्प्रसादश्च भवतीत्यर्थः ॥ ७ ॥ भगवत्पूजात्मककर्मोपदेष्टृत्वाचार्यं मुख्यो गुरुरित्याहुः ॥ यस्य वाचेति । यस्य तव वाचा वेदरूपया ब्रह्मणः सर्ववेदद्रष्टृत्वात् । प्रजा ब्राह्मणादिरूपास्तंत्या गोबंधनाय रचितया दीर्घया

रज्ज्वा बद्धाः । यत्रि बंधन इति धातोः । हरंत्याहरंति बलिं स्वावेदितं भगवत्पूजादिकं । आयत्ता आधीनाः सत्यो मुख्यात्मने सर्वजीवमुख्याय ॥ ८ ॥ प्रकृतं विज्ञापयंति ॥ स त्वमिति । लुप्तकर्मणामहोरात्रविभागाज्ञानेन लुप्तानि कर्माणि येषां ॥ ९ ॥ तमसः कारणं स्वयमेवोत्प्रेक्ष्याहुः ॥ एष इति । गर्भे कुक्षौ यदोजो वीर्यमर्पितं निक्षिप्तं स एष दितेर्गर्भस्तिमिरयंस्तमो-व्याप्तः कुर्वन् एधसि काष्ठे निक्षिप्तोऽग्निरिव ॥ १० ॥ दितेः कुकर्म ज्ञात्वा प्रहस्य । शब्दगोचरो देवस्तुतिरूपशब्दविषयः । प्रीणन्प्रीणयन् ॥ ११ ॥ मानसा मनोजाताः । विहायसाऽऽकाशमार्गेण । किं प्रयोजनापेक्षया चेरुर्नेत्याह ॥ लोकेष्विति । लोकस्थविषयेषु विगतेच्छाः । अथाऽपि तेषां लोकसंचरणं लोकतत्त्वविवित्सयेत्याशयः ॥ १२ ॥ विकुंठाख्यं निलयं लोकं ॥ १३ ॥ तं वर्णयति ॥ वसंतीत्यादिद्वादशभिः । वैकुंठस्य हरिरेव मूर्तिर्येषां ते तथा । सारूप्यभाज इत्यर्थः । अत्रानिमित्त-नेत्यस्य विवक्षितं तात्पर्यं दर्शयति ॥ अनिमित्तेनेति । विष्णोरर्पणं । कारयितृत्वाद्यनुसंधानरूपं यस्मिन्स तथा तेनेत्यर्थः । अनेन अः परमात्मा स एव निमित्तं कारयितृतयोद्देश्यतया चानु सहितो यस्मिन्निति मूलं व्याख्येयमिति सूचयति ॥ १४ ॥ शब्दगोचरो मूर्तिमद्भिर्वेदैः स्तुतः । सत्त्वं ज्ञानबलसमाहारात्मकं देहं विष्टभ्य सत्त्वं सत्त्वगुणं विष्टभ्य कार्योन्मुखी कृत्येति वा मृडयन् रक्षन् स्वानां नोऽस्माकं वृषः श्रेष्ठः ॥ १५ ॥ तत्रत्यवनं वर्णयति ॥ यत्रेति चतुर्भिः । द्रुमैर्विभ्राजत् । कथं-भूतैर्द्रुमैः । सवर्तुश्रीभिः सर्वेषु ऋतुषु विद्यमाना या श्रीः पुष्पादिरूपा येषां तैः । कामितार्थदाने दृष्टांतः । मूर्तिमद्व्यक्तमूर्तिधरं कैवल्यं ब्रह्मैव स्थितमिति । स ललनाः स्त्रीभिः सहिता वैमानिका विमानेन चरंतः पुरुषा लोकस्य जनस्य शमलक्षपणानि पापनाशकानि भर्तुर्हरेश्चरितानि यत्र वने गायंति । कथं भूताः । अंतर्जले जलस्यांतस्तु विशेषेण विकसंत्यो या मधुमाधव्यो मधुमकरंदस्तद्युक्ता माधव्यो वसंतकालीना लतास्तासां विकसन्मधवः प्रसरन्मकरंदा माधव्यस्तासामिति वा गंधेन वायुना । नीतेनेति शेषः । खंडिताधियोऽपि हरेर्भ्रंशितबुद्ध्योऽपि अनिलगंधप्रापकं क्षिपंतास्तिरस्कुर्वंतो गायंति । अनेन तेषां विषये संनिधानेन चित्तक्षोभेऽपि न भगवद्रतिरपगतेति सूचयति । अत्र गंधेन खंडितधीत्वं न मुक्तानां युक्तमतोऽत्र विवक्षितान्वैमा-निकान्पुरुषान्प्रमाणेनैवाह ॥ मुक्ताश्चेति । अमुक्तानां भ्रमश्चित्तक्षोभः । तथा चात्र वैमानिकाः पुरुषा अमुक्ता आधिकारिक

एव विवक्षिता इति भावः। एवं विधविशेषसूचनाय वा तु शब्दाः। वैमानिका इत्यनेन संबंधनीयः। मुक्तानामेवं विधः क्षोभः किं न स्यादित्यतोऽत्र बाधकमाह ॥ न रज इति । येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैरित्युत्तरवाक्ये मुक्तानां विषयसंबंधेऽपि चित्तक्षोभाभावस्योक्तत्वेन तद्विरोधप्रसंगोऽन्यथेत्यर्थः ॥ १७ ॥ गायनस्यान्यत्कंठोत्थध्वनिविशेषसाहित्येऽनुगाने च सति शोभा भवत्यतस्तदुभयमत्रास्तीत्याह ॥ पारावतेति । अन्यभृताः कोकिला दात्यूहश्चातकाश्चिरमात्रया त्रिमात्रादिस्वरेण कोलाहले कंठोत्थध्वनिविशेषे विरचिते कृते सति भृंगाधिपे भ्रमरश्रेष्ठे हरिकथामनुगायमाने सति गायंतीति पूर्वेणान्वयः । ननु तिरश्चां पारावतादीनां कथं पुरुषकृतगायनोपयोगिध्वनिविशेषादिकर्तृत्वं लोके दर्शनादित्यतोऽत्र समाधानं प्रमाणेनैव दर्शयति ॥ तिरश्चीना इति । स्थावराश्चेत्यनेनोत्तरश्लोकस्थमंदरादीनां ग्रहणं । ये पारावताद्यास्तिरश्चीना ये च मंदराद्याः स्थावरा असुक्तास्ते सर्वे हरिज्ञानान्नियमान्नियमेन प्रारब्धकर्मणः क्षये मुक्तिमायांति पश्चाद्विकुंठलोकगा भवंतीत्यर्थः । अतो मुक्तानां पारावतादीनां गायनोपयुक्तध्वनिकर्तृत्वादिकमुपपन्नमिति भावः ॥ १८ ॥ मंदारपारिजातौ सुरतरुविशेषौ कुरबस्तिलकवृक्षः । ऊर्णं करवीरपुष्पं नागो नागकेसरः पुन्नागः सुरकर्णिकारः । बहुवचनमाद्यर्थे । एतदाद्याः सुमनसः पुष्पजातयोः यस्मिन्वने तुलसिकाभरणेन हरिणा तुलस्या गंधैरर्चिते सति तस्यास्तपो बहुमानयंतीति यथाश्रुतोऽर्थः । अत्र हरिकर्तृकं तुलसीगंधार्चनं प्रमाणबाधितमतोऽत्र विवाक्षितमध्याहृत्याबाधितां योजनामाह ॥ भक्तैरिति । भगवता तुलासिकाभरणे कृत इत्यध्याहार्यं । अन्यथा तुलसिकाभरणेनेत्यनुवादायोगादिति ज्ञातव्यं । तस्यास्तुलस्या गंध इति सप्तमी तादर्थ्य इत्याशयेनोक्तं गंधार्थमिति ॥ ततश्चायमर्थः ॥ मंदरादि पारिजातांता मुक्ताः स्थावरजीवा यस्मिन्वने भगवति भक्तैः स्वस्वपुष्पैस्तुलस्या चार्चिते सति भगवता तानि पुष्पाणि विहाय तुलसिकाभरणे कृते सति तुलसिकाभरणेन कृतेन निमित्तेन तस्यास्तुलस्या गंधे गंधार्थतया बहुमानयंति । किमनया हरिप्रीतिकरगंधभोगार्थं तपः कृतं । येनास्मान्विहाय हरिणेयमाभरणीकृतेति पूजयंतीत्यर्थ इति । एवं भूतं वनं यत्र तं विकुंठनिलयं ययुरिति पूर्वेणान्वयः ॥ १९ ॥ पुनर्वैकुंठमेव वर्णयति ॥ यत्संकुलमिति । यद्वैकुंठस्थानं संकुलं व्याप्तं भवति । कैः । विमानैः । कथं भूतैः । हरेः पदयोरानतिर्भक्तिपूर्वकप्रणामस्तन्मात्रेण तृप्ताः पुरुषा

येषु तैर्वैडूर्यं पद्मरागं मरकतमिंद्रनीलं तदेव मारकतं हेम सुवर्णमेतैर्विरचितैरेषां विमानस्थानां बृहंति कटितटानि नितंबप्रदेशा यासां ताः । स्मितशोभीनि मुखानि यासां ताः । एवं विधा अपि स्त्रियः कृष्णे आत्मा मनो येषां तेषां रजो रागमुत्स्मयाद्यैरुत्कृष्टगर्वपूर्वकशृंगारचेष्टाविशेषैर्नोदधुर्न जनयामासुः । तेषां विमानैरितिसंबंधः ॥ २० ॥ श्रीर्महालक्ष्मी रूपिणी प्रत्यक्षरूपधारिणी नूपुरालंकृतं चरणारविंदं क्वणयती शब्दयंती शनैरितस्ततः । पर्यटंतीति यावत् । लीलार्थं गृहीतेनांबुजेन सहिता हरिसद्मनि मुक्तश्चांचल्यलक्षण दोषो यया सा । इतरसद्मसु चांचल्यं न तया कुत्रापि मुक्तामिति भावः । स्फटिकमये कुड्यं संमार्जयतीव लक्ष्यते । कथं भूते कुड्ये । उपेतं मध्ये मध्ये शोधार्थं प्राप्तं हेमपट्टिकारूपं यस्मिंस्तस्मिन् । कीदृशीः श्रीः । यस्या अनुग्रहसंपादनायान्येषां ब्रह्मादीनां यत्ना उपासनादिरूपाः प्रयत्ना भवंति सा श्रीरित्यन्वयः । अयं भावः । हरिसद्मनि लीलांबुजं भ्रामयती शनैश्चरंती श्रीः स्फटिकमये स्वच्छे कुड्ये प्रतिबिंबिता भवति । तदा लोकैस्तत्प्रतिबिंबं दृष्ट्वा श्रीरेव संमार्जनीस्थानीयेनांबुजेन कुड्यं संमार्जयंती शोधयतीत्येवं संलक्ष्यत इति । वस्तुतः संमार्जनाभावादिव शब्दः ॥ २१ ॥ अंग हे देवाः । वचनव्यत्ययः । यद्यस्मिंल्लोके विद्रुममयानि तटानि यासां तास्वमला अमृततुल्या आपो यासु तासु वापीषु सुखावतारकूलासु निजवने कमलवने प्रेष्याभिः परिचारकाभिरन्विता तुलसीभिरीशं स्वपतिमभ्यर्चाति पूजयंती तदा तदुदके प्रतिबिंबितं स्वलक शोभनकुंतलमुन्नसमुत्कृष्टनासिकायुक्तं । सर्वलक्षणोपलक्षकमेतत् । स्ववक्त्रं वीक्ष्य प्रतिबिंबेन बिंबभूतं स्ववक्त्रमपि । तादृशमनुमायति यावत् । इदं मदीयमित्यतिसुंदरं सर्वलक्षणोपेतं वक्त्रं । भगवतोच्छेषितमुच्छिष्टं कृतं । चुंबितामिति यावत् । अहो अहं धन्येत्यमतामंसतालं स्तवेन मेने ॥ २२ ॥ स्वर्गादिवन्न सर्वलोकगम्योऽयं लोक इत्याह ॥ यन्न व्रजंतीति । अत्र रचनानुवादा इति छेदभ्रांतिं परिहरति ॥ अरचनानुवादा इति । अन्यथा तेषां निंदनमत्र क्रियमाणमनुपपन्नं स्यादिति ध्येयं ॥ ततश्चायं श्लोकार्थः ॥ यद्वैकुंठस्थानमघं भिनत्तीत्यघभित्तस्य हरेर्न विद्यते रचनानां जगत्सृष्ट्यादिकर्मणामनुवादो येषां ते तथा । न केवलमेतावत् । किंतु अन्यविषया मतिघ्नीर्यथार्थज्ञाननाशिनीरत एव कुकथारतिवर्णनादिरूपाः कथाः शृण्वंति । तासां कथानामेतत्स्थानप्राप्तिप्रतिबंधकत्वमेव न फलं किंतु तमःप्रापकत्वमपीत्याह ॥ या इति । तु शब्दः श्रवणे आदरसूचकः ।

अन्यथा दूषणार्थं तच्छ्रवणेऽपि तमःप्राप्तिप्रसंगात् । हतभगैर्ज्ञानभक्त्यादिरूपभाग्यशून्यैरात्तं सम्यगुन्नद्धं वीर्यं तमः पातने सामर्थ्यं याभिस्ता आत्तं स्वीकृतं श्रोतृणां वीर्यं पुण्यं याभिरिति वा । अशरणेषु रक्षकरहितेषु । हंतेति खेदे ॥ २३ ॥ वैकुंठलोकप्राप्तिसाधनं धर्मज्ञानादिकमप्यवश्यमनुष्ठेयमित्याशयेन तदभाववतो मानुषान्निंदति ॥ येभ्यर्थितामिति । अत्र नोऽस्माकं देवानामभ्यर्थितां नृगतिं प्रपन्ना इति व्याख्याने देवानां नृगतेरप्राार्थ्यत्वाच्छापादिना कथंचित्प्राप्यत्वाच्चार्थासंभवमालोच्य विवक्षितां योजनां दर्शयति ॥ ये नृगतिमिति । सहधर्मज्ञानं यत्रेत्यस्य तात्पर्यं ॥ ज्ञानादियोग्यामिति । आदि पदेन धर्मग्रहणं । योग्यामित्यनेनोत्पत्तुमर्हतीति शेषं सूचयति । नो इत्यस्य निषेधार्थत्वं न प्रपन्ना इत्यनेनान्वयं चाभिप्रेत्याह ॥ न प्रपन्ना इति । द्वितीयार्धेऽन्वयं दर्शयन्किंचिद्व्याख्याति ॥ ते मोहादिति । मोहादित्यनेन संमोहिता इत्येतन्नाराधनं वितरंतीत्यत्र हेतुतयोत्थामिति सूचयति । वितरंतीत्यस्यार्थः ॥ कुर्वंतीति । नन्वेवं ये नृगतिं न प्रपन्नाः पश्वादयस्ते मोहाद्भगवदाराधनं न कुर्वंतीति पश्वादीनां स्वरूपं कथ्यत इत्येव प्राप्तं न धर्मज्ञानविवार्जितानां मानुषाणां निंदनामित्यतः पूर्वार्धाभिप्रायं दर्शयति ॥ धर्मज्ञानवर्जिता इति । अनेन यत्र नृगतौ सहधर्मज्ञानमुत्पत्तुमर्हति तां तत्त्वज्ञानादियोग्यां नृगतिं ये नो प्रपन्ना न प्राप्ता इति विशिष्टनिषेधस्य विशेषेण निषेधे पर्यवसानेन लब्धार्थो दर्शित इति ज्ञातव्यं । मानुषा एव न भवंतीत्यनेन च शब्दोऽवधारणार्थः । नृगतिं नो प्रपन्ना इत्यस्यावृत्तिरिति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ ये पुरुषाः सधर्मं धर्मेण सह वर्तमानं तत्त्वविषयं ज्ञानं यत्र नृगतावुत्पत्तुमर्हति तां साधुभिरप्यर्थितामपि नृगतिं तत्त्वज्ञानादियोग्यां । नृगतिमिति यावत् । नो प्रपन्नाः । नृगतिं प्राप्यापि तत्त्वज्ञानादिवार्जिता इति यावत् । ते नृगतिं नो प्रपन्नाः। च शब्दोऽवधारणे। मानुषा एव न भवंतीत्यर्थः। तेषां मानुषजन्म व्यर्थं भवतीति भावः । कुत एव नृगतिं प्राप्ता अपि ज्ञानादिवार्जिता भवंतीत्यतोऽत्र हेतुं वदन् उक्तमेव विशदयति ॥ नाराधनमिति । ते नृगतिं प्रपन्ना यतोऽमुष्य भगवतो विततया मायया बंधकशक्त्या संमोहिता अतो भगवत आराधनं तत्त्वज्ञानपूर्वकं स्वाविहितभगवदर्चनरूपं कर्म न वितरंति न कुर्वंति तत्त्वज्ञानादिवर्जिता भवंतीत्यर्थः ॥ २४ ॥ नन्वेतादृशा न व्रजंति चेत्कीदृशास्तं व्रजंतीत्यपेक्षायामाह ॥ यत्रेति । अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या निरंतरसेवया दूरीकृतो यमो येषां ते तथा । अत

एव सर्वैः स्पृहणीयशीलाः सुयशसः पुण्यकीर्तेर्भर्तुः स्वामिनो हरेः कथने योऽनुरागस्तेनोत्पन्नं यद्वैक्लव्यं पारवश्यं तेन जाता या बाष्पकलाऽऽनंदाश्रुधारा तया पुलकीकृतानि रोमांचितान्यंगानि येषां ते तथोक्ताः । न उपरि विद्यमानं यत्र यत्स्थानं व्रजंति तादिति पूर्वोत्तरेण वा संबंधः ॥ २५ ॥ प्रकृतमनुसरति ॥ तादिति । अथो गमनानंतरं मुनयः सनकादयस्तद्वैकुंठाख्यं स्थानं योगमायया बलेनोपासनादिजनितज्ञानसामर्थ्येनोपेत्य परां मुदमवापुः । वैकुंठस्य मोदजनकत्वमुपपादयितुं ताद्विश्वगुर्वधिकृतमित्यादीनि विशेषणानि । स चासौ विश्वगुरुश्च तेनाधिकृतं पालितं दिव्यं लोकाविलक्षणं । विचित्राणि नानावर्णानि विबुधाग्र्याणां देवश्रेष्ठानां विमानानि शोचयति दीपयतीति विचित्रविबुधाग्र्यविमानशोचिः । शुचि दीप्ताविति धातोः । अपूर्वं पुनः पुनर्दर्शनेऽपि पूर्वादृष्टमिव स्थितं । तस्मिन्वैकुंठे षट् कक्षाः प्राकारद्वाराणि । असज्जमानास्तत्रानिवार्यमाणा देवौ द्वारपालौ । अचक्षतापश्यंतः । परार्ध्यैः केयूरादिभिर्विटंकोऽलंकृतो वेषो ययोस्तौ ॥ २७ ॥ तावेव वर्णयंति ॥ मत्तेति । मत्ता द्विरेफा भ्रमरा यस्यां तया वनमालिकया निवीतौ परिष्कृतौ । कथं भूतया । असितानां नीलानां चतुष्टयस्य मध्ये उरसि विन्यस्तया । अत्र वत्क्रास्थितभ्रुवेत्यस्य विवक्षितमर्थं वदन् अन्वयं दर्शयति ॥ वत्क्रस्थयेति । तथा च कुटिलया वक्रया वत्क्रस्थितभ्रुवा सह स्फुटं यथा स्यात्तथा निर्गतेन रक्तेक्षणेन रक्तांतनिरीक्षणेन । वत्क्रभ्रूसहितरक्तनिरीक्षणयुक्तवत्क्रेणेति यावत् । अन्यथा वत्क्रेत्येस्य वैयर्थ्यप्रसंगात् । मनागीषद्रभसं कोपाटोपं दधानौ तथाऽनुमीयमानाविति मूलयोजना द्रष्टव्या । वत्क्रभ्रूरक्तनिरीक्षणयुक्तमुखत्वस्य च कोपाविना भूतत्वादिति भावः ॥ २८ ॥ एतयोर्मिषतोः पश्यतोः सतोर्द्वारि । सप्तमीयं । द्वारि तावत्पृष्ट्वा । अनादृत्येति यावत् । विविशुः । कथं । या आरपुटवज्रकपाटिका आरेण पित्तलेन सुवर्णेन वाऽलंकृतं पुटमुपरितनभागो यासां तास्तथोक्ताः । आरपुटा वज्रशिलामयाः कपाटा यासां तास्तथा ताः पूर्वाः षट् द्वारः । यथाऽपृष्ट्वेव विविशुस्तथैव । अप्रश्ने हेतुकथनाय सर्वत्र ते ह्यविषया इत्यादीनि विशेषणानि । हि यस्माद्ये सर्वत्राविहता अविचारिता अत एव विगताभिशंकाश्चरंति । अत्रापि हेतुः स्वस्य स्वतंत्रस्य परमात्मनो दृष्ट्या ज्ञानेनाविषया अविद्यमानविषयाभिलापा यत इति मुनय इत्यन्वयः ॥ २९ ॥ वाता वायुरेव रशना वस्त्रं येषां ते तथा तान् । नग्नानिति यावत् । वस्तुतो वृद्धान्दशार्धवयसः

पंचवर्षान्कुमारांस्तथा प्रतीयमानान्विदितं परमात्मतत्त्वं यैस्ते तथा तान् । वैत्रेण दंडविशेषेण । च शब्दाद्वाचेत्यपि ग्राह्यं । अस्खलयतां प्रवेशप्रतिरोधं चक्रतुः । अतदर्हणान् स्खलनायोग्यान् । तेजस्तेषां प्रभावं विहस्यागणय्य । अहो अत्राप्येतेषां धाष्टर्यमित्युपहासं कृत्वेति वा । ननु भगवतो भक्तवत्सलत्वात्तत्प्रवेश इष्टोऽतः कथं तद्भृत्यावेतौ भगवद्भक्तानां प्रवेशप्रतिविरोधं चक्रतुरित्यत उक्तं ॥ भगवादिति । भगवतः प्रातिकूलं विरुद्धं शीलं स्वभावो ययोस्तौ तथा । अत्र जयविजययोः शील शब्देन भगवत्प्रातिकूल्यं स्वभाव इति प्रतीयते । न चैतत्संभवति । तयोर्भक्तत्वात् । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेन दर्शयति ॥ जयस्येति । कदाचित्प्रातिकूल्यं चेति संबंधः । सर्वदा भगवदनुकूलशीलावेव जयविजयौ यत्प्रातिकूल्यं कदाचिदनयोर्भवति तदपि ब्रह्मशापनिमित्तं कृष्णावतारसमाप्तिपर्यंतमेव नोत्तरत्रातोऽत्र शील शब्दो न स्वभावार्थः किंतु गौणवृत्त्या बहुकालावस्थायित्वार्थक इति भावः ॥ ३० ॥ सुष्ट्वर्हत्तमाः पूज्यतमा अपि । निषेधानर्हा अपीति यावत् । अनिमिषेषु देवेषु मिषत्सु पश्यत्सु हरेः प्रतिहारपाभ्यां द्वारपालपतिभ्यां ताभ्यां जयविजयाभ्यां प्रतिषिध्यमाना वार्यमाणास्ते मुनयः सुहृत्तमस्य हरेर्दिदृक्षितस्य दर्शनेच्छाया भंगे विघ्ने सतीषत्कामानुजेनाल्पक्रोधेन सहसाऽकस्मादेवोपप्लुतान्यतिशयेन क्षुभितान्यक्षीणि येषां ते तथाविधा ऊचुरित्यर्थः ॥ ३१ ॥ किमूचुरित्यतस्तेषां वचनमेव दर्शयति ॥ को वा इहेत्यादिश्लोकत्रयेण ॥ अत्र कयोश्चित्कुहकयोरात्मवत्तस्मिन् भगवति परिशंकनीयो विषमस्वभावः क इत्यन्यथाप्रतीतिवारणाय द्वितीयार्धस्य विवक्षितमर्थं दर्शयति ॥ युवयोरिति । तथा च कुहकयोरित्यत्र जयविजयावेव विवक्षिताविति भावः । आत्मवदित्येतदपि स्वात्मनोरिवेति व्याख्येयमित्याशयेनोक्तं ॥ युवयोर्यथेति । विषमस्वभाव इत्यस्यार्थः ॥ विरुद्धस्वभावत्वमिति । भगवद्विषय इत्यनेन तस्मिन्निति विषयसप्तमीति सूचयति । इहेत्यस्यावृत्तिमभिप्रेत्योक्तं ॥ इहेति । अस्मास्वित्यर्थः । परिशंकनीय इत्यस्य क इत्यनेनान्वय इत्याह ॥ शंकनीय कः इति । न कोऽपीत्याक्षेपार्थत्वं क इत्यस्येत्याशयेन तत्फलं दर्शयति ॥ तस्मादिति । निषेधोऽस्मत्प्रवेशप्रतिषेधः ॥ ततश्चायं श्लोकार्थः ॥ उच्चैरुत्कृष्टतया भगवतः परिचर्यया तद्धर्मिणां भगवद्धर्मवतां सतामपि परिचर्ययेह वैकुंठे एत्य प्राप्य स्थितयोः कुहकयोर्मिथ्याज्ञानिनोर्युवयोरयं विषमस्वभावः । ब्रह्मण्यदेवस्य भगवतः स्वभावेन विरुद्धस्वभावो ब्राह्मणप्रवेशप्रति-

षेधरूपः को वा कुत्सित एव । युवयोरयोग्य इत्यर्थः । युष्मासु भगवद्विषये विषमस्वभावशंकयाऽयं प्रतिषेधो द्वारपालकयोरावयोर्गुण एवेति शंकायामाहुः ॥ तस्मिन्निति । भगवति विषये वां कुहकयोः कुहकाभ्यां युवाभ्यामात्मवत्स्वात्मनोरिव यथा स्वात्मनोरिदानीं भगवत्स्वभावविरुद्धस्वभावत्वं तथेहास्मास्वपि परिशंकनीयः सम्यक् शंकितुं योग्यो विषमस्वभावो भगवत्प्रातिकूल्याचरणरूपः को वा न कोऽपि तस्मादस्मत्प्रतिषेधो व्यर्थ इत्यर्थः । ननु युष्मासु भगवत्प्रातिकूल्याचरणरूपः स्वभावः कुतो न शंकनीय इत्यत उक्तं ॥ प्रशांतपुरुषे गतविग्रहे वेति । वा शब्दश्च शब्दार्थः । प्रकर्षेण शांते भक्तापराध सहिष्णौ पुरुषे सर्वदेहेषु नियामकतया स्थिते अत एव गत विग्रहे । भक्तैः सह विरोधो यस्य तस्मिन् । लोके ह्यपराधसहिष्णावनुपकारिणि विरोधकर्तरि च पुरुषविषयेऽन्येषां विरुद्धस्वभावो दृष्टः । भगवांस्तु न तथा किंतु भक्तापराधसहिष्णुरस्मद्देहनियामकतयोपकार्यत एव भक्तेषु गतविग्रहः । तस्मिन्विषये तद्भक्ता वयं कथं विषमस्वभावा भवेम । अस्माकं भक्तत्वं चात्रागमनादेव भवद्भ्यां निश्चितमिति भावः ॥ ३२ ॥ कुहकयोरित्युक्तं मिथ्याज्ञानित्वं तयोरुपपादयंति ॥ न ह्यंतरमिति । अत्र समस्तकुक्षौ भगवतीति सामानाधिकरण्येनाभेदप्रतीतिवारणायाह ॥ समस्तकुक्षाविति । अधिकरणसप्तमीबलात्स्थित इत्येतल्लभ्यत इति भावः । अंतर शब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ न हि भेद इति । न हीत्यस्यानुवादः । अंतर शब्दस्य भेदवाचकत्वे वाक्यार्थः शिष्टतरो भवतीति सूचनाय । इहेत्यस्य भगवत्परत्वे यत्रेत्यस्य वैयर्थ्यमित्यालोच्य विवक्षितमर्थमाह ॥ अस्मिँल्लोक इति । अधिकरणसप्तमीबललब्धमर्थं दर्शयन् आत्मपदद्वयं जीवपरमिति प्रतीतिवारणाय वाक्यं योजयति ॥ अंतःस्थेति । आत्मानमित्यस्यार्थः ॥ भगवद्रूपमिति । आत्मनीत्यस्य तात्पर्यं ॥ बाहिस्थैक्येनेति । बाहिस्थैक्येनेति तात्पर्यं कस्मादवगतमित्यतो दृष्टांतबलादेवेत्याशयेन नभो नभसीवेति दृष्टांतानुवादः। यत्रेत्युक्तत्वात्तत्रेत्यध्याहृतं । उदर इत्यतः प्राक् प्रतीत्यध्याहारमभिप्रेत्याह ॥ प्रत्युदरभेदानिमित्तमिति । इन् प्रत्ययार्थप्रदर्शनाय निमित्तमित्युक्तं । युवयोरिति षष्ठी कर्तरीत्याशयेन युवाभ्यामित्युक्तं । किं शब्दोऽत्र निंदार्थक इति सूचनाय व्युत्पादितं किमित्यन्वयो दर्शितः । अस्येत्यस्य विवक्षितमर्थमाह ॥ सर्वांतर्यामित्वेनेति । अनेन समस्तकुक्षावित्येतदभयत्वसूचनायोक्तमिति ज्ञापयति । भयव्युत्पादितमित्यस्याभिप्रायमाह ॥ भयमस्तीति । भावो

भावज्ञानमिति यावत् । आवयोरेवं भावोऽस्तीति कथं भवद्भिरवगतमित्यतस्तदभिप्रेतं ज्ञापकमाह ॥ अन्यथेति । तथा च निवारणान्यथाऽनुपपत्तेरेवैतज्ज्ञापिकेति भावः । अस्त्वेवं विधं ज्ञानं ततः किमित्यतस्तज्जन्यमनिष्टं प्रमाणेनैवाह ॥ सर्वोदरगतमिति । भयमैहिकं मृतानां चेत्यन्वयः ॥ ततश्चायं श्लोकार्थः ॥ समस्तकुक्षौ सर्वांतरनियामकतया स्थिते भगवत्यंतरं भेदो न हि नास्तीति प्रमाणप्रसिद्धं । तस्मात्तस्य कुतोऽपि । न भयमस्तीति शेषः । किं तत्प्रमाणमित्यतस्तद्दर्शयंत आहुः । यत्र भगवतीहास्मिंल्लोके स्थितमात्मानं भगवद्रूपमात्मानि बाहिः स्थिते भगवद्रूपे । तदैक्येनेति यावत् । नभो घटाद्यवच्छिन्नमाकाशं बाहिः स्थिते नभसीव धीराः स्थानभेदयुक्तेनाभासत्वं जानंतः पश्यंति तत्र सुरलिंगिनोः सुरचिन्हधारिभ्यां युवयोर्युवाभ्यामुदरभेदिभयं । अत्रादौ प्रतीत्यध्याहार्यं । उद्गता अरा दोषा यस्मात्तदुदरं ब्रह्म भेदो भेददर्शनस्य निमित्ततयाऽस्तीति भेदिप्रत्युदरभेददर्शननिमित्तकमित्यर्थः । वैकुंठांतर्गतभगवद्रूपं प्रतिस्थितं । तदाभिमुख्येन स्थितमिति यावत् । यदस्मदंतर्गतरूपं रागादिदोषरहितं ब्रह्म तद्भेदबुद्ध्याऽस्मदाद्यंतर्गतभगवद्रूपेभ्योऽस्य सर्वांतर्नियामकतया भयशून्यस्य वैकुंठांतर्गतस्य भगवद्रूपस्य भयं व्युत्पादितं भावितं किमहो पापिष्ठौ भवंतावित्याशयः । हीत्यनेन तथा ज्ञानेन महाननर्थः प्रमाणप्रसिद्धोऽस्तीति सूचयति । यत एवानर्थकारि ज्ञानं युवयोरतः पापीयसो लोकान्व्रजतमित्युत्तरेणान्वयः ॥ २३ ॥ एवमपराधमुत्पाद्य तद्योग्यं दंडं कुर्वंत आहुः ॥ तद्वा अमुष्येति । अत्र यत्रेत्यस्य येषु भूरादिलोकेष्विमे त्रयो रिपवस्तांल्लोकानित्यन्यथाप्रतीतिवारणायार्थमाह ॥ त्रयो रिपव इति । यत्रेत्यस्यार्थः ॥ देहत्रय इति । अनेन लोक शब्दो देहपरो न प्रसिद्धभूरादिपर इति दर्शयति । देहत्रयस्यानिष्टत्वोपपादनाय त्रयो रिपवो हरेर्द्वेषिणो भवंतीत्युक्तं । अत्र जयविजययोरैक्यविवक्षया तदाविष्टयोरसुरयोर्द्वित्वविवक्षया त्रय इत्युक्तमिति ज्ञातव्यं । द्वौ स्वभावतोऽरी तत्संसर्गाज्जयविजययोरप्यरित्वमिति सूचनायापि शब्दः ॥ ततश्चायमर्थः ॥ मंदधीभ्यां युवाभ्यां परमस्य विकुंठभर्तुरमुष्य सर्वजगदंतर्नियामकरूपस्य सकाशात्तद्भेददर्शनं कर्तुं न युक्तं । वै प्रमाणप्रसिद्धमेतत् । इति धीमहि चिंतयामः । तद्युवाभ्यां कृतमतोंऽतरभावदृष्ट्यांऽतरं हरौ भेदस्तस्य भावदृष्टिः सद्भावदर्शनं तया तज्जनितपापेनेतो वैकुंठलोकात्पापीयसोऽतिपापांल्लोकान्देहान्व्रजत यात । यत्र देहत्रये इमे प्रसिद्धा अस्य हरेस्त्रयोऽपि रिपवोऽद्वेषिणो भविष्यंति

तांल्लोकानित्यन्वयः । अत्र द्वौ स्वभावतोऽरी एकत्वेन विवक्षितयोर्जयविजययोस्तु तत्संसर्गादारित्वमतो यौ तौ तवारीह तयोः प्रविष्टाविति भारततात्पर्यनिर्णयविरोधो नेति ज्ञातव्यं । स्वाभाविकारित्वविवक्षया तात्पर्यनिर्णयः प्रवृत्तः । अतो न विरोधः । अत्र देहानां यद्यपि षट्त्व तथाऽपि द्वयोर्द्वयोरैक्यविवक्षया त्रित्वमुक्तमिति ज्ञातव्यं ॥ ३४ ॥ शापनिमित्तमेव तयोर्हरिप्रातिकूल्याचरणमिति ज्ञानाय तयोः सत्स्वभावं दर्शयति ॥ तेषामिति । तावुभौ हरेरनुचरौ तेषामीरितं भाषितं घोरं यत्तमस्त्रपूगैः प्रत्यस्त्रसमूहैरनिवारणं न विद्यते निवारणं यस्य तं ब्रह्मदंडं ब्राह्मणशापमवधार्य निश्चित्य सद्यस्तदुत्तरक्षण एवोरु बहु बिभ्यतो बिभीतः । अनंतरमतिकातरेणातिकातर्येणातिशयितभयेन तत्पादग्रहौ तेषां पादग्रहणं कुर्वंतौ संतावपततां । दंडवदिति शेषः । ब्राह्मणेभ्य उरु बिभ्यतो हरेरनुचराविति वा ॥ ३५ ॥ नमस्कारानंतरं तयोः पश्चात्तापेन प्रार्थनाप्रकारं दर्शयति ॥ भूयादिति । यो दंडोऽशेषसुरहेलनमपि हरेतेति कथमुच्यतेऽस्य दंडस्यास्माभिस्तदर्थप्रयोगादित्यतोऽस्याभिप्रायमाह ॥ सुरहेलनस्यापीति । दंडः प्रायश्चित्तरूपो भवति । अतो हरेतेत्याशय इत्यर्थः । तदर्थमप्ययं दंडो भवतीत्यभिप्रायो भवतां भवत्वित्याशयः ॥ ततश्चायं मूलार्थः ॥ भवद्भिः पूज्यैर्युष्माभिर्यो दंडो नौ अकारि स न केवलं युष्मदवज्ञानजन्यं पापं हरति । किं त्वशेषं यथा स्यात्तथा ब्रह्मादिदेवानामप्यस्माभिरेवमेव पूर्वमवज्ञाकृताजन्यमपि पापं हरेत हरेत् । तस्यापि पापस्यायं प्रायश्चित्तरूपो भवतीति भवतामभिप्रायो भवत्वित्याशयः । कुतः । हि यस्मादघादस्मत्कृतापराधाद्भूयान् अस्माभिरल्प एवापराधः कृतो भवद्भिस्त्वसुराविष्टदेहत्रयप्राप्तिरूपो दंडो भूयान्कृतोऽतः स पूर्वतनदेवावज्ञाजनितपापस्यापि प्रायश्चित्तरूपो भवत्वित्यनुग्रहः कर्तव्य इत्याशयः । अन्यदपि स्वस्वाभीष्टं प्रार्थयंतावाहतुः ॥ मा व इति । वो युष्माकं सकाशात् । युष्मदनुग्रहादिति यावत् । अनुतापकलयाऽस्माकं पश्चात्तापलेशेन पुनः पूर्ववद्भगवत्स्मृतिघ्नो मोहो मिथ्याज्ञानमिह वैकुंठस्थितयोर्नौ आवयोर्मा भवेन्मा भूत् । कथं भूतयोः । अधोऽधोऽत्यंतनिकृष्टदेहान्व्रजतोर्गच्छतोः । अत्राधोऽधो व्रजतोः कथमिह वैकुंठस्थितत्वमुच्यमानं युज्यते विरोधादित्यतोऽत्र विवक्षितं तात्पर्यमाह ॥ अत्र स्थितयोरिति । इहेत्यस्यार्थः ॥ अत्रेति । स्थितयोरित्यधिकरणसप्तम्या लब्धार्थप्रदर्शनं । पुनः पूर्ववदिति प्रसक्तिप्रदर्शनं । अंशिनोरित्येतत्तु शब्दार्थप्रदर्शनं । तथा चांशेनाधोऽधो व्रजतोरप्यावयोरिह वैकुंठस्थितयोरं-

शिनोर्मोहो मा भूदिति तात्पर्यमतो न विरोध इत्यर्थः ॥ ३६ ॥ तदेव तस्मिन्नेव क्षणे । स्वानामिति बहुवचनं जात्यभिप्रायेण । स्वकीययोरित्यर्थः । सत्सु सनकादिष्वतिक्रममपराधमार्याणां ज्ञानिनां हृद्यो हृदि भवः । सनकादिध्येय इत्यर्थः । यत्र ते स्थितास्तस्मिन्देशे । तद्देशमुद्दिश्येति यावत् । अन्वेषणीयचरणश्चलन्नित्यनेन भगवतो ब्राह्मणेषु भक्तिं दर्शयति ॥ सहश्रीरिति । सकलत्रेणैव गृहस्थेनातिथ्याभ्यागमनादिकं कार्यमिति दर्शयितुं श्रीनिरीक्षणेनापि ते धन्या भवंत्वित्याशयेन वा तथोक्तं । तु शब्द आगमने उक्तविशेषसूचकः ॥ ३० ॥ तत्रत्यैः स्वपुंभिः स्वभृत्यैः प्रतिहृतमभ्यर्थितमौपयिकमुपायनादिसत्कारद्रव्यं यस्मै स तथोक्तः । तं प्रतिहृतमानीतमौपयिकं गमनोपयुक्तं छत्रचामरपादुकादि यस्येति वा । अचक्षतापश्यन् । कथं भूतं । अंतः स्वसमाधिगम्यो यस्तमेव बहिरक्षविषयं चक्षुर्विषयं संतं । पुनः कथं भूतं । हंसवद्धवलश्रीर्ययोरुभयतश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलं चंचलं शुभ्रं धवलमातपत्रं छत्रं तदेव शशी चंद्रमास्तस्य केसरेभ्यो गलंति शीकरांबूनि कणभूतामृतानि यस्मिन्स तथोक्तस्तं । अत्र प्रकृतोपयुक्तं केसर शब्दार्थं दर्शयति ॥ केसरा रश्मय इति । यथा कौस्तुभादिकं ब्रह्मादिरूपं तथा छत्रमपि चंद्रमसो रूपं । तथा च तस्य रश्मिभ्यो गलंति शीकरांबूनीति युक्तमिति ध्येयं ॥ ३८ ॥ पुनस्तमेव विशिनष्टि ॥ कृत्स्नप्रसादेत्यादिचतुर्भिः । कृत्स्नप्रसादेन पूर्णप्रसादेन सुशोभनं विकसितं मुखं यस्य तं । स्पृहणीयानां गुणानां धाम स्थानं । स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशंतं सुखयंतं श्यामे इंद्रनीलकांतिमति । पृथौ विस्तीर्णे उरसि शोभितया । उरः कांत्येति शेषः । सग्रीवस्थं मणिं कौस्तुभाख्यं । कथं भूतं । आत्मधिष्ण्यमात्मन आवासस्थानं । सुभगयंतमिव सुभगयन्कश्चित्तद्वत्स्थितं शोभनकांतियुक्तं । कुर्वंतमिति यावत् । अत्र श्लोकचतुष्टये विद्यमानानां द्वितीयांतानां पदानामचक्षतेति पूर्वेण वा नेमुरित्युत्तरेण वाऽन्वयः । अत्रात्मधिष्ण्यमित्यस्यात्मनो ब्रह्मण आवासस्थानमित्यभिप्रेत्य तत्र प्रमाणसंवादं दर्शयति ॥ कौस्तुभ इति । रूपं प्रतिमा । प्राणो मुख्यप्राणश्चूडामणिश्चूडामणिस्थः ॥ ३९ ॥ पतिमंशुकं वस्त्रं यस्मिंस्तं पृथुनितंबं विस्तीर्णकटितटमधि आधिकृत्य । तत्परित इति यावत् । स्फुरंत्या कांच्याऽलिभिर्भ्रमरैर्विरुतया शब्दितया वनमालया च शोभमानं वल्गुषु सुंदरेषु प्रकोष्ठेषु मणिबंधस्थानेषु विद्यमाना वलयाः कंकणा यस्य तं । विनतासुतो

गरुडस्तदंसे विन्यस्तवामहस्तं । इतरेण दक्षिणहस्तेन धुनानं कंपयंतं ॥ ४० ॥ विद्युती क्षिपती ये मकराकारे कुंडले तयोर्मंडनार्हेऽलंकारयोग्ये गंडस्थले यस्मिंस्तत्तथा । तच्च तदुन्नसमुन्नतनासिकं मुखं च यस्य तथा तं । प्रशस्ता मणयोऽस्य संतीति मणिमत्तादृशं किरीटं यस्य स तथा तं । दोर्दंडानां खंडः समूहस्तस्य विवरे मध्ये चरता वर्तमानेन परार्ध्यहारेणानर्घ्यमुक्तामालया कंधरगतेन कंधरायां ग्रीवायां स्थितेन । ह्रस्वश्छांदसः । कौस्तुभेन च ॥ ४१ ॥ अत्र मदीयस्थाने उरसि उपस्पृष्टं मत्समीपे स्थितमिति हेतोः । च शब्दोऽप्यर्थे । इंदिराया अपि उत्स्मितमुत्कृष्टस्मयो जात इति । स्वानां धिया विरचितं स्मृतं । आस्मृतमिति पाठे हारेण कौस्तुभेन चेंदिराया अप्युप समीपे स्पृष्टं संबध्य स्थितमिति आ सम्यक् स्मृतं भक्तैर्ध्यातं । अहो हारकौस्तुभयोर्भाग्यं याभ्यां भगवदंगे उत्तमाया अपिरमायाः समीपे स्थीयत इति । ध्यातमिति यावत् । उत्स्मृतमिति पाठेऽप्ययमेवार्थः । आस्मृतमिति पाठे स्वानां धिया विरचितं स्मृतमिति पृथग्विशेषणं । विरचित शब्दस्य कृतौ रूढत्वात्कथं स्मृतमिति व्याख्यानमित्यतो रचन शब्दस्य स्मरणेऽपि विद्वद्वृद्धिं प्रमाणेनैव दर्शयति ॥ आविद्यमानकरणमिति । उभयोरपि रचन शब्दार्थत्वेऽत्र स्मृतिरेव ग्राह्येति कुत इत्यत उक्तं ॥ पूर्वसिद्धेष्विति । तु शब्दोऽवधारणे । स्मृतिरेव रचन शब्दार्थतया । ग्राह्येति शेषः । प्रकृते च भगवदंगं पूर्वं सिद्धमतस्ताद्धिया विरचितमित्यस्य स्वबुद्ध्यनुसारेण स्मृतमित्येव व्याख्येयामिति भावः । बहुसौभगाढ्यमपरिमितैश्वर्यादिगुणपूर्णं । न विशेषेण तृप्ता दृशो नेत्राणि येषां ते तथा । कैः शिरोभिर्मुदा नेमुः ॥ ४२ ॥ तेषु भगवदंगोपांगप्रदेशे दंडवत्पातितेषु तत्रत्यो वायुस्तेषां हर्षं चकारेत्याह ॥ तस्येति । पदयोरर्पितानि यान्यरविंदानि तेषां किंजल्कैः केसरैर्मिश्रा या तत्रैवार्पिता तुलसी तस्या मकरंदेन स्वादुरसमिश्रगंधेन युक्तो वायुः स्वविवरेण नासिकारंध्रेणांतर्गतः प्रविष्टस्तेषां सनकादीनां चित्ततन्वोः क्षोभं कंचन विकारं चित्तेऽतिहर्षं तनौ रोमांचं चकारेत्यर्थः । कथं भूतानां । अक्षरजुषामपि । अत्राभिप्रेतमर्थं दर्शयति ॥ अक्षरजुषामपीति । तथा चाक्षर शब्देन प्रकृतं भगवद्रूपमेव ग्राह्यं । तज्जुषां तत्सेवाभ्यासिनामपीत्यर्थः । धातु बलात्सेवामात्रलाभेऽपि अपि शब्दबलादभ्यासोऽपि सूचित इति ज्ञातव्यं । अनेन भगवच्चरणार्पितारविंदादिकिंजल्कसामर्थ्यमेतादृशमिति तन्माहात्म्यातिशयो दर्शित इति ज्ञातव्यं ॥ ४३ ॥ तेषां हर्षकारितं संभ्रममाह ॥

ते वा इति द्वाभ्यां । ते वै किल । वदनमेव सितपद्मकोशं कृष्णकमलकुड्मलं । सुंदरतराधरश्च कुंदपुष्पवद्धवलो हासश्च यस्मिन्स तथा तं । उद्वीक्ष्योर्ध्वं दृष्ट्वा स्वेषां ह्रस्वत्वान्मुखान्युन्नमय्य । दृष्ट्वेति यावत् । लब्धाशिषः प्राप्तमनोरथाः संतो नख एवारुणयस्तेषां श्रयणमाश्रयभूतमंघ्रिद्वंद्वं पुनरवेक्ष्याधो वीक्ष्य । मुखमारभ्य पादपर्यंतमवलोक्येति यावत् । निदिध्युर्नितरां हृदि स्थापितवंतः ॥ ४४ ॥ योगमार्गैर्गतिं मोक्षं मृगयतां पुंसां ध्यानास्पदं ध्यानस्य विषयभूतं बहुमतमत्यादरास्पदं पूर्णत्वेन मतं ज्ञात्वेति वा । नयनान्यभिरामयति सुखयतीति नयनाभिरामं तद्वपुर्दर्शयानं तं दर्शयंतं । अनन्यासिद्धैरन्येष्वसिद्धैरसाधारणैरौत्पत्तिकैः स्वाभाविकैरष्टभागैर्युतं समगृणन्सम्यगस्तुवन् ॥ ४५ ॥ हे अनंत । यस्त्वं हृदिगतोऽपि दुरात्मनां दुष्टमनसामंताहितोऽसि स नोऽस्माकमद्य नयनमूलं दृष्टिपथमोपि । कथमित्यत उक्तं ॥ राद्धमिति । अघटितघटकसामर्थ्यसिद्धिपूर्णो यत इत्यर्थः । कदाऽप्येवमहं भवाद्भिर्नानुभूतः किमित्यतोऽतरेवानुभूत इत्याहुः ॥ यर्ह्येवेति । एव शब्दोऽप्यर्थः । यद्यपि भवत उद्भवो जननं यस्य तेन नः पित्रा नाम्ना ब्रह्मणा यर्हि येन लक्षणानुवर्णितरहो यथावदुपादिष्टरहस्यो हरिरस्मत्कर्णविवरेण नो हृदयगुहां गतोऽभूदंतरेव ध्यातस्तथाऽप्यद्य बहिरपि नयनमूलं गतः । अहो अस्मद्भाग्यमिति भावः ॥ ४६ ॥ ननु भवत्पितरोपदिष्टः परमात्मा नाहं तस्याव्यक्तत्वात् । मम तु भवाद्भिर्दृष्टत्वादित्यतस्तदेव त्वं तल्लक्षणत्वेनास्मत्प्रत्यभिज्ञाविषयत्वादित्याहुः ॥ तं त्वामिति । भो भगवन् । त्वा त्वामस्मद्दृष्टिविषयं परमात्मनस्तत्त्वं लक्षणं यस्यास्मत्पित्रोपदिष्टस्य तमेव विदाम विद्मः प्रत्यभिजानीमः । किं तल्लक्षणं भवत्पित्रा चोपादिष्टं यत्त्वत्प्रत्यभिज्ञया भवतामपि परमात्मबुद्धिरित्यतो लक्षणद्वयमाहुः ॥ सत्त्वेनेति । संप्रति स्थितिकाले सत्त्वेन गुणेन । तदभिवर्धनेनेति यावत् । एषां लोकानां रतिं सुखं रचयंतमुत्पादयंतं । अनेन पालकत्वं विष्णुलक्षणमुक्तमिति मंतव्यं । यद्यस्तेऽनुभावः सामर्थ्यविशेषः । कृपेति यावत् । तेन विदितैर्लब्धैर्दृढभक्तिरूपयोगैर्मोक्षोपायैर्विरागा विषयेषु शोभनाध्यासविधुरा अत एवोद्ग्रंथय उन्मीलिताहंकारबंधा मुनयो हृदि विदुर्दृष्टवंतस्तं विद्म इत्यन्वयः । अनेन योगिभिर्दृश्यत्वं लक्षणमुक्तमिति ज्ञातव्यं ॥ ४७ ॥ मुनयः किमितरसाधारणमोक्षादिकमुद्दिश्य हृदि विदुर्नेत्याह ॥ नात्यंतिकामिति । अत्र ये भगवतः कथाया रसज्ञा भगवत्कथाश्रवणादिजनितापरोक्षज्ञानेन स्वरूपसुखानुभववंतस्ते आत्यंतिकं प्रसादमत्यर्थं प्रसादं

तदुत्तरभाविनं मोक्षमपि न विगणयंतीत्युक्त्या जीवन्मुक्तानां ब्रह्मदर्शनेन मोक्षात्पूर्वमपि स्वरूपानंदाभिव्यक्तिरूपा मुक्तिरस्तीति प्रतीयते। सा कथं। पुनः श्रवणाद्यनुष्ठानवैयर्थ्यप्रसंगादतोऽत्राभिमतानंदाभिव्यक्तिं प्रमाणेनैव दर्शयति ॥ भक्तिज्ञानेति। भक्तिज्ञानपरिपाकात्। तत्साध्यादात्यंतिकप्रसादात्पूर्वमपि हरिदर्शनेन किंचिन्मुच्यते प्रायः स्वरूपानंदाभिव्यक्तिमान् भवतीत्यर्थः। तर्हि पुनः श्रवणादिवैयर्थ्यमित्यत उक्तं ॥ तत्रेति। तत्र तदा पूर्णतां। स्वयोग्यतापेक्षया। तदर्थं पुनः श्रवणादिकमिति भावः। नन्वेवं कथमेतेषामात्यंतिकप्रसादाविगणनं मूलोक्तं संभवति। स्वयोग्यानंदपूर्त्यर्थं तदपेक्षया अवश्यकत्वादित्यतोऽत्राभिप्रेतमर्थं दर्शयति ॥ अत इति। यत एवं ज्ञानिनां ब्रह्मदर्शनमात्रेण प्रायः स्वरूपानंदाभिव्यक्तिः प्रमाणसिद्धाऽतः साऽनपेक्षाणामुत्तमाधिकारिणां मोक्षेच्छुभ्योऽधमाधिकारिभ्यः। तदपेक्षयेति यावत्। आनंदोद्रेक उत्कृष्टानंदाभिव्यक्तिरूपा भवतीत्यर्थः। अत्रानपेक्षाणामित्युक्त्या स्वयोग्यानंदपूर्त्यपेक्षाऽपि तेषां नास्तीति सूचयति। ततश्च किमित्यत आह ॥ तेषामिति। अनपेक्षाणामुत्तमाधिकारिणामित्यर्थः। परिपाकतः। भक्तिज्ञानयोरिति शेषः। मुक्तिप्राप्तेरधमाधिकारिप्राप्यमुक्त्यपेक्षयाऽप्यधिकमुक्तिप्राप्तेरधमाधिकारिभिः प्राप्तमात्यंतिकप्रसादमपि न विगणयंति। इत्युक्तमिति शेषः। तथा चोत्तमाधिकारिणो ये कथाया रसज्ञा ब्रह्मसाक्षात्कारप्राप्तस्वरूपानंदानुभववंतस्तेऽधमाधिकारिषु जायमानमात्यंतिकप्रसादमपि न विगणयंति। स्वेषामिदानीमेव तन्मोक्षसुखापेक्षयाऽधिकसुखस्य लाभादिति मूलाभिप्राय इति भावः। ब्रह्मदर्शनमात्रेणानपेक्षाणां मोक्षेच्छुमुक्त्यपेक्षयाऽधिकानंदप्राप्तिर्भवतीत्येव कुत इत्यतोऽत्र प्रमाणमाह ॥ मुमुक्षोरिति। केवलो निरपेक्षः सुखी अधिकसुखवान्। अपि शब्देन न केवलं जीवन्मुक्तावित्यस्य लाभात्प्रकृतसिद्धिरिति ज्ञातव्यं ॥ ततश्चायं श्लोकार्थः ॥ हे अंग। ये त्वदंघ्रिरेव शरणमाश्रयो येषां ते तथा। त्वद्भक्ता इति यावत्। कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा। तस्य भगवतः कथाया रसज्ञाः। तच्छ्रवणादिप्राप्तब्रह्मदर्शनाभिव्यक्तकिंचित्स्वरूपसुखानुभववंतः कुशला नीचोच्चविदस्ते उत्तमाधिकारिणस्ते तवाधिकारिषु जायमानमात्यंतिकं भक्तिज्ञानपरि-पाकानंतरभाविनं मोक्षाव्यवहितपूर्वकालीनं प्रसादमपि। तज्जन्यं मोक्षमपीति यावत्। न विगणयंति न बहु मन्यंते स्वेषामिदानीमेव तदपेक्षयाऽधिकसुखप्राप्तेः। ते भ्रुव उन्नयैरुज्जृंभणविशेषैरर्पितं पतनभयं यस्य तदन्यत्स्वर्गादिकं न विगणयंतीति किमु वक्तव्यमिति

॥४८॥ इदानीं त्वत्पार्षदयोः शापप्रदानजनितपापफलं दुःखमस्माकमवश्यं भवत्वित्याशयेन प्रार्थयंते ॥ काममिति । वृजिनैः शापप्रदानजनितैः पापैर्निरयेषु नष्टाः क्लिष्टा अलिवदलिर्यथा कंटकैराविध्यमानोऽपि पुष्पेष्वेव रमंते तद्वच्चेतस्त्वत्पादयोर्विज्ञानगणय्य यदि रमेत । अंघ्रिर्यथा शोभते तथा । तुलसीवदित्यस्य तुलसी यथा त्वत्प्रीत्यैव त्वदंघ्रिभ्यां शोभेत शोभेरन्निति भावः । अत्र पापफलदुःखभोगः कथं प्रार्थ्यते दुःखस्यानिष्टत्वेन द्वेष्यत्वात् । तत्र च मन आदीनां भगवद्विषयकत्वरूपभक्तिवर्धनं च किमर्थं प्रार्थ्यत इत्यतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ यावदिति । तु शब्देन दुःखे कायक्लेशादिरूपतया जन्यत्वं वोत्तमापराधादिरूपपापजन्यत्वं वा सूचितमिति ज्ञातव्यं । सुखोद्रेकस्तेषां । भवतीति शेषः । चेतोऽलिवदित्यादेस्तात्पर्यं ॥ तत्र चोदिति । तथा च हरिभक्त्यविलोपेन दुःखभागे आनंदोद्रेकरूपफलसद्भावादेवं प्रार्थनं युक्तमिति भावः ॥ ४९ ॥ एतद्रूपदर्शनेन वयं कृतार्था इत्याहुः ॥ प्रादुश्चकर्थेति । भो पुरुहूत पुरु बहु हुतं यशो यस्येत्यर्थः । यदिदं रूपं प्रादुश्चकर्थ प्रकटितवानसि । दृशो नेत्राण्यनात्मनामजितेंद्रियाणां दुरुदयो दुःप्रकाश इदं नमः प्रत्युपकाराय विधेम कुर्मः । यः उत्प्रतीत उत्कृष्टतयेदानीं साक्षात्कृतः ॥ ५० ॥ इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ३–१६ ॥ ॥

॥ हरिः ॐ ॥ योगो भक्तियोगः स एव धर्मो येषामस्तीति योगधर्मिणस्तेषां ॥ १ ॥ भक्तपराधीनोऽहमिति दर्शयतो हरेः सनकादीन्प्रति स्नेहपूर्वकवचप्रकारं दर्शयति ॥ एतावित्येकादशभिः । मद्यं मम कदर्थीकृत्य अविगणय्य । तुच्छीकृत्येति यावत् । मम ब्राह्मणभक्तत्वेन तदपराधाचरणस्य ममानिष्टत्वात् । बहु यथा स्यात्तथाऽतिक्रममपराधमधत्तामकुर्वतां । यद्यस्मात्तस्माद्यस्त्वेतयोरित्युत्तरेणान्वयः ॥ २ ॥ देवहेलनाद्ब्रह्मादिदेवानामप्यपराधात् ॥ ३ ॥ हि यस्माद्ब्राह्मणकुलं मे परमं दैवमिव प्रीतिपात्रं तत्तस्मात् । अद्य वः प्रसादयामि । तव कोऽपराधो येनास्मत्प्रसादनं त्वया क्रियत इत्यत आह ॥ तद्धयेवेति । स्वपुंभिः स्वभृत्यैः ॥ ४ ॥ एतदेवोपपादयति ॥ यन्नामानीति । ततः कः हानिरित्यत आह ॥ स इति । आमयः कुष्ठाभिधो रोगः ॥ ५ ॥ मे ब्रह्म दैवमित्युक्तं ब्राह्मणप्रियत्वं ब्राह्मणेभ्यः कस्तवोपकारो येन तव प्रिया जाता इत्याशंकां परिहरन् विशदशति ॥ यास्यामृतमिति । यस्य ममामलामृतत्वप्रदयशः श्रवणलक्षणोऽवगाहः स्नानं सद्यस्तत्क्षणादेवाश्वपचं श्वपचमाभि-

व्याप्य विद्यमानं जगत्पुनाति । भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता । विस्तृत्येति यावत् । सुतीर्थासु पावनी कीर्तिर्यस्य स तथा अनेन स्वस्य ब्राह्मणकृतोपकारो दर्शितः । स्वबाहुं स्वस्य बाहुजातं क्षत्रियं राजानमपि हन्यां काऽन्यस्य कथेत्यर्थः। अत्र स्वोत्कर्षवर्णनं ब्राह्मणोत्कर्षप्रतिपादनायैवेति ज्ञातव्यं ॥ ६ ॥ हरिः स्वस्य ब्राह्मणसेवया गुणलब्धिं वक्तीत्याह ॥ यत्सेवयेति । विप्राणां चरणपद्मपवित्ररेणयोः सेवया सद्यस्तत्क्षणादेव क्षतानि नष्टान्यखिलानि मलानि पापानि यस्य स तथा तं । अत एव प्रतिलब्धशीलं प्राप्तश्रीवत्सलांछनस्वभावं प्राप्तैश्वर्यादिगुणस्वभावं वा विषयेषु विरक्तमपि मां श्रीर्न विजहाति । त्वत्स्त्रीत्वात्त्वां न जहाति । अतः को विशेषोऽनेनेत्यत आह ॥ यस्या इति । प्रेक्षालवार्थं कृपाकटाक्षलेशार्थं मदितरन्मदपेक्षयेतरेषां नियमो व्रतानुष्ठानादिरूपोऽर्हते योग्यो भवति सा श्रीरित्यन्वयः । अत्र ब्राह्मणसेवया सर्वोत्तमस्य भगवतो गुणप्राप्तिर्लक्ष्मीप्राप्तिश्चोच्यमाना प्रमाणबाधिताऽतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ सर्वोत्तमोऽपीति । विप्रादेरित्यत्रादिपदेन देवानां संग्रहः । तु शब्दोऽवधारणे । पूजनायैव पूज्यत्वप्रदर्शनायैव । ततो विप्रादेः सकाशात् । गुणलब्धिं गुणप्राप्तिं स्वात्मनो ब्रूते । ननु हरिवचनमेवं पूज्यत्वप्रदर्शनार्थमित्यस्तु । तथाऽप्येवमेव ब्राह्मणा देवान्प्रति मैत्रेयेण विदुरं प्रति शुकेन परीक्षितं प्रति सूतेन शौनकादीन्प्रति कथमुच्यत इत्यत आह ॥ ब्रूयुरिति । अन्ये च ब्रह्मादयः क्वचिद्ग्रंथे यद्येवमेव ब्रूयुः । तु शब्दोऽवधारणे । तदुक्तेरनुसारत एव हरिवचनानुवादरूपमेव तत् अतो न दोष इति भावः। उक्तन्यायमन्यत्राप्यतिदिशति ॥ उपादत्त इति । विप्रादेरिति वर्तते । च शब्द उक्तवचनसमुच्चयार्थः । अपि शब्दस्य यद्यपि सर्वोत्तमस्तथाऽपीत्यर्थः । मोहनाय चेति शब्देन पूजनाय चेत्यस्य समुच्चयः । अत्र यत्सेवयेत्यस्यैकपदत्वे येषां सेवया क्षताखिलमलं प्रतिलब्धशीलं चेत्यन्वये चरणपद्मपवित्ररेणोरित्यस्यान्वयः । भिन्नपदत्वे च येषां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं मां श्रीर्न विजहाति । तेषां वः प्रतिकूलवृत्तिं स्वबाहुं छिंद्यामित्यन्वयलाभेऽपि शीलादिगुणप्राप्तेः श्रीपरित्यागाभावस्य च न साक्षाच्छिंद्यामित्यत्र हेतुत्वलाभस्तत्ज्ञापकाभावात् । अतो विप्राणामित्यध्याहारं यदित्यस्य हेत्वर्थत्वं तस्याध्याहृतेति शब्देनान्वयं चाभिप्रेत्य योजनां दर्शयति ॥ विप्राणामिति । छिंद्यामित्यनंतरमिति संबंध इति शेषः । क्षताखिलमलमित्यनेन विष्णौ दोषप्रसक्तिः प्रतीयतेऽतस्तदभिप्रायं

श्रुत्यैव दर्शयति ॥ अनुक्ताश्चेति । श्रुत्यादावुक्ता अनुक्ताश्च गुणा ग्राह्याः । दोषा उक्ता अपि न तु नैव ग्राह्याः । तर्हि कथं दोषप्रसक्तिरित्यत उक्तं ॥ अज्ञानादिति । [illegible]वाक्यस्य तात्पर्यस्याज्ञानात् । विपरीततया ज्ञानादित्यर्थः । यथार्थतो यथार्थतात्पर्यज्ञानात् । पैंगिश्रुतिर्यतः । अतो दोषप्रतीतिजनकवाक्यस्य न स्वार्थे । तात्पर्यमिति शेषः । स्वार्थे तात्पर्याभावे तादृशवचनानां कुत्र तात्पर्यमित्यपेक्षायां प्रमाणेनैव दर्शयति ॥ विप्राणां चेति । अपि शब्दो वक्ष्यमाणप्रियत्वपूज्यत्वशून्यानामपीत्यर्थे । पूज्यानामपीत्यन्वयः । अत्ययुक्तं । सद्यः क्षतामित्यादिकं काप्येव विमोहयन्नेवेत्येवकारयोः संबंधः । तथा चासुरजनमोहन एव तादृशवचनानां तात्पर्यमिति भावः । इतरे नियमान्वहंते इत्यपि क्वचिन्मूलपाठः ॥ ७ ॥ इतोऽपि विप्राः पूज्या इत्याशयेनाह ॥ नाहमिति । अहं वितानैर्विस्तृतैर्मंत्रैर्दत्तं चोतद्गलद्धृतं तेन प्लुतं मिश्रितं यजमानस्य हविश्च पुरोडाशादिरूपं हुतभुङ्मुखेनाग्निलक्षणेन मुखेनादन् अश्नन्नपि तथाऽपि नाश्नामि। तथा न तृप्तिं यामीति यावत्। यद्यथा मय्यवहितैरर्पितैर्निजकर्मणां पाकैः फलैस्तुष्टस्य । निष्कामकर्मकरणेनैव तुष्टस्येति यावत् । चरतो भुंजानस्य ब्राह्मणस्य ब्रह्मज्ञानवतो मुखेनानुघासं प्रतिकवलमाद्मि । अनेन प्रीतो भवामि तथेत्यन्वयः ॥ ८ ॥ पुनरसुरजनमोहनाभिप्रायेणैवाह ॥ येषामिति । अखंडा पूर्णा विकुंठाऽप्रतिहता योगमाया योगसामर्थ्यं तथा प्राप्तविभूतिः प्राप्तपरमैश्वर्योऽप्यहं यस्य ममार्हणांभो ब्रह्मकृतप्रक्षालनोदकं तद्रूपगंगाख्यमंभश्चंद्रललामेन चंद्रभूषणेन रुद्रेण सहितान् लोकान्पुनाति । सोऽहमेवं परमपावनोऽपि किरीटैर्येषां विप्राणाममलांघ्रिरजो बिभर्मि तान्विप्रान् अपकुर्वतोऽपि कोऽन्यो न विषहेत तदपराधान्न सहेत । बहुष्ववतारेषु विभर्मीति सूचनाय किरीटैरिति बहुवचन ॥९॥ सर्वथा ब्राह्मणद्रोहो न कार्योऽनर्थहेतुत्वादित्याह॥ ये म इति। तान्नः प्रतिमाभूतान्मदीयान्मद्भक्तान्दुदुहुस्तदीयवित्तादिकं गृहीतवंतः दुद्रुहुरिति पाठे द्रोहं कृतवंत इत्यर्थः। येनाघेन क्षतदृशोऽधीकृतनेत्राः संतोऽलब्धशरीराणि रक्षकरहितानि भूतानि प्राणिनो भेदबुद्ध्या स्वपाल्यपुत्रादिवैलक्षण्यबुद्ध्या द्रक्ष्यंति पश्यंति तान्मम मयाधिकृतो यो दंडनेता दंडकारी यमस्तस्याभिमन्यवोऽभितो मन्युर्येषां ते तथा गृध्राः । रुषा कृषंति चंचुभिश्छिदंति ॥ १० ॥ इदानीं ब्राह्मणपूजयैवाहं वशो भवामीत्याह ॥ ये ब्राह्मणानिति । ये क्षिपतो भर्त्सयतोऽपि ब्राह्मणास्तुष्यद्धृदो हृष्यन्मनसः स्मितमेव सुधा तयोक्षितमासिक्तं

पद्मतुल्यं वक्त्रं येषां ते तथा। अनुरागकलया स्नेहसंबद्धया। कल बंधन इति धातोः। वाण्या वाचाऽऽत्मजवत्कृतं पितरं पुत्र इव गृणंतः स्तुवंतः संतोऽहमिव यथाऽहं विप्रान्संबोधयामि तथैव संबोधयंति। मयि धिया हरिरेषु विशेषतः सन्निहित इति बुद्ध्याऽर्चयंति च तैरहमुपाकृतो वशीकृतः ॥ ११ ॥ इदानीं स्वभृत्योर्मोक्षं प्रार्थयते ॥ तन्म इति। तत्तस्मान्मेऽवसायमभिप्राय-मलक्षमाणावजानंतौ युष्मद्व्यतिक्रमगतिं युष्मदपराधोचितगतिं सद्यः प्राप्य ममांतिकं मत्समीपमितामागच्छतां। तत्पुनः समीपा-गमनं ममानुग्रहः स एवमपि क्रियमाणो भवद्भिरनुग्रहः। कुत एवं प्रार्थ्यत इत्यत आह ॥ यदिति। यद्यस्माद्भवच्छापेन हतयोः स्थानभ्रंशितयोर्विवासो देहांतरावस्थानरूपः कालतोऽपि बहुनापि कालेनाविरामोऽवसानहीनः स्यात्। अतोऽयमनुग्रहो प्रार्थ्यत इति भावः ॥ १२ ॥ तस्य हरेरुशतीमभीष्टप्रदां सरस्वतीं वाचमास्वाद्य तन्माधुर्यमनुभूय मन्युदष्टानामपि मन्युलक्षणा-हिना दष्टानामपि तेषामात्मनः। अत्र देवीं ऋषिकुल्यामिति पदयोः प्रकृतोपयुक्तमर्थं दर्शयति ॥ देवीमिति। चित्रपदोपेततया गंभीरवाक्योपेततयाऽबाधितार्थवत्तया च द्योतमानामित्यर्थः। ऋषिकुलस्तुतिपरामृषिकुलस्तुतां तात्पर्योपेतां। अनेनाबाधितार्थ-त्वमुपपादितमिति ज्ञातव्यं ॥ १३ ॥ व्यादाय प्रसार्य। कर्णौ दत्वेति यावत्। लघ्वीं मिताक्षरीं गुरुभिरर्थैर्गव्हरां अप्रवेश्याम-गाधां अभिप्रायतो गंभीरामर्थतः। अनेन गुर्वर्थगव्हरत्वमुपपादितामिति ज्ञातव्यं। विगाह्य विचार्योक्तवाक्यानामापातप्रती-तमर्थं तस्य हरेश्चिकीर्षितं प्रतिपादयितुमिष्टं न विदुः ॥१४॥ ते सनकादयो योगमायाभ्रूविजृंभादिरूपसामर्थ्येनारब्ध उत्पादितः पारमेष्ठ्यमहोदयो ब्रह्मपदसंबंधिभूतैश्वर्यं यस्य स तथा हरिं। कंपितत्वचो रोमांचितत्वचः। अत्र योगमाया शब्दो नानि-र्वाच्याविद्यापरः किं तूक्तार्थपर एवेत्यभिप्रेत्य समाख्यामाह ॥ तद्भ्रूविजृंभ इति। परमेष्ठिधिष्ण्यं परमेष्ठिधिष्ण्यजनक इति यतः पूर्वमुक्तमतोऽत्रापि स एवार्थो वर्णनीय इत्यर्थः ॥ १५ ॥ चिकीर्षितमुक्तवाक्यैः प्रतिपादयितुमिष्टं। न विद्मस्तद्वाक्यानामा-पातः प्रतीतार्थस्त्वत्तात्पर्यविषयो न भवतीति विद्म इत्यर्थः। एतदेवाहुः ॥ कृतो म इत्यादिना। यद्यस्मादध्यक्षोऽधिपतिारित-रानुग्रहापेक्षाविधुरोऽपि सन् तदनुग्रहो म इति वाक्येन मेऽयमेवानुग्रहः कृत इति प्रभापसे तस्मादयमेवार्थो न तवेष्टः किं त्वन्य एवेति जानीम इत्यर्थः॥ १६ ॥ ब्रह्म देवं परं हि म इत्येतदपि वचनं न प्रतीतार्थपरमित्याहुः ॥ ब्रह्मण्यस्येति। ब्राह्मणपूज्यस्य

ते ब्राह्मणाः परं दैवं किल । किलेत्यनेन प्रतीतार्थो बाधित इति सूचयति । कुतो भगवतो ब्राह्मणपूज्यत्वमित्यत आह ॥ विप्राणामिति । देवदेवानां देव देवपूज्यानां विप्राणां भगवानात्मदैवतं स्वदैवतं । कुलदेवतेति यावत् ॥ १७ ॥ कुत इत्यतस्तै-रनुष्ठेयमानधर्मरक्षकत्वात्तवेत्याहुः ॥ त्वत्त इति । त्वत्तो मूलरूपात् । तव तनुभिः कपिलाद्यवतारैश्च । ब्रह्म दैवं परं हि म इति वाक्यमपि न प्रतीतार्थपरमित्याहुः ॥ धर्मस्येति । धर्मस्याचेतनस्य गुह्यमित्येतदसंभावितार्थकमतो व्याख्याति ॥ धर्मस्यापीति । दाम्भिा निनो यमस्यापीत्यर्थः । गुह्य इत्यस्यार्थः ॥ दुर्ज्ञेय इति । इतरेषां दुर्ज्ञेय इति किमु वाच्यमिति कमुत्यार्थोऽपि शब्दो मूलेऽध्याहार्य इति सूचयति । अनेन ब्राह्मणैरनुष्ठीयमानधर्माभिमानिनो यमधर्मस्यापि सकाशाद्भगवान्परम उत्तमः । कुतः । यतस्तस्यापि गुह्यो दुर्ज्ञेयः । तर्ह्यव्यक्तवद्विकारी स्यादित्यत उक्तं ॥ निर्विकार इति । मतः श्रुत्यादिभिरेवं ज्ञातः । अतस्तव कथं ब्राह्मणा देवाः स्युरिति शेषः ॥ १८ ॥ इतोऽपि तदनुग्रहो म इति वाक्यं न प्रतीतार्थपरमित्याहुः ॥ तरंतीति । निवृत्ता निवृत्तधर्मनिष्ठाः । स भावान्परैरन्यैर्ब्राह्मणादिभिरनुग्रह्यतेऽनुग्रहोपजीवनं क्रियतेति यत्तत्किं स्वित् । विप्रस्तुतिमंतरेण न किमपीत्यर्थः ॥ १० ॥ यच्चोक्तं विप्राणां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलामित्यादि तदपि न प्रतीतार्थपरमित्याहुः ॥ यं वा इति श्लोकद्वयेन । अत्र मधुव्रतपतेरित्यस्य प्रकृतोपयुक्तमर्थं यौगिकं दर्शयति ॥ मधुव्रतपतेरिति । सारग्राहिणां सारभो-जिनां । अनेन मधुनः सारस्य व्रतं भुक्तिर्येषां ते मधुव्रतास्तेषां पतेः पत्युरिति योगं दर्शयति । अस्य धन्यार्पितांघ्रितुलसी-नवधामधाम्नो लोकमित्यनेनान्वय इत्याभिप्रेत्य तत्पदद्वयतात्पर्यमाह ॥ अंघ्रिस्थेति । अंघ्रिस्थतुलसीत्यनेन धाम्न इत्यंतस्य तात्पर्य-मुक्तमित्यवगंतव्यं । स्थानमंघ्रिरूपं । अनेन धन्यैरर्पितमंघ्र्योर्यत्तुलस्या नव दाम तद्धाम्नस्तत्स्वरूपस्य लोकसंस्थानमिति मूलं व्याख्येयमिति सूचयति । धाम शब्दस्य स्वरूपार्थकत्वद्योतनायैवांघ्रितुलसीत्येवोक्तं । विभूतिरित्यत्र योग्यताबललब्ध-मध्याहारं दर्शयति ॥ उरसि स्थापिताऽपीति । इव शब्दस्याध्याहृतस्पर्धयेत्यनेनान्वयमभिप्रेत्य योजयति ॥ स्पर्धयेवेति । अस्या एवमुत्तमस्थानं कुत इति स्पर्धयेवेत्यर्थः । कामयाना कामयमाना । अत्र प्रमाणसंवादमाह ॥ लब्ध्वाऽपीति । लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टमित्यादिरूपं वचनं यतोस्त्यत उक्त एवार्थः ॥ ततश्चायं श्लोकार्थः ॥ यामिति यच्छब्दस्य सत्त्व-

मित्युत्तरेणान्वयः । वै शब्दः प्रमाणप्रसिद्धिद्योतकः । विभूतिर्महालक्ष्मीरुरसि स्थिताऽपि मधुव्रतपतेः सारग्राहिणां पत्युस्तव धन्यैर्भक्तैरर्पितमंघ्र्योर्विद्यमानं यत्तुलस्या नव दाम तद्धाम्नस्तत्स्वरूपस्य दामरूपेणांघ्रिस्थतुलस्या इति यावत् । दामग्रहणं चरणोयोर्बहु तुलसीसमावेशाय । लोकं संस्थानं । अंघ्रियुगलस्पर्धयेव । न वस्तुतस्तस्याः स्पर्धाऽस्तीति सूचनायेव शब्दः । कामयाना कामयमाना सती यमनुवेलं प्रति प्रातरादिकालं सेवितुमुपयाति । कथं भूता । अर्थार्थिभिश्चतुर्विधपुरुषार्थार्थिभिर्ज्ञानभक्त्याद्यर्थिभिर्वा ब्रह्मादिभिः स्वशिरसा धृतः पादरेणुर्यस्याः सा । अनेन ब्राह्मणसेव्यरमासेव्यस्य तव ब्राह्मणपादरेणुसेवया श्रीर्मां न विजहातीति वचनं न प्रतीतार्थमित्युपपादितामिति ज्ञातव्यं । तर्हि श्रीर्मां कुतो न विजहातीत्यतः स्वभावादेवेति वक्तुं यं वा इत्यादि शिष्टं वाक्यं । अत्रैवमुत्प्रेक्षा । ब्रह्माद्युत्तमा लक्ष्मीः स्वयमुरसि संस्थिताऽपि तुलसी स्थानमंघ्रिमुरोलक्षणस्वस्थानवदधिकमिति मत्वांऽघ्रिस्थानमपि तुलसीस्पर्धयेव कामयाना सती स्वभावादेव भगवंतमनुवेलं सेवितुमुपयातीति । लक्ष्म्याः स्वस्थानवत्तुलसीस्थानस्यांघ्रेः कथमुत्तमुत्तमत्वं ज्ञातं येन तदपेक्षया सेवितुमुपयातीत्यत उक्तं ॥ मधुव्रतपतेरिति । इदमुक्तं भवति । भगवता हि तुलस्या अंघ्रि युगलं स्थानं दत्तं । अत एव भक्तैः सा तत्रैव दामादिस्वरूपाऽर्प्यते तुलसी चातिविभगवतः प्रिया प्रसिद्धा तस्य सारग्राहिपतित्वात् । तुलस्याश्च तस्य ग्राह्यसारवत्वात् । न हि तस्या अनुत्तमं स्थानं भगवान्दास्यति । अतोंऽघ्रिलक्षणं तुलसीस्थानं मत्स्थानवदुत्तममेव भवितुमर्हतीति ज्ञातव्यमिति ॥ २० ॥ यदपि विरक्तमपीति रमायां वैराग्यवचनं तदपि तस्यां न सर्वथा रागाभावपरं किंतु कामप्रयुक्तरागाभावपरमेवेत्याहुः ॥ यस्तामिति । अत्र परमभागवतेषु प्रसंगः प्रकृष्टस्नेहो यस्य स भगवान् तान् अत्याद्रियदितीतरभगवद्भक्तापेक्षया रमायां भगवत आदराभावः प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं दर्शयति ॥ परमेति । परमभागवतत्वेन निमित्तेन । अनेन परमभागवतपदं भावप्रदानं तृतीयांतं समस्तमिति दर्शितं । तस्यां रमायामित्यनेन परमभागवतपदं नेतरभागवतपरं किंतु रमापरमेवेति सूचितं । प्रसंगशब्दस्य व्याख्यानं ॥ अत्यादर इति ॥ ततश्चायमर्थः ॥ यो भवान्विविक्तरचितैरसाधारणपरिचरणैरनुवर्तमानां तां श्रियं नात्याद्रियत्स्त्रैणवन्न कामितयाऽऽद्रितवान् । ननु तर्हि रमायां भगवःदादरसद्भावप्रतिपादकवाक्यविरोध इत्यत उक्तं ॥ परमभागवतत्वेनेति । परमभागवतत्वेन सर्वोत्तमभगवद्भक्तत्वेन तस्यां प्रसंग-

प्रकृष्टस्नेहो यस्य स तथोक्तः । तथा चादरप्रतिपादकवाक्यानां तादृशादरपरत्वान्न विरोध इति भावः । स्यादेवं यदि परमभागवतत्वप्रयोजकगुणवत्त्वं तस्याः प्रसिद्धं स्यात्तदेव कुत इत्यतोऽत्र प्रमाणमाह ॥ हरिभक्तिरिति । अधिकारे पारमेष्ठ्यादिपदाधिपत्यकाले । यथाक्रमं तु यथाक्रममेव । नन्वेतेषामवतारेषु भक्त्यादिगुणव्यत्यासोऽपि दृश्यतेऽतः कथमुक्तनियम इत्यत आह ॥ भूमाविति । कारणतो मानुषान्नोपभोगादिकारणतः । अन्यथोक्तगुणव्यत्यासे । दृश्यत इति शेषः । ननु भूमौ तेषां ज्ञानादिह्रासवल्लक्षणह्रासोऽपि भवति किं नेत्याह ॥ देहस्येति । लक्षणं द्वात्रिंशल्लक्षणेषु येषां यावत्क्लृप्तं तावदित्यर्थः । अन्यथा व्यत्यस्तं । लक्षणमपि ब्रह्मादिषु तारतम्येनैवास्तीति प्रसंगादाह ॥ ब्रह्मादिष्विति । तु शब्दो भूम्यादौ सर्वत्रेत्यर्थकः । एव शब्दस्य विष्णोरित्यनेन संबंधः । अपि शब्दोऽधिका इत्यस्यानुकर्षणार्थकः । अनेन विविक्तचरितैरनुवर्तमानामित्येतद्विविक्तैः सेवकतारतम्यांतगैरचितैर्भक्त्यादिपूर्वकपरिचरणैरिति व्याख्यानेन रमायाः परमभागवतत्वोपपादकमिति सूचयति । इदानीं विप्राणां पादपद्मरेणोः सेवया प्रतिलब्धशीलमित्येतदपि न प्रतीतार्थपरमित्याहुः ॥ स त्वमिति । यो द्विजानामनुपथेनानुगमनेन । पथ गताविति धातोः । पुण्यं यत्स्वपादरजस्तेन द्विजानां पुनीतिः शुद्धिर्यस्मात्स त्वं पादरजसा द्विजपवित्रकरस्त्वं द्विजपदपद्मरेणुसेवया श्रीवत्सलक्ष्म श्रीवत्सलांछनवत्स्वभावं भगभाजनत्वमैश्वर्यादिगुणपात्रस्वभावं वाऽगा अगच्छः । किमित्याक्षेपः । अत इदं भगवदुक्तं सर्वमस्मत्स्तुतिपरमसुरजनमोहनपरं चेत्येव वयं जानीम इति भावः ॥२१॥ कुतो भवत्स्तुतिर्मया कर्तव्येत्यपेक्षायां ब्राह्मणानां जगद्धारकधर्मप्रवर्तकत्वादित्याशयेनाहुः ॥ धर्मेति । अत्र धर्मस्य त इति सामानाधिकरण्येन भगवतो धर्म शब्दवाच्यत्वमुक्तं । तत्केन निमित्तेनेत्यपेक्षायां तत्र निमित्तं प्रमाणेनाह ॥ धारणादिति । त्रिभिः स्वैः पद्भिस्तपः शौचदयारूपैरिति नो वरदया सत्त्वेन सत्त्वमूर्त्येति च व्याख्यानं प्रमाणविरुद्धमित्याशयेन श्लोकं प्रमाणेनैव व्याख्याति ॥ अनंतासनेति । त्रिभिः । स्वरूपांशैरिति शेषः । अनेन त्रिभिः स्वपद्भिरित्येतदुक्तार्थं । भृतमित्यस्यतात्पर्यं ॥ रक्षां करोतीति । वरदया तनुवेत्यस्य तात्पर्यं ॥ कपिल इति । सत्त्वेनेत्यस्य सत्त्वात्मकमूर्त्येति व्याख्यानमसादिति भावेनाह । असत्त्वोऽपि सत्त्वगुणात्मकशरीररहितोऽपि सत्त्ववर्धनादिति । रजस्तमश्च निरस्येत्यस्य व्याख्यानं ॥ रजश्चैवेति । च शब्दो परस्परसमुच्चये।

एव शब्दस्य निरस्यैवेति संबंधः । अपि शब्दः सत्त्वाविघातित्वरूपविशेषणसमुच्चायकः । तु शब्दस्तदुभयकार्यनिरासरूपविशेषसूचकः । वरदया तनुवेत्यत्र वरद शब्दः कपिलपर एवेत्याशयेन तत्राभिधानं पठति ॥ कपिल इति । वरदादि शब्देन कपिल एव कथ्यत इत्यन्वयः । प्रमाणोदाहरणफलं दर्शयति ॥ अत इति । यतः प्रमाणेऽपि सत्त्वोऽपि सत्त्ववर्धन इत्युक्तं । यतश्च वरद शब्दः कपिलपरत्वेनाभिधानासिद्धोऽत इत्यर्थः । सत्त्वस्य सत्त्वेनेति तृतीयांतपदेनोक्तस्य कारणत्वमात्रमुच्यते । रजस्तमोनिरसन इति शेषः । ननु मूर्त्येत्यर्थकस्य वरदया तनुत्वेत्यत्र विशेषणत्वमित्यर्थः । कपिलो वरदा तनुवेत्यत्रोक्तः कपिल एवांगीकार्यः स एव कर्तेत्याशयः ॥ ततश्चायं श्लोकार्थः ॥ त्रिष्वेव युगेष्ववतारकारणात्त्रियुगस्तत्संबंधि हे त्रियुग । धारणाद्धर्मनामकस्य ते स्वैः स्वरूपभूतैस्त्रिभिः पद्भिरनंतासनवैकुंठक्षीरसागरगतैरंशैश्चराचरमिदं विश्वं द्विजानां देवानामर्थं प्रयोजनमुद्दिश्य । द्विजैर्देवतोद्देश्यकधर्मप्रवृत्त्यर्थमिति यावत् । नूनं निश्चयेन भृतं पालितं । धर्मोपयोगिकृतमिति यावत् । किं कृत्वा । तदभिघातिदेवतोद्देशेन द्विजैः क्रियमाणधर्माभिघातिरजस्तमश्च राजसांस्तामसांश्च वरदया तनुवा कपिलाख्येनावतारेण कर्त्रा नोऽस्माकं ब्राह्मणानां सत्त्वेन सत्त्वगुणवर्धनरूपेण करणेन निरास्य निरासं कृत्वेति ॥ २२ ॥ धर्मप्रवर्तकानां द्विजानां यदि स्तोत्रादिकं त्वं न करोषि तर्हि बाधकमाहुः ॥ न त्वमिति । अत्रात्मगोपमित्येतदात्मनः स्वस्य गोपं गोप्त्रिति प्रतीतिनिरासाय व्याख्याति ॥ आत्मैवेति । गोपो गोप्ता रक्षकः ॥ ततश्चायमर्थः ॥ हे वृष हे श्रेष्ठ हे देव क्रीडादिगुण । त्वमात्मैव गोपो यस्य तदात्मगोपं । द्विजोत्तमकुलमिह जगति सुशोभनं सूनृतं मधुरभाषणं यस्मिंस्तेन स्वर्हणेन समीचीनसत्कारेण यदि न गोप्ता रक्षिता तर्हि तदानीमेव तव शिवः शुद्धः पंथाः स्वप्रीतिसाधनो धर्ममार्गो नक्ष्यत्युत्सन्नो भविष्यति । हि यस्माल्लोक इतरेजनो ऋषभस्य सद्धर्मप्रवर्तकस्य यत्प्रमाणं यद्वाक्यमूलकमाचरणं तदेवागृहीष्यत् । यद्यदाचरति श्रेष्ठ इत्यादेः । अतस्त्वया ब्राह्मणानर्हणे कृते लोकोऽपि तथैव करिष्यति । ततश्च धर्ममार्गोच्छेदो भविष्यतीति भावः ॥ २३ ॥ नश्यतु को दोष इत्यत आहुः ॥ तत्तेनेति । तद्धर्ममार्गनाशनं । अनभीष्टमिवाप्रियमिव । अत्र वस्तुतोऽभीष्टमेवेति प्रतीतिवारणायेव शब्दसूचितमर्थं दर्शयितुं प्रमाणं पठति ॥ असुरा इति । चापि शब्दौ यद्यपि तथाऽपीत्यर्थौ । नित्यानंदात् । हरेर्नित्या-

नंदस्वरूपात् । न लोकवत् । अप्रिया इति शेषः । लोके यथा दुःखजनका अप्रिया इत्युच्यंते न तथा हरेरसुरा अप्रिया दुःखप्रसक्तेरेवाभावादिति भावः । तर्ह्यसुरेषु हर्यप्रियत्वं कीदृशमित्यत आह ॥ निषेधेति । इदं मा भूदिति निषेध्यत्वेन निषेध्य-बुद्धिविषयत्वमेवाप्रियं हर्यप्रिय शब्दवाच्यं मतं संमतमित्यर्थः । इदानीमनभीष्टमिवेत्यत्रत्येव शब्दं व्याख्याति ॥ तस्मादिति । यस्मात्प्रमाणे हर्यप्रिय शब्दवाच्यमन्यदेवोक्तं तस्मादित्यर्थः । तथा च धर्ममार्गनाशनं वस्तुतो निषेधबुद्धिविषयरूपमप्रियं भवत्येव । तथाऽपि लोकवद्दुःखजनकरूपमप्रियं न भवतीति सूचनार्थ मूले इव शब्द इति भावः । मूले सत्त्वनिधेर्बलज्ञानपूर्णस्य सुखपूर्णस्येति वा । विधित्सोर्विधातुमिच्छोर्निजशक्तिभिः स्वाभाविकज्ञानबलरूपशक्तिमद्भिर्व्यासकपिलरामकृष्णाख्याभिरुद्ध-तारैर्विनाशितधर्मप्रतिपक्षस्य तेऽनभीष्टमिव दुःखजनकमिवानंदपूर्णस्य तव दुःखाभावेऽपीदं मा भूदिति निषेधबुद्धिविषयं भवत्ये-वातस्तव ब्राह्मणसत्कारो युक्त एवेति भावः । नन्वेवं विधस्य तव नीचेषु विप्रेषु प्रणामादिर्मानभंगकर इत्यत आहुः ॥ नैता-वतेति । धर्मरक्षणप्रयोजनेनावनतस्य प्रणतस्य तेजः क्षतिर्मानभंगो न । कुतः । यतः स प्रणामादिस्ते विनोदः क्रीडारूपः । तु शब्दोऽवधारणे । विनोद एवेत्यन्वयः ॥ २४ ॥ शापाग्रहं परित्यज्य विज्ञापयंति ॥ यं वेति । भो अधीश अखंडेश । भवान् अनयोर्यं दमं दंडं अस्मत्कृतमन्यं वा विचष्टे उचिततया पश्यासि । वृत्तिं वाऽत्रैव स्थितिलक्षणां वा । यदि विचष्टे तत्सर्वं वयं निर्व्यलीकं यथा स्यात्तथाऽनुमन्महि अनुमन्यामहे । ये वयमनागसौ निरपराधौ त्वत्पार्षदौ किल्बिषेण शापेन युंक्ष्महि योजित-वंतस्तेष्वस्मासु वा य उचितो योग्यो दंडः स ध्रियतां क्रियतां ॥ २५ ॥ सर्वप्रेरकेण मयैव शापस्य कारितत्वान्न युष्मा-कमपराध इत्याश्वासयन्मोक्षं प्रार्थयते ॥ एताविति । सुरेतरगतिमसुरदेहं । समुदायापेक्षयैकवचनं । संरंभो द्वेषोत्कर्षस्तेन संभृतः संपादितो यः समाधिश्चित्तैकाग्र्यतादिरूपस्तेनानुबद्धा दृढीकृतो योग उपायो ययोस्तौ तथा । उपयास्यत उपयातां यो वो युष्मत्कर्तृकशापः सोऽपि मयैव विहितः प्रेरित इति तच्छापदानमवेत जानीत । अत्र संरंभसमाध्यनुबद्धयोगयोः कथ-मेकदैकत्रावस्थानमुच्यते तयोर्विरोधादित्याशंकायां समाधानं प्रमाणेनैवाह ॥ अंतर्भक्ता इति । अंतः स्वरूपमनसि । बहिर्बाह्ये जडमनसि । क्रुद्धद्वेषिणः । आद्य शब्देन बल्यादीनां ग्रहणं । सर्वक्रुद्धाः सर्वत्रांतर्बहिश्च क्रुद्धा इत्यर्थः । क्रोधवशाः क्रोध-

वशानामानोऽसुरा अंतः स्वरूपमनसि तथा क्रुद्धाः । बाहिर्भक्ता इत्यपि ग्राह्यं । तथा च भक्तिद्वेषाधिकरणयोर्मनसोरत्र भेदान्न विरोध इति भावः ॥ २६ ॥ २७ ॥ अनुगान्य सम्यग्ज्ञानयित्वा वैष्णवीं विष्णुसंबंधिनीं श्रियं शंसतः संतः । अत्र श्री शब्देन लक्ष्मीग्रहणेऽसंगतमालोच्यान्यां तद्वाच्यां श्रियं प्रमाणेनैव दर्शयति ॥ स्वरूपश्रीरिति । सौंदर्यमित्यर्थः । भार्या लक्ष्मीः । द्वेधेत्यतः पूर्वमिति शब्दोऽध्याहार्यः । हरेः हरिसंबंधित्वेनोच्यमाना श्रीः अनेन वैष्णवीमित्येतदुक्तार्थं । तु शब्दो भार्यापेक्षया स्वरूपश्रियो विशेषसूचकः । तथा च विष्णुसंबंधिनीं स्वरूपश्रियं शं संत इति मूलं व्याख्येयमिति भावः ॥ २८ ॥ मा भयं भयं न कुरुत । नेच्छे नेच्छामि । भवद्भिस्तन्मे मतं संमतं ॥ २९ ॥ कुतो मतमित्यतस्तत्र कारणांतरमप्याह ॥ एतत्पुरैवेति । एतद्भवद्दंडनं । अपवारिता निवारिता उपारते योगनिद्रामुपागते सति ॥ ३० ॥ संरंभयोगेन द्वेषपूर्वकभक्तियोगेन । प्रत्येष्यतं प्रत्येष्यथः । निकाशं समीपं । अत्र ब्रह्महेलननिस्तरणकारणत्वं भक्तियोगवत्संरंभस्यापि कथ्यत इति भाति । अन्यथा द्वेषस्य फलांतरावचनेनात्रोक्तासंभवादित्यतोऽत्र प्रमाणोदाहरणपूर्वकं तात्पर्यं दर्शयति ॥ अंतर्भक्ता इति । भक्त्या स्वरूपभूत-भक्त्येव पूता ब्रह्महेलनं निस्तीर्य शुद्धा जाता इत्यर्थः । तर्हि बाह्यमनसि विद्यमाने द्वेषस्य वैफल्यमित्यत आह ॥ द्वेष इति । आवेशकान् आविष्टकान् गतः । प्राप्तफलदानायेति शेषः । के ते आविष्टा इत्यत आह ॥ ब्रह्मजा इति । तु शब्दः प्रसिद्धार्थः । पार्षदौ जयविजयौ प्रविष्टा बल्यादींश्च गता यत एवं बाह्यमनसि विद्यमानसंरंभ आवेशकान् गतो न भक्तेषु फलप्रदस्तस्माद्योग एव भक्तियोग एव ब्रह्महेलननिस्तारक इत्यन्वयः । नन्वेवमसुरावेशप्रयुक्तं बाह्यमनोगतद्वेषेण भक्तानां फलाभावे मूले शुभफल-साधनतया तदुक्तिः कथमित्यत आह ॥ तस्मादिति । संरंभो भक्तानामसुरावेशेन जायमानो द्वेषो यतोऽल्पफलोऽल्पकाले ज्ञानभक्त्यादिह्रासफलकोऽतोऽल्पत्वात्तदपेक्षया द्वेषस्यापि शुभफलहेतुत्वमेव कथ्यतेऽसुरजनमोहनार्थमेवेति भावः । कथ्यत एवेत्येवकारेण कथनस्य स्वार्थे तात्पर्यमिति सूचयति ॥ ३१ ॥ ३२ ॥ गीर्वाणा देवा ऋषभाः श्रेष्ठा ययोस्तौ दुस्तराद्ब्रह्म-शापादित्यन्वयः । हरिलोकतो हरिलोक एव । विगतस्मयौ नष्टगर्वौ ॥ ३३ ॥ विमानाग्रेषु । स्थितानामिति शेषः । पुत्रका देवाः ॥ ३४ ॥ काश्यपं तेजोवीर्यं प्राप्तौ ॥ ३५ ॥ तेजसा प्रभावेनाक्षिप्तं तिरस्कृतं तेजः सूर्यादिकं । एतर्हीदानीं

तत्तस्य प्रतीकारं विधित्सति कर्तुमिच्छति ॥ ३६ ॥ अधुनैव भवतैव कश्चिदुपायोऽत्र विचारणीय इत्यत आह ॥ विश्वस्येति । विश्वस्येत्यनेन तस्यैव प्रकृतेः कार्यकर्तृत्वं मुख्यमिति सूचयति । योगेश्वरैर्ब्रह्मादिभिर्दुरत्ययो दुर्ज्ञेयो योगमार्ग उपायप्रकारो यस्येत्यनेनोपायाभिज्ञत्वं । क्षेमं प्राप्तरक्षां विधास्यतीत्यनेन नायमवसर इति सूचयति । उत्तरकालेऽपि करिष्यतीति कथं निश्चय इत्यत उक्तं ॥ त्रातेति । त्राणशीलत्वात्करिष्यत्येवेति निश्चय इति भावः । हेत्वंतरं चाह ॥ त्र्यधीश इति । त्रयाणां लोकानामीश्वरा इंद्रादयस्तेषामपीश्वर इत्यर्थः । भवत्पालन एव बद्धदीक्ष इति यावत् । फलितमाह ॥ अस्मदीयेति । विमृशेनोपायविचारेण जायमानोऽर्थः कियानल्प एवेत्यर्थः ॥ ३७ ॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥ ३-१७ ॥ ॥

॥ हरिः ॐ ॥ आत्मभुवा ब्रह्मणा गीतं कथितं ॥ १ ॥ अपत्यपरिशंकिनी अपत्ययोर्हरेर्नाशशंकावती । यमौ यमलौ ॥ २ ॥ तत्र तदा निपेतुरुद्बभूवुः ॥ ३ ॥ सहाचलाः सपर्वता भुवः प्रदेशाः सोल्का उल्कापातसहिता अशनयोर्निर्घाताः केतवश्च । उदयांचक्रुरिति शेषः । आर्तिहेतवो दुःखसूचकाः ॥ ४ ॥ फट्कारारावबानित्येतत् फट्कार इति शब्दवानिति प्रतीतिवारणाय प्रमाणेनैव व्याख्याति ॥ फट्कार इति । अनुकरणशब्दा एवेत्यन्वयः । विज्ञेयाः । वायुसंबंधेनोक्ता इति शेषः । ये चान्ये सृगालादिसंबंधित्वेनोक्ताः टंकारादयस्तेऽपि तादृशाः फट्कारादिशब्दसदृशा अनुकारशब्दा एवेत्यर्थः । अनेनाग्रेतनं टंकार स्वात्कार शब्दव्याख्यानमपि प्रमापितमिति ज्ञातव्यं । मूले नगपतीन्महान्वृक्षान् वात्यानां चक्रवातानामनीकं समूहो यस्य स तथा । रज एव ध्वजो यस्य स तथा ॥ ५ ॥ उल्लसंत्यो तटितो येषु ते तथा । उल्लसत्ताडितस्ते च तेंऽभोदा मेघाश्च तेषां घटया समूहेन नष्टो भानां सूर्यादिप्रभाणां गणो यस्मिंस्तत्तथा । तस्मिन्पदं स्थानं न व्यादृश्यते स्म ॥६॥ वार्धिः समुद्रो विमान इवोदयानैर्वापीकूपादिभिः सहिताः शुष्काणि पंकजानि यासु ॥ ७ ॥ परिधयः परिवेषाः स राव्हो राहुग्रस्तयोर्निर्घातरवा निर्मेघगर्जितानि तेषां निन्हादाः प्रतिध्वनयो विवरेभ्यः पर्वतगुहाभ्यः ॥ ८ ॥ शिवा अपीत्यन्वयः । अत्र टंकार शब्दमप्रतीत्या व्याख्याति ॥ टंकारोऽपीति । न केवलं पूर्वोक्त फट्कारादिरेवेत्यर्थः । ननु शिवानामपि सृगालत्वात्कथं पुनरुक्तिरित्यत आह ॥ सृगाला इति । तत्र सृगालशिवयोर्मध्ये अतो न पुनरुक्तिरिति शेषः । कुत इत्यतोऽन्यत्रापि सहप्रयोग-

दर्शनादित्यभिप्रेत्य सृगालादीनामन्यथा स्वारस्यानिष्टसूचकत्वे समाख्यां दर्शयति ॥ नाश इति । जातिस्वरापेक्षयाऽन्यथा स्वरे टंकारादिरूपे नाशः । विज्ञेय इति शेषः । तथा च टंकारैः स्वजातिस्वरापेक्षयाऽन्यथाभूतटंकाररूपानुकारशब्दैरिति मूलं व्याख्येयमिति भावः ॥ ९ ॥ ग्रामसिंहाः श्वानः शिरोधराः कंठास्तानुन्नमय्योर्ध्वीकृत्य ॥ १० ॥ खराश्चोष्ट्राश्च खरोष्ट्राः खात्कारेत्यस्याप्रतीत्याऽर्थमाह ॥ खात्कारोऽपीति । तथा च खात्काररूपानुकारशब्देन रभसो हर्षो वेगो वा येषां ते तथेति मूलार्थ इति भावः ॥ ११ ॥ रासभत्रस्ता रासभध्वनित्रस्ता इत्यर्थः ॥ १२ ॥ गावोऽत्रसन् भीता असृग्दोहाश्च बभूवुः । देवलिंगानि प्रतिमाः । व्यरुदन्प्रतिमानामश्रुपात आसीदित्यर्थः ॥ १३ ॥ पुण्यतमान् ग्रहान् बृहस्पत्यादीन् । भगणान् बहूनि नक्षत्राणि च । अन्ये क्रूरा ग्रहा मंगलादयोऽतिचेरुरतिक्रम्य जग्मुः । वक्रगत्या परावृत्य परस्परं युयुधुश्च ॥ १४ ॥ तेषां दुर्निमित्तानां तत्त्वं निमित्तं विदंतीति विदः । ब्रह्मपुत्रान्सनकादीन् । ऋते विना ॥ १५ ॥ आदिदैत्यौ आदिदैत्याभ्यामाविष्टौ सहायबलेन पौरुषं पराक्रमः । अश्मसारेणाश्मसार इव दृढेन ॥ १६ ॥ कोटिभिरिति बहुवचनं किरीट्योश्चतुष्कोणत्वाभिप्रायेणेत्याहुः । वस्तुतस्तु जाताविदं बहुवचनं । तेन कोटिभ्यामित्यर्थलाभः । काष्ठा दिशः ॥ १७ ॥ प्रजापतिः कश्यपो यः स्वदेहात्स्ववीर्यात्प्रागजायत । योनिपुष्पं प्राविशत्तन्नामकरणानंतरं हिरण्यकशिपुनामानं विदुः सा दितिर्यं वीर्यद्वारा पश्चात्स्वयोनिपुष्पं प्रविष्टमग्रतोऽसूत तं हिरण्याक्षनामानं विदुः । गर्भाधानसमये पुरुषेण सिक्तं वीर्यं द्विधा विभक्तं सत् यदाऽऽदिपश्चाद्भावेन योनिपुष्पं प्राविशति तदा यमौ भवतः । तत्र पश्चाद्वीर्यद्वारा यो योनिपुष्पं प्रविष्टः स एव प्रथमं प्रसूयते । पूर्वं प्रविष्टः पश्चादिति हि स्थितिस्तदभिप्रायेण प्राक् स्वदेहादजायताग्रतः साऽसूतेत्युक्तमिति ज्ञातव्यं ॥ १८ ॥ ब्रह्मवरेणाकुतोऽपि मृत्युः ॥ १९ ॥ रणं युद्धं ॥ २० ॥ पुष्पैश्चतुर्गुणैर्मालां वैजयंतीं विदुर्बुधा इति वचनात्पुष्पैश्चतुर्गुणी कृता या वैजयंती ॥ २१ ॥ मनसा धैर्येण वीर्यमदेन वोत्सिक्तमुद्रिक्तं निलिल्यिरे निलीनाः । तार्क्ष्यो गरुडः ॥ २२ ॥ सहसा बलेन ॥ २३ ॥ विजगाह विलोडयामास ॥ २४ ॥ सन्नधियो नष्टबुद्धयः ससाध्वसा भयसहिताः प्रधर्षिता अभिभूताः सतः ॥ २५ ॥ हे तात विदुर । प्रचेतसो वरुणस्य विभावरीं विभावरी नामवतीं पुरीमासेदिवान्प्राप्तः ॥ २६ ॥ प्रलब्धुमुपहसितुं स्मयन् गर्वयुक्तः सन् नीचवन्म्लेंछव-

त्प्रणिपत्यैकेनैव हस्तेन नत्वा ॥ २७ ॥ बृहच्छ्रवा व्याप्तकीर्तिर्दुष्टो मदो दुर्मदस्तेन वीरान् आत्मनो मन्यंते इति वीरमानिनस्तेषां वीर्यमावहत्यपहरतीति वीर्यावहः । राजसूययज्ञेन भवानयजत इति यद्यस्मात्तस्माद्वीर्यावह इत्यन्वयः ॥ २८ ॥ हे अंग । उपशमं युद्धादिकौतुकादुपरमं ॥ २९ ॥ अहितं वैरिणं । असुरर्षभेति पाठे हि गच्छेति व्याख्येयं ॥ ३० ॥ आराच्छीघ्रं विस्मयो विगतगर्वो वीराः शेरतेऽस्मिन्निति वीरशयो रणांगणस्तस्मिन् । अत्र स्वर्गस्थानां देवानां वरुणस्य च हिरण्यात्पराभव उक्तः स कथं देवानां पार्षदापेक्षयोत्तमत्वात्तद्दैत्ययोश्चातो दुर्बलत्वादतोऽत्राभिप्रायं प्रमाणेनैवाह ॥ न देवानामिति । वरतो वरं । प्रसंगादाह ॥ वरोऽपीति । तादृशः सर्वदेवजयप्रदो नान्यदेहगः । दैत्याविषयमेतत् । अतः सर्वैरजेयः स च कुंभकर्णः पुरातने जन्मनि धातुरेव वरादिति भारततात्पर्यनिर्णयविरोधो नेति ध्येयं । तस्य पार्षदविषयत्वात् । तथा चात्र हिरण्याक्षस्य वरेणैव जय उक्तो न स्वाभाविकबलेनातो न विरोध इति भावः ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यामष्टादशोऽध्यायः ॥ ३–१८ ॥

॥ हरिः ॐ ॥ प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यत इति यदुक्तं तद्विगणय्यागणयित्वा । अवज्ञायेति यावत् । यतो दुर्मदः । नारदाद्धरे रसातलं प्रति गतिं गमनं विदित्वा श्रुत्वा ॥ १ ॥ धराधरमित्येतदेव विवृणोति ॥ अग्रदंष्ट्रयेति । दंष्ट्राग्रेण प्रकर्षेणोर्ध्वं नीयमानाऽवनिर्येन स तथा तं । अंबुरुहारुणाश्रियं रक्तपद्मकांतिं मुष्णंतं चोरयंतं । तिरस्कुर्वंतामिति यावत् । वनगोचरो वनभूचरो मृगो वराहः । अहो विचित्रं । अयं कथं मम प्रतिवीरत्वेनोक्त इति जहासेत्यर्थः ॥ २ ॥ रसौकसां रसातलवासिनां नोऽस्माकं विश्वसृजा ब्रह्मणाऽर्पिता दत्ता यतोऽमुया भूम्या सहेक्षितः सतः । हे सुराधम । कुतः । यतस्त्व-मस्मद्वंचनार्थं प्राप्तसूकराकृतिरित्यभिप्रेत्याह ॥ आसादितेति ॥ ३ ॥ सपत्नैः शत्रुभिर्देवैरभयाय वृतः किं यस्त्वं मायया सूकरा-दिरूपधारणेनासुरान्हंसि । अप्रत्यक्षतया चौर्येणैव जयतीति परोक्षजिद्योगमायाबलं कपटोपायबलं । अत एवाल्पपौरुषं त्वां संस्थाप्य हत्वा सुहृदां शुचः शोकान्प्रमृजे नाशयामि ॥ ४ ॥ शीर्णशीर्षणि ध्वस्तमस्तके त्वयि स्थिते संस्थिते । मृत इति यावत् । स्वयं स्वयमेव फलं विनैव भविष्यंति मृता भविष्यंति । अमूला मूलाश्रयरहिताः संतः ॥ ५ ॥ स हरिररैर्दुरुक्ता-न्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रतां पृथ्वीं तोदं दुरुक्तिव्यथां मृषं सहमानः । निरगान्निर्गतः । सक-

रेणुर्हस्तिनीसहितः ॥ ६ ॥ हिरण्यकेशो हिरण्याक्षो द्विरदं गजं गतह्रियां गतलज्जानामसतां विगर्हितं निंदितं किं न किमपि निंदितमपि तेषामनिंदितमेवेत्यर्थः । प्रकृते च युद्धे तव पलायनं निंदितामिति भावः ॥ ७ ॥ स हारिर्गां भूमिं सलिलस्य जलस्योदस्तादुपरि गोचरे भुवो वासयोग्यस्थले विन्यस्य संस्थाप्य स्वसत्त्वं स्वबलं जलमध्येऽचांचल्येनावस्थानायादधात्स्थापितवान् । विबुधैरभिष्टुतः पश्यतः सतः ॥ ८ ॥ परानुषक्तं वैरिणमनुयांतं तपनीयोपकल्पमहांगद सुवर्णभरणभूपिता महती गदा यस्य तस्य तथा तं । कांचनैराभरणैश्चित्रान्यलंकृतान्यंगान्यवयवा यस्य स तथा तं । प्रतुदंतं व्यथयंतं । प्रहसन्नित्यनेन कोपाच्छादनं कृत्वेति लभ्यते ॥ ९ ॥ ग्रामासिंहान् शुनः । प्रतियुक्तस्य बद्धस्य विकत्थनमसंबद्धभाषणं । श्लाघं वा ॥ १० ॥ न्यासहरा निक्षेपहारिणो द्राविताः पलायनं कारिताः । अथाऽपि तिष्ठामहे । यतो गतह्रियः ॥ ११ ॥ रथानामिति रथिनो लक्ष्यंते । यस्त्वं नोऽस्मान् अदुद्रुहो दुरुक्त्यादिना द्रोहमकार्षीः स त्वं यद्यस्माद्रथिनां यूथाधिपः किल । तस्मान्नोऽस्माकमस्वस्तयेऽमंगलायाशु घटस्व यतस्व । संस्थाप्य हत्वाऽतिपिपर्ति पूरयति पालयति वा ॥ १२ ॥ अधिक्षिप्तः सत्यं वयं भो इति श्लोकेनोक्तरीत्या । प्रलब्ध उपहासितश्चैते वयमिति द्वाभ्यामुक्तप्रकारेण क्रीड्यमानोऽनिष्टक्रीडां कार्यमाणः । पीड्यमान इति वा पाठः ॥ १३ ॥ मन्युना प्रचलितानि क्षोभितानींद्रियाणि यस्य ॥ १४ ॥ अंतकं मृत्युं ॥ १५ ॥ दष्टोदच्छदोऽधरोष्ठो येन स तथा ॥ १६ ॥ अंसभुवि अंसप्रदेशे । भो सौम्य विदुर । तां गदामप्राप्तमेवाहनत् । कोविदो गदायुद्धमार्गनिपुणः ॥ १७ ॥ हर्यक्षो हिरण्याक्षः । जिगीषयैवेत्यन्वयः ॥ १८ ॥ स्पृधोः स्पर्धमानयोः क्षतस्रवस्य रक्तस्याघ्राणेन विवृद्धं युद्धं ययोस्तौ तयोरिलायां निमित्तभूतायां शुष्मिणोवीर्यवतोर्वृषभयोरिव मृधो युद्धं व्यभाद्विशेषेण प्रकाशितं । दार्ष्टांतिक इला भूमिः ॥ १९ ॥ यज्ञास्तत्साधनानि चावयवेषु यस्य स तथा मायया स्वेच्छया मह्यां निमित्तभूतायां द्विषतोः । स्वराड्र्ध्वलोकपालो ब्रह्मा ॥ २० ॥ आसन्नशौंडीरमुपात्तं युद्धकौशलं येन । अपेतसाध्वसं गतभयं । अहार्योऽपहर्तुमशक्यो विक्रमो यस्य स तथा । तं विलक्ष्य दृष्ट्वा भगवान् ब्रह्मा । सहस्रणीशब्दमप्रतीत्या व्याख्याति ॥ अनेकेति । अत्र कल्प शब्दो दैनंदिनपरः । अत्र क्षतस्रवेत्युक्त्या भगवतोऽपि क्षतशुष्मिणोरिवेत्युक्त्या वैरिसमत्वमुत्तराध्याये सा हता तेन गदया

विगता भगवत्करादिना पराजितस्त्वं जगाद नारायणमित्यादिना भगवतश्चतुर्मुखोपदेशोक्त्याऽज्ञत्वं च प्रतीयतेऽतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ अक्षत इति । क्षतवत्क्षतवानिवाज्ञ इवेत्यन्वयः । अनुसारतयैवेत्यन्वयः । असुरजनमोहनार्थमिति भावः । तथा च मूले जगाद नारायणमित्यादिकं हर्यभिप्रायानुसारेणासुरजनमोहनार्यैवेत्युक्तं क्षतादिकं च तदर्थमेव प्रदर्शितमिति भावः ॥ २१ ॥ दैत्यस्य वध्यत्वप्रयोजकान्दोषानाहुः ॥ एष इति । हे देव । द्रव्यदाराद्यपहारेणागस्कृद्वधादिना भयकृदग्निहोत्रादिनाशेन दुष्कृत् । तत्र निमित्तमाहुः ॥ अस्मल्लब्धेति । अन्वेषन् । प्रतिभटामिति शेषः । कंटकः कंठकवद्दुःखप्रदः ॥२२॥ ॥ २३ ॥ मा आक्रीड । यद्यस्मादाशीविषमित्यत्र विशेष शब्दस्यावृत्तिः सर्पविषमुत्थितमुज्वलितं तस्मात् ॥२४॥ स्वामासुरीं । हे देव । मायां माहिमानं । आसुरीं वेलामेवाह ॥ एषेति । अत्र शंवट्करीरीत्यस्यार्थाप्रतीतेस्तज्ज्ञापनायाभिधानं पठति ॥ आदरामिति । भक्षणं नाशनं विद्यादित्यन्वयः । तथा च नाशकरीति तदर्थ इति भावः ॥ २६ ॥ अयमेव वधे समीचीनः काल इत्याह ॥ अधुनैवेति । अस्मिन्नेव समये मौहूर्तिकः सुमुहूर्तसंबंधी योगोऽभिजिन्नामकालविशेषोऽभ्यगात्प्राप्तः । अतः सुहृदां नः शिवाय दुस्तरमेनं निस्तर जहि । अत्राभिजिच्छब्दार्थं प्रमाणेनैव दर्शयति ॥ मध्यान्हास्त्विति । आषाढोत्तर उत्तराषाढोत्तरार्थः । एव शब्दोऽत्रोक्त एव कालोऽभिजिन्नामा नान्य इत्यर्थकः । विषुवं विषुवकालः । दिवारात्र्योः साम्यवान्काल इति यावत् । तथा चात्र मध्यान्ह एवाभिजिच्छब्देन विवक्षित इति भावः ॥ २७ ॥ २८ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥ ३-१९ ॥ ॥

॥ हरिः ॐ ॥ निर्व्यलीकं निष्कपटाभिप्रायं । ऋतं सत्यार्थः । कालनियामकस्यापि मम मुहूर्तबलमुपदिशतीति प्रहस्य । अपांगेन कटाक्षेण ॥ १ ॥ मुखतः पुरतो हनौ कपोलस्याधो भागे हस्तेन वराहेणान्नतस्यासुरस्य हनौ कथं हननं कृतामत्यत उक्त ॥ उत्पत्येति ॥ २ ॥ विघूर्णिता विशेषेण भ्रमेण युता ॥ ३ ॥ तद्गदापतनं तेन तस्य लब्धवीर्यो लब्धावसरो मृधे धर्मं निरायुधः सायुधेतरेण न प्रहर्तव्यमिति धर्मं मानयन् । स्थित इति शेषः । तेन वाक्यभेदात्स इत्यस्यापौनरुक्त्यं । स चासौ धर्मश्चेति तद्धर्मस्तं । मानयामासेदं साध्विति पूजयामास । ननु पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरेः प्रिय

इति वचनात्कथं चाभक्तकृतस्य धर्मत्वमत्रोक्तमित्यतोऽत्र तात्पर्यं प्रमाणेनैव दर्शयति ॥ धर्म इति । सत्यं साधु विध्यनुसारितोक्तः । ज्ञानिभिरिति शेषः । असाध्विति प्रोक्तोऽपि यो हरेः प्रियः सोऽपि धर्म इत्यर्थः । तथा च नाभक्तकृतमपि प्रकृतं निरायुधेऽप्रहरणं हर्यप्रियमपि धर्म इत्युच्यते प्रेक्षावद्भिः । हरिणा च युद्धमर्यादासंरक्षणार्थं साध्विति प्रोक्तत्वात् । अत एव मानयामासेत्युक्तं । न तु मम प्रियमिति भावः । सुनाभं सुदर्शनं । अत्र सुनाभमस्मरदित्युक्त्या हरेरायुधाभावे वैरिहननेत्वसामर्थ्यं प्रतीयतेऽतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ यथेच्छयैवेति । तु शब्दोऽवधारणे । मनसैव देहत एवेति संबंधः । शस्त्रशब्देन तदादानं लक्ष्यते । तथा चानंतशक्तितः स्वेच्छयैव मनसैव देहत एवाऽपि वा कर्तुं शक्तो यो हरिस्तस्यैषा शस्त्रादानाख्या लीलैवेत्यर्थः । तथा च लीलैवास्मरदिति मूलार्थ इति भावः ॥ ५ ॥ व्यग्रं चंचलं । भ्रमदिति यावत् । चक्रं यस्य तं विषज्जमानं विशेषेण संगं प्राप्नुवंतं । तद्विदां तत्प्रभावज्ञानां ॥ ६ ॥ स हिरण्याक्षस्तत्खेचराणां वचनं । परिप्लुतानि क्षुभितानींद्रियाणि यस्य । स्वदंतच्छदं स्वाधरोष्ठमदशदष्टवान् ॥ ७ ॥ संचक्षाणः पश्यन्हतोऽसीत्युक्त्वा ॥ ८ ॥ शत्रोस्तां गदां वातरंहसा वायुवेगेन पदा प्राहरदित्यन्वयः ॥ ९ ॥ घटस्वोद्यमं कुरु । यतस्त्वं जिगीषसि जेतुमिच्छसि ॥ १० ॥ हतमानो नष्टगर्वः । यज्ञाय विष्णवे । अकार्यकरत्वे दृष्टांतो विप्राय विप्रमुद्दिश्याभिचरन् । कृत्यां प्रयुंजानः ॥ १३ ॥ खेऽत आकाशमध्ये । निशातनेमिना शितधारेण । हरिरिंद्रस्तार्क्ष्यस्य गरुडस्य पतत्रं पक्षं । ननु तत्र गरुडस्येंद्रापेक्षयाऽतिसमर्थत्वात्कथं तत्पत्रच्छेदनमिंद्रेण कृतमित्यत उक्तं ॥ उज्झितमिति । गरुडेन स्वयमेव त्यक्तमित्यर्थः । देवान्विजित्य स्वमात्रेऽमृतं नयता गरुडेन दधीचेर्महामुनेरस्थिभिर्निर्मितस्य वज्रस्य मोघत्वे कृते मुनेरवज्ञानिमित्तकोपभयाद्वज्रस्यामोघत्वसंपादनाय स्वयमेव त्यक्तं पतत्रं पुनरिंद्रोऽच्छिनदिति भावः ॥ १४ ॥ अराः संतस्येति आरि चक्रं तेन वृक्णे छिन्ने प्रत्येत्याभिमुखमागत्य विभूतिर्लक्ष्मीरस्यास्तीति विभूतिमत् ॥ १५ ॥ मनागीषदपि क्वाप्यंशे । द्वाभ्यां पिबतीति द्विपो गजः ॥ १६ ॥ योगमायेश्वरे योगसामर्थ्यवतामीश्वरे । अनेनासुर्या माया हरावकिंचित्करा इति सूचयति । अस्य विश्वस्योपसंयमं प्रलयं ॥ १७ ॥ पांसवं धूलिमयं । ईरयन्प्रेरितवंतः क्षेपणैः पाषाणक्षेपणयंत्रैः प्रहिता इव प्रेरिता इव दिग्भ्यो ग्रावाणः शिलाः ॥ १८ ॥ द्यौर्व्यो-

माभ्रोघैर्मेघसमूहैर्विद्युतस्ताटितः स्तनयित्नवो गर्जनानि तैः सहितैः ॥१९॥ दिग्वाससो नग्नाः ॥ २० ॥ हिंस्रा हिंसाविषयाः । छिंधि भिंधीत्येवं रूपा अतिवैशसा अतिक्रूराः । अश्रूयंतेति शेषः ॥ २१ ॥ विनाशं विनाशकारणं त्रिपादमृतं क्षेममभयामिति स्वरूपभूतांशत्रयवान् ॥ २२ ॥ भर्तुरादेशं त्वत्पुत्रो भगवान्हनिष्यतीत्येवं भूतं ॥ २३ ॥ उपोपात्यंतसमीपे वर्तमानममुं भगवंतं गूहमानः स्वबाव्हंतर्गतं कुर्वाणः स्वहस्तबंधाद्वाहिरवास्थितं ॥ २४ ॥ अहन् जघान । त्वाष्ट्रं त्वष्टुः पुत्रं वृत्रं मरुत्पातिरिंद्रः ॥२५॥ विश्वसृजा हरिणाऽवज्ञया करताडनमात्रेण परितो भ्रमद्गात्रं शरीरं यस्य। उदस्ते बहिर्निर्गते लोचने यस्य। विशीर्णा बाव्हादयो यस्य। नगेंद्रो वृक्षो लुलित उन्मूलितो नभस्वता वायुना ॥२६॥ संस्थितिं मरणं ॥२७॥ असतोऽमंगलाल्लिंगात्सूक्ष्मदेहाद्वराहस्य पूर्वपादयोरेव करत्वात्करेणाहन्नित्युक्तत्वेऽपि पदा हत इत्येतद्युज्यत इति ध्येयं ॥ ॥ २८ ॥ असद्गतिमसुराविष्टदेहं । समुदाया-भिप्रायमेकवचनं । कतिपयैस्त्रिभिर्जन्मभिः शापफलं । भुंक्त्वेति शेषः । स्थानं वैकुंठं पुनः प्रपत्स्यते । हेति प्रमाणप्रसिद्धिं सूचयाति ॥ २९ ॥ अखिलयज्ञानां तंतुर्विस्तारो यस्मात्स्थितौ स्थित्यर्थं सत्यं ज्ञानबलसमाहारस्तदात्मकमूर्तये । अरुंतुदो मर्मभेत्ता । निर्वृता आनंदभरिताः । अभूमेति शेषः ॥ ३० ॥ संसादयित्वा निहत्य पुष्करविष्टरः पद्मासनो ब्रह्माऽऽ-दिर्येषां तैः ॥३१॥ वराहचरितकथनमुपसंहराति ॥ मयेति । अनूक्तं गुरूपदेशमनुसृत्य कथितं । हे सुमित्र विदुर । क्रीडनकवत् क्रीडासाधनवत् ॥ ३२ ॥ उपश्रुत्येतः पूर्वं कथामिति शेषः ॥ ३३ ॥ करेणूनां करिणीनां ॥ ३४ ॥ ३५ ॥ कारणेन भूम्युद्धरणादिरूपेण सूकररूपस्य ॥ ३६ ॥ ३७ ॥ धन्यं धनावहं यशस्यं कीर्तिकरमायुराशिषां मनोरथानां च पदं स्थानं । वृद्धिकरामिति यावत् । प्राणानामिंद्रियाणां च पदं । गतिर्गम्यः । भवतीति शेषः । हे अंग ॥ ३८ ॥ इति श्रीभाग-वतटिप्पण्यां विंशोऽध्यायः ॥ ३—२० ॥ ॥

॥ हरिः ॐ ॥ स्वयं भवतीति स्वयंभूर्हरिस्तस्माज्जातो मनुर्ज्ञानी ब्रह्मा । प्रातितिष्ठंति जना अस्यामिति प्रातिष्ठितां सर्व-जनाश्रयां महीं भूमिमध्यास्य भूम्यां स्थित्वा । अधि शङ् स्थासां कर्मेति द्वितीया । अवरजन्मनां पश्चाज्जातानां यक्षादीनां प्राणिनां मार्गाय तत्तज्जात्युचितमार्गप्रदर्शनाय कानि द्वाराण्यध्यतिष्ठेत्केषु स्थित्वाऽसृजदित्यर्थः । तथा च स्वयंभूर्ब्रह्मा तस्मा-

ज्ज्ञातो मनुश्च कानि द्वाराणि सृष्टिसाधनान्यपत्यान्यधिष्ठितानि ॥ १ ॥ अस्योत्तरं विदुरमैत्रेयसंवादमुखेनैव वक्तव्यमित्याशयेनाह ॥ क्षत्तेति । अग्रजं धृतराष्ट्रं सापत्यं दुर्योधनादिभिः सहितमघवानपराधवानिति हेतोः कृष्णोक्तमंत्रानादरवानिति भावः ॥२॥ द्वैपायनादवमं स्वयोग्यतानुसारेण समं सर्वात्मना सर्वप्रकारेण । वाऽपि शब्दौ परस्परसमुच्चये । कृष्णं चेति संबंधः ॥३॥ कुशावर्ते गंगाद्वारे ॥४॥५॥ कीर्तन्यानि कीर्तनार्हाण्युदाराणि कर्माणि । यस्य हरेः ॥६॥ अर्पितमात्मानं शरीरमाधिकृत्य वर्तमानमिंद्रियजातमध्यात्मं येन स तथा ॥ ७ ॥ स्वमायया स्वेच्छया धृतक्रोडतनोर्धृतवराहदेहस्य गोरुद्धरणं भूम्युद्धरणरूपां लीलां हिरण्याक्षमवज्ञाय हतं निशम्य । भारतो विदुरः ॥ ८ ॥ प्रजापतिपतिर्ब्रह्मा प्रजासर्गे प्रजानां सृष्ट्यर्थं । प्रजापतीन्मरीच्यादीन् किमारभत किं किं सृष्टवान् यतस्त्वमव्यक्तमार्गवित् । मृग्यत इति मार्गः स्वरूपं परापराव्यक्तस्वरूपवेत्ता । ब्रह्मणो वेदं विशेषणं ॥ ९ ॥ एतज्जगदभावयन् उत्पादयामासुः ॥ १० ॥ स्वद्वितीयाः स्वभार्याः स्वतंत्रा अन्यानपेक्षाः कर्मभिरदृष्टैः सहकारिभिः संहताः परस्परापेक्षाः ॥ ११ ॥ किमारभतेति प्रश्नस्य यक्षादीनित्युत्तरं वक्तुं पूर्वोक्तां महदादिसृष्टिं पुनर्वक्ति ॥ दैवेनेति । ननूक्तस्य पुनरुक्तिर्व्यर्थेत्यतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ सृष्टाविति ॥ तारतम्यं ज्ञायत इति । यो यस्मात्पूर्वमुत्पन्नः सः तस्मादुत्तमो यो यस्मात्पूर्वं विलीयते स तस्मान्नीच इति देवानां सृष्टिलययोरुक्तयोस्तारतम्यं स्फुटं ज्ञायत इत्यर्थः । ननु तर्ह्येकवारोक्त्या तारतम्यं ज्ञातुं शक्यत्वाद्बहुशस्तद्वचनं व्यर्थमित्यत आह ॥ तारतम्येति । इष्यते यतः । तु शब्दोऽवधारणे । अत इत्यनेन संबध्यते । एतत्प्रकाशकं देवतातारतम्यप्रकाशकं । तदन्यत्क्रमेण लक्षणाल्पत्वादिकं बहुशः कथ्यते । तदपि तत्र महातारतम्यज्ञापनायैवेत्याह ॥ अन्यच्चेति । ननु महदादितत्त्वानां सृष्टिप्रलययोरुक्तयोः कथं देवानां तारतम्यज्ञानं व्याधिकरणत्वादित्याशंकायां सृष्ट्यादि प्रकरणेष्वभिमन्यमानतत्त्ववाचकशब्दैरभिमानिनो देवा अपि विवक्षिता अतो न वैयधिकरण्यमित्यभिप्रेत्य महदादितत्त्वाभिमानिनो देवान्प्रमाणेनैव दर्शयति ॥ महत इति । अन्ये इंद्रियादितत्त्वाभिमानिनो यथोदितं शास्त्रवचनमतिक्रम्य ज्ञेया इत्यर्थः । ननु तर्हि कथं कुत्रचिदन्यथोक्तिरित्यत आह ॥ व्यत्ययस्त्विति । वैपरीत्येनोक्तिरित्यर्थः । अवधारणार्थकस्य तु शब्दस्य भेद एवेत्यर्थः । आदि पदेन कल्यादिभेदग्रहणं । सृष्टौ सूक्ष्मसृष्टौ च मुक्तावप्ययमेव क्रम इत्यन्वयः ।

नियमेन । ज्ञेय इति शेषः । तु शब्दोऽवधारणे । मोहायैव ॥ ततश्चायं दैवेनेत्यादिमूलार्थः ॥ दुर्वितर्क्येणानुमातुमशक्येन दैवेनादृष्टप्रेरकेण सर्वोत्तमेन पुरुषेणानिमिषेण कालेन हेतुना जातः क्षोभः कार्योन्मुखसत्त्वं यस्य तस्माद्गुणत्रयादुक्तरीत्या भगवतो वासुदेवान्महानासीन्महत्तत्त्वं तदभिमानिनो ब्रह्मवाय्वादयश्च जाता इत्यर्थः । एवमग्रेऽप्यभिमानिसृष्टिरपि द्रष्टव्या ॥१२॥ महतो महत्तत्त्वांतर्गततमोभागात्तत्रापि तमोभागापेक्षया रजोभागानामेव महत्त्वमिति ज्ञापनाय रजःप्रधानादित्युक्तं । तेषु रजोभागेषु बहुतरं सत्त्वमस्तीति ज्ञातव्यं । त्रिलिंगो वैकारिकादिभेदेन त्रिस्वरूपोऽहंकारो जातः । तत्र यो भूतादिस्तामसोऽहंकारः स त्रिलिंगः । सात्त्विकादिभेदेन त्रिस्वरूपः । पंच चेति च शब्देन मनो दशेंद्रियाणि तदभिमानिदेहांश्चेत्यपि ग्राह्यं ॥ १३ ॥ तानि तत्त्वान्येकैकशः प्रत्येकं भौतिकं हिरण्यात्मकमंडं स्रष्टुमसमर्थानि संति । दैवयोगेन स्वप्रेरकहरिसंबंधेन संहत्यांशैः संयुज्य वाऽसृजन् ॥ १४ ॥ सोंऽडस्रष्टेश्वरस्तं । तत्र साग्रं साधिकं वर्षसाहस्रं तावति काले सलिले गर्भोदकेऽन्ववासीन्निर्व्यापार एव स्थितस्तं । कथं भूतः । निरात्मक आंडकोशः । ततो विराट्सृष्ट्यनंतरं प्रलये जाते सलिले प्रलयोदके ब्रह्मणा सहाध्यशयिष्टेति योजना । अत्र निरात्मक इत्येतदात्मरहित इति प्रतीतिवारणाय व्याख्याति ॥ निरात्मक इति । आत्मा परमात्मा । तथा चात्म शब्दो व्यक्त्युपलक्षको निर्गता पूर्वं न स्थिताऽऽत्मव्यक्तिर्यत्रेति व्याख्येयमिति भावः ॥ १५ ॥ सर्वजीवनिकायानां सर्वजीवाश्रयाणां लोकानामोक उत्पादकतया गृहस्थानीयं स्वयं सर्वजीवप्रधानः । स्वराट् ब्रह्मा ॥ १६ ॥ स पाद्मो ब्रह्मा यः सलिलाशये पूर्वप्रलयोदके शेते तेन भगवतानुविष्टः सन् पूर्वं यथा लोकानां संस्था स्थितिरभूत्तथैव स्वया संस्थया निर्मम इत्यन्वयः । अत्र स्वया संस्थयेत्यस्य विवक्षितमर्थं दर्शयति ॥ संस्थयेति । तथा च स्वया स्वसंबंधिन्या संस्थया भगवतः स्थित्या स्वस्मिन्ननुप्रविष्टभगवत्स्थितिसामर्थ्येनेति यावदिति व्याख्यानं सूचयति ॥ १७ ॥ छायया छायारूपां तनुमाश्रित्य । एवमग्रेऽपि व्याख्येयं । पंचपर्वाणं पंचभेदवतीं । पंचपर्वाणि निर्दिशति ॥ तामिस्रमिति । महातमो महामोह इति पंच पर्वाणं ॥ १८ ॥ कायं छायारूपं । सा रात्रिरभवदिति वाक्यमध्याहार्यं । क्षुत्तृषोः समुद्भवो यस्यां सा तथोक्ता तां ॥ १९ ॥ क्षुतृड्भ्यां । उपसृष्टा उपद्रुता मग्धुमत्तुं भक्षयितुं यतो वयं क्षुतृड्भ्यामर्दिता अत एनं पिबतेति कृपया मा रक्षतेत्येके । अन्ये

तु जक्षध्वं भक्षतेत्युच्चैः । वदंत इति शेषः ॥ २० ॥ देवो ब्रह्मा संविग्नो भीतः सन् मा मां मा जक्षत न भक्षत किंतु रक्षत । अहो यक्षरक्षांसि यस्माद्यूयं मे प्रजाः सुता भविष्यथ तस्मात्तत्र यैर्जक्षतेत्युक्तं ते यक्षा भविष्यथ । यैस्तु रक्षतेत्युक्तं ते रक्षांसीति ज्ञेयं ॥ २१ ॥ या या दिव्या दिवि भवा देवास्तास्ताः प्रभया तन्वा प्रमुखतोऽग्रभागेनासृजत् । अत्राऽपि साऽहरभवदिति ग्राह्यं । देवयंतोऽपि कांत्यादिमंतोऽपि । अहोऽहर्भूता तां प्रभाख्यां तनुमहार्षुर्जगृहुः ॥ २२ ॥ अदेवानसुरान् जघनतः प्रभाख्यतनोश्चरमभागात् । छायाप्रभासंधिदेशादिति यावत् । अतिलोलुपान्विषयलंपटान् ॥ २३ ॥ परापतत्पलायितवान् ॥ २४ ॥ उपव्रज्य प्राप्य । अस्तौषीदिति शेषः । भक्तयोग्यतानुरूपमात्मदर्शनं यस्य ॥२५ ॥ स्तोत्रप्रकारमाह ॥ पाहि मामिति द्वाभ्यां । प्रेषणेनेच्छया । त्वदिच्छानुसारेणेति यावत् । यभितुं मैथुनं कर्तुं ॥ २६ ॥ तवानासन्नौ न प्राप्तौ पादौ यैस्ते नासन्नपादस्तेषां ॥ २७ ॥ विविक्तमितरसर्वाधिकार्युत्तममध्यात्मं ब्रह्म देहगतांतःकरणवृत्तिरूपं पश्यतीति विविक्ताध्यात्मदर्शनः । ब्रह्मा स्वयं समर्थोऽपि मत्प्रीत्यर्थमेवेदं करोतीति जानन्निति यावत् । अत्रेत्युक्तो विमुमोचेत्युक्त्या पूर्वं ब्रह्मणस्तदज्ञानं पलायनादिकं चाशक्तिकार्यमुच्यते । तन्न वास्तवं । किंतु ब्रह्मणाऽसुरमोहनाय कदाचिदेवमपि प्रदर्शनीयमिति हरेरभीष्टं ज्ञात्वैवेति ब्रह्मणा प्रदर्शितमिति तात्पर्यं प्रमाणेनैव दर्शयति ॥ जानन्नपीति । अत्र ब्रह्मणो देहत्यागस्तस्य देवादिभिः स्वीकृतत्वं चोच्यते तत्कथं । ब्रह्मणोऽनेकदेहत्यागनिमित्तदुःखप्रसंगात् । देवानां स्वस्वशरीरेषु सत्सु योऽहरादिनामशरीरतया स्वीकाराभावाच्चेत्याशंकायामत्र विवक्षिततात्पर्यं प्रमाणेनैवाह ॥ व्यसृजदिति । मलवदित्यनेन देहत्यागे तस्य न क्लेश इति सूचयति । परा सृष्टिकाले व्यसृजदित्यन्वयः । बाह्यमधिष्ठानतया तत्काले स्वीकृतं न तु नैजं । तच्च देवदेहजातं देवादयो दैवतान्याभिमानिनो यस्य तत्तथा । अनेन देवादीनां तत्तद्देहस्वीकारोऽभिमन्यमानतयैवेति दर्शयति । मूले विमुमोच हेत्यनंतरं सा सायंतनी संध्या भवद्ब्रह्मणः पीडाभावसिद्ध्यै भगवानसुरमोहनाय तां संध्यां प्रमदाकृतिं दर्शयामासेत्यपि ग्राह्यं ॥ २८ ॥ नूपुराभ्यां क्वणती चरणांभोजे यस्यास्तां । मदेन विव्हले चंचले लोचने यस्यास्तां । कांचीकलापेन कांचीलक्षणभूषणेन विलसद्दुकूलं तेन छन्नमाच्छादितं रोधः कटितटं यस्याः सा तथोक्ता तां ॥ २९ ॥ अन्योन्याश्लेषया परस्परसंबंधेन । उत्तुंगावुन्नतौ निरं-

तरावकाशरहितौ पयोधरौ स्तनौ यस्यास्तां । नीलालकानां वरूथः समूहः सोऽस्या अस्तीति नीलालकवरूथिनी तां ॥ ३०–३२ ॥ तां संध्यां संध्यानाम्नीं ॥ ३३ ॥ हे भामिनि कांतिसंपन्न । रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रययोग्यं तेन दुर्भगान् तद्ग्रहणयोग्यभाग्यरहितान्नोऽस्मान् । विबाधसे कामबाणवशान्करोषि ॥ ३४ ॥ एतदेवाह ॥ यो वेति । उद्धुनोषि विमथ्नासि ॥ ३५ ॥ कंदुकक्रीडया चित्तक्षोभः । कुत इत्यतः कंदुकक्रीडावतीं वर्णयंति ॥ नैकत्रेति । हे शालिनि भार्ये । एकत्र न जयति न स्थिरीभवति । यद्वा । नैकत्रानेकगतिविलासेपु जयत्युत्कर्षेण वर्तते । पतदूर्ध्वं गच्छत्पतंगं कंदुकं । बृहतोस्तनयोर्भारेण भीतं मध्यं विषीदति । कृशत्वाद्भंगं प्राप्स्यतीव दृश्यते । जटावरूथो वेणीभारः । च शब्दाच्छ्रांत इत्यनुवर्तते । श्लाघित इत्यर्थः । अत उद्धुनोषीति भावः ॥ ३६ ॥ प्रमदायतीं प्रमदेवाचरंतीं ॥ ३७ ॥ भावगंभीरमिति क्रियाविशेषणं । आत्मानमात्मना जिघ्रंतीं । कांत्या सौंदर्येण । प्रहसनमात्मावघ्राणं च सौंदर्यानुभवचातुर्यविकारः । सा ज्योत्स्नाऽभवदिति ग्राह्यं ॥ ३८ ॥ कांतिरस्या जनकतयाऽस्तीति कांतिमती तां ज्योत्स्नां चंद्रिकां प्रियां मनोहरां ॥ ३९ ॥ तंद्रिणाऽऽलस्येन साजृंभणाऽभवदिति ग्राह्यं ॥ ४० ॥ जृंभणाख्या तनोः स्वभावं दर्शयति ॥ निद्रार्दीति । निद्रादिरूपेंद्रियविक्लेद इंद्रियोपरमः । भूतपिशाचानां स्वभावं दर्शयति ॥ तयेति । तया जृंभणाख्यया तन्वोच्छिष्टान् ग्रस्तान् धर्षयंति भ्रांतान्कुर्वन्ति । स्वचेष्टाविशेषान्कारयंतीति यावत् । तं चेष्टाविशिष्टमुन्मादं प्रचक्षते तज्ज्ञाः ॥ ४१ ॥ ऊर्जस्वंतामित्यत्रोर्ज शब्दार्थं प्रमाणेनैव दर्शयति ॥ ऊर्जमिति । सारान्नं श्रेष्ठान्नं । सदन्नमिति यावत् । तदेवेति । कदन्नस्य तेभ्यो निषिद्धत्वादिति भावः । ऊर्ज शब्दपर्याय ऊर्जस् शब्दोऽतो नासंगतिरिति ध्येयं । तथा चाजो ब्रह्मा परोक्षमतींद्रियभवनरूपदेहमाधिष्ठाय तत्रोर्जस्वं तमात्मानं मन्यमानस्तेन परोक्षेण देहेन साध्यादीनसृजादित्यर्थः ॥ ४२ ॥ ते साध्यादय आत्मनां स्वेषां सर्गो यस्मात्तं कायं ब्रह्मणा । त्यक्तमिति शेषः । ननूर्जस्वंतं मन्यमानः कस्मादसृजादित्यत आह ॥ साध्येभ्य इति । यद्यस्मात्कवयोज्ञानिनः साध्येभ्यः पितृभ्यश्च श्राद्धादिना सारान्नमेव वितन्वते ददात्यत एव तद्वंतं मन्यमानोऽसृजादित्यर्थः । अनेन स्रष्टुः स्वभाव एव सृज्यानां प्रायशो भवतीति सूचयति । अत एवात्र प्रकरणे स्रष्टुर्ब्रह्मणः सृज्याः स्वभावानुसारिण्यः क्रिया

उक्ताः ॥ ४३ ॥ तिरोधानं नामादृशस्यापि सामर्थ्यविशेषेणांतर्धानं । तथाभूतदेहेनेत्यर्थः । तमात्मानं स्वेन त्यक्तं तद्देहं ॥ ४४ ॥ किंनरान्नराभासान् किंपुरुषान्पुरुषाभासान् । स्वव्यापारविशेषलक्षणदेहेन । तमेव व्यापारविशेषमाह ॥ मानयन्निति । अत्मना स्वेनैवात्मानं स्वमात्मानं मानयन् श्लाघयन् आत्माभासं स्वप्रतिबिंबं दर्पणादौ विलोकयन् असृजदित्यन्वयः ॥४५॥ तद्रूपं स्वात्ममानस्वप्रतिबिंबावलोकनलक्षणदेहं जगृहुः । तादृशस्वभावास्तदभिमानिनो देवा जाता इत्यर्थः । व्यापारद्वयजन्यत्वान्मिथुनीभूयेत्युक्तं । अनेन तेषां कर्म दर्शितमिति ज्ञातव्यं ॥ ४६ ॥ भोगवता सर्पशरीराकारवता देहेन शयानो ब्रह्मा बहुचिंतया जातक्रोधात्तत्सर्पाकारं वपुः ॥ ४७ ॥ तस्मादेकस्माच्छरीरादुत्पन्नानामवांतरभेदे कारणं सूचयन्नाह ॥ य इति । अमुतोऽमुष्माच्छरीराद्येकेशाः अहीयंत त्यक्ता आसंस्तेऽहयोऽहिनामका विसर्पतो विविधसर्पणावतोऽमुतः । तेषां स्वभावमाह ॥ क्रूरा इत्यादिना । न गच्छंतीत्यगा अगा न भवंतीति नागा अतिवेगेन गंतार इत्यर्थः । भोगोरुकंधरा इत्यत्रोरु शब्दस्य पूर्वोत्तराभ्यां संबंधः । ततश्चोरुभोगाः फणैरुर्व्यः कंधरा येषां ते उरुकंधरा इत्यर्थः ॥ ४८ ॥ आत्मभूर्ब्रह्मा बाह्यं पुरुषदेहं गृहीत्वाऽऽत्मानं कृतकृत्यमिव मन्यमानो यदाऽभूत्तदा तस्यामवस्थायामंते इतरसृष्ट्यवसाने मनसा लोकभावनान् लोकवृद्धिकरान्मनून्ससर्ज ॥ ४९ ॥ तेभ्यो मनुभ्यः । तदुद्देशेनेति यावत् । आत्मनः स्वस्य देहं बाह्यं पुरुषं देहं त्यक्त्वाऽदात् । कृतकृत्यमिव मन्यमानस्य फलमाह ॥ तानिति । तान्पुरुषदेहान्मनून् । अत्र ये पुरा सृष्टा असुरादयस्ते यच्छब्देन परामृश्यंत इति प्रतीतिवारणाय यच्छब्दपरामृश्यान्दर्शयति ॥ ये पुरेति । आदिसृष्टिकाले सृष्टा देवा एव यच्छब्दपरामृश्या इत्यर्थः । कुत इत्यतोऽत्र समाख्यामाह ॥ दृष्ट्वा त्विति । सुकृतमित्यूचिरे ॥ ५० ॥ एतदेव विशदयति । हे जगतः स्रष्टः । ते तवैतत्कृतं कर्म सुष्ठु कृतं पर्याप्तं ततोऽधिकं नास्तीत्यर्थः । बतेत्यनेन ता अब्रुवन्सुकृतं बतेति श्रुतिर्मानं । किंच यस्मिन्मनुसर्गे क्रिया यागाद्याः प्रतिष्ठितास्तासु क्रियास्वन्नं हविरादिकं साकं त्वया सह मिलिता वा ॥ ५१ ॥ इतरवैलक्षण्यद्योतनायादौ जातामपि ऋषिसृष्टिं पश्चादाह ॥ तपसेति । अभिमताः प्रजाः स्वाभिमतप्रजारूपान् ॥ ५२ ॥ अंशमेकदेशं । तस्येत्यनेन परामृश्यं दर्शयति ॥ यत्तदिति । स यो देहः समाध्यादिमान् तस्योक्तविशेषणविशिष्टस्य देहस्यैकदेशं प्राधान्येनैकैकविशेषणविशिष्टत्वरूपस्वभावमदादि-

त्यर्थः । अत्र ब्रह्मकर्तृकसृष्टौ हृषिकेश इति कथं हरेः कर्तृत्वमुच्यत इत्याशंकां प्रमाणेनोदाहरणपूर्वकं परिहरति ॥ यत्रापीति । तु असाधारणं नाम तदन्यत्र हरेरन्यत्र ब्रह्मादौ । तदांतरहरेस्तस्यांतरोंऽतस्थो यो हरिस्तस्य । अन्यथा यत्र प्रयुज्यते तस्यैव गृहीतिर्न भवेत् । तथा च हृषीकेशादिशब्दो न ब्रह्मपरः किंतु तदंतस्थहरिपर एवेति भावः । नन्वेवमस्मिन्प्रकरणे ब्रह्मणः सृष्टिकर्तृत्वाभिधायकशब्दानां का गतिरित्यतस्तेऽपि तदधीनत्वादिति न्यायेन स्वातंत्र्येण निमित्तेन हरिपरा एवेत्याशयेनाह ॥ अवरत्वं चेति । अवरगतप्रवृत्तिनिमित्तकः शब्द इत्यर्थः । परस्योत्तमस्य स्वातंत्र्यात् । अवरगतप्रवृत्तिनिमित्तस्वातंत्र्यात्तस्मिन्नपि प्रयुज्यते । न केवलं प्रवृत्तिनिमित्ताश्रय इत्यपि शब्दार्थः । तथा चावरे प्रयुज्यमानाः शब्दाः स्वप्रवृत्तिनिमित्ताधिकरणे तत्स्वामिनि च प्रवर्तंत इति भावः । अत्रोदाहरणं दर्शयति ॥ स्थितस्यापीति । युद्धार्थमागतस्यापीत्यर्थः । स्वानां स्वभृत्यानां भृत्यजयपराजयौ स्वभृत्यगतजयपराजयनिमित्तकौ जयपराजयशब्दावित्यर्थः । यथा भृत्ये जयिनि पराजयिनि वा राजा जयी पराजयी वेत्युच्यते तथेत्यर्थः ॥ अत इति । यत एवं ब्रह्मणः सृष्टिकर्तृत्ववाचकशब्दानां स्वातंत्र्येण निमित्तेन हरिपरत्वमत इत्यर्थः । तथा च हरिरेवात्र सृष्टिकर्तृत्वेनोच्यते । ब्रह्मा तु द्वारमित्येतत्प्रकरणतात्पर्यमिति सूचयितुं मूले हृषीकेश शब्दः प्रयुक्त इति भावः ॥ ५३ ॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ॥ ३—२१ ॥ ॥

॥ हरिः ॐ ॥ प्रकृतमनुऋषिकर्तृकां सृष्टिं श्रोतुकामस्तावत्स्वायंभुवमनुकर्तृकसृष्टिकथनं प्रार्थयते ॥ स्वायंभुवस्येति । च शब्दो हेत्वर्थे । यस्मात्परमत्वेन संमत इत्येधिरे एधांचक्रिरे ॥ १ ॥ वै शब्दः प्रसिद्धौ । धर्मं महीं वा यथा जुगुपतू ररक्षुस्तन्मे वदेति चतुर्थेनान्वयः । अनेन देवहूत्या भ्रातृमतीत्वं कन्यालक्षणं प्रदर्शितमिति ज्ञातव्यं ॥ २ ॥ ३ ॥ योगलक्षणैर्यमादिभिर्युक्तायां कतिधावीर्यं ससर्ज कति पुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥ मानवीं मनोः कन्यामाकूतिं प्रसूतिं च भार्यां लब्ध्वा यथा भूतानि ससर्ज तच्च वदेति चकारार्थः ॥ ५ ॥ सहस्राणां दशसमा दशसहस्रसंवत्सरानित्यर्थः ॥ ६ ॥ क्रियायोगेन वैदिकतांत्रिकभगवत्पूजालक्षणोपायेन संप्रपेदे । प्रपन्नेभ्यो भक्तेभ्यो वरदाशुषं वरदातारं ॥ ७ ॥ शब्दं वपुरित्यत्र शब्दात्मकं वेदलक्षणं वपुरित्यन्यथाप्रतीतिवारणायाभिमतं दर्शयति ॥ शब्दविषयमिति । तथा च शब्दं शब्दरूपवेदगम्यमत एव ब्रह्म गुण-

पूर्णं वपुः शुभाकारशरीरं दधदिति मूलार्थ इति भावः । शुभाकारतनौ वपुरित्यभिधानात् ॥८॥ शुभाकारमेव विशदयन्नाह ॥ सितमित्यादिना । सितानां शुभ्राणां पद्मानामुत्पलानां च स्रक् यस्य तं । स्निग्धा नीलाश्च येऽलकास्तेषां व्रातः समूहो वक्त्राब्जे यस्य तं ॥ ९ ॥ श्वेतोत्पलं क्रीडनकं क्रीडासाधनं यस्य तं । द्रष्टॄणां मनःस्पर्शे मनोहरे स्मितेक्षणे यस्य तं ॥ १० ॥ वक्षसि श्रीर्यस्य तं ॥ ११ ॥ स्वभावात्मा स्वः स्वतंत्रो भावो यस्य स स्वभावो हरिस्तस्मिन्नात्मा मनो यस्य स तथा ॥ १२ ॥ हे ईड्य सर्ववेदस्तुत्य । अखिलसत्त्वराशेर्बलज्ञानसमुद्रस्य तवाद्य दर्शनान्नोऽस्माकमक्ष्णोर्जुष्टं त्वत्प्रतिमादिदर्शनरूपं सेवनं तदिदानीं संसिद्धं । बत आश्चर्यं । कथमाश्चर्यमित्यत आह ॥ यादिति । रूढयोगा निरंतरध्यानादिमंतो योगिनो भक्तिपूर्वका एवमादि-वेसाधनवंतः सद्भिर्वेदाद्यधिकारोपेतैर्जन्माभिर्यत्तव दर्शनमाशासते तस्माद्दर्शनादित्यन्वयः । महता कालेन प्रयतमानानां योगिनां यद्भवति दर्शनं तद्दर्शनं तदल्पेनैव कालेनास्माकं जातमत आश्चर्यमिदमिति भावः ॥ १३ ॥ मोक्षप्रदोऽहं कथं स्त्रीकामनया त्वया सेवित इत्याशंकायां । सत्यं । त्वं मुमुक्षूणां मोक्षप्रद इतरपुरुषार्थकामनानां तत्प्रदोऽपि भवसि किंतु ते निंद्या इत्याह ॥ ये माययेति । ये निरयेऽपि स्युस्तेषां कामानां लवाय भवसिंधुपोतं संसारसमुद्रस्योत्तरणे तरीभूतं । मोक्षसाधनमिति यावत् । ये त्वत्पादारविंदमुपासते ते मायया बंधकशक्त्या हतचेतसो विनष्टबुद्धयः । त्वं तु तेषां तानपि कामान् रासि ददासि ॥१४॥ अत इदानीमहमपि तथा विधोऽस्मीत्याह ॥ तथेति । ते यथा कामलवाय त्वत्पादारविंदमुपासते तथेत्यर्थः । स चाहं निष्कामनया भजन्नेवाहं गृहमेधो गृहाश्रमस्तत्र धेनुमिव त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्दुराशयो दुरशोभने विषये आशयो यस्य स तथा । दुरशोभनदुःखयोरित्यभिधानात् । कामदुघांघ्रिर्यस्य कल्पतरुवदभीष्टसमस्तप्रदस्य वाऽशेषमूलमशेषपुरुषार्थकारणं मूलं पादमूलमुपेयिवाननुगतोऽस्मि ॥ १५ ॥ ननु निष्कामनया भजतस्तव कुत एवं कामनया भजने बुद्धिरित्यत आह ॥ प्रजापतेरिति । हे अधीश । प्रजापतेर्ब्रह्मांतर्यामिणस्तव वचसा गृहाश्रमं प्राप्य प्रजाः सृजत । तत्र मामर्चतेत्येवं वचनरूपया तंत्याऽयं लोको मरीच्यादिऋषिलोकः कामहेतोस्त्वदुक्तविषयसंपादनार्थं नितरां बद्धस्त्वदाज्ञाया अनुल्लंघनीयत्वात् । अहं च तल्लोकानुगतस्तद्वदेव तदाज्ञया बद्धो यतोऽतः । हे शुक्ल परमशुद्ध । अनिमिषाय सकलपदार्थनिरीक्षकाय कालनाम्ने तुभ्यं

वालिं पूजां वहामि प्रजाश्च सृक्ष्य इति चार्थः । किलेत्यनेनैवं कामनादिकमाधिकारिकत्वात्तेषां न निषिद्धमिति सूचयति । अनिमिषायेत्यनेन विध्यतिक्रमेण कर्मकरणे भगवांस्तेषां भयप्रद इति सूचितं ॥ १५ ॥ कालनामकोऽयमनिमिषः केषां सर्वथा भयप्रदो न भवतीत्यपेक्षायामाह लोकांश्चेति । लोकानुक्तरूपदेहान्वा लोकानुगतान्पुत्रादीनसून् जडेंद्रियाणि च हित्वा ते तव चरणरूपमातपत्रं श्रितास्त्वत्सामीप्यादिलक्षणां मुक्तिं प्राप्ताः । त्वद्गुणवाद एव सीधु पीयूषं सिंधुरमृतसमुद्रस्तदवगाहनेन निर्यापिता नितरां नाशिता देहधर्मा जरामरणादयो येषां ते तथा ॥ १७ ॥ यत्रिनाभि त्रीणि चातुर्मास्यानि नाभिर्यस्य तत्त्रिनाभि कालचक्रं तज्जगदाच्छिद्य तदायुरपहृत्य धावदपि येषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथं भूतं । अजरेजरादिदोषरहिते परब्रह्मरूपेक्षे भ्रमतीति भ्रमिः । गिरि शब्दवन्नियतलिंगत्वान्नपुंसकत्वाभावेऽपि न दोषः । अधिमासेन सह त्रयोदशमासा अराणि दलानि यस्य तत्तथा । त्रिशतं षष्ठिश्चाहोरात्राः पर्वाणि ग्रंथयो यस्य । शतशब्दविभक्तेरलोपश्छांदसः । षड्ऋतवो नेमयश्चक्रप्रांतदेशा यस्य तत् षण्णेमिकरालस्रोतः क्रूरवेगं । अनंतच्छिदीत्येतदप्रतीत्या व्याख्याति ॥ अनंतच्छिदीति । तथा च छद शब्दश्चक्रधारास्थानीयपरमाणुद्व्यणुकादिरूपावयवपर इति भावः । नन्वेवं छदमिति स्यात् । छिदीति कथमुक्तमित्यत आह ॥ तृतीयोऽतिशय इति । अतिशये द्योत्ये स्थान्यपेक्षया तृतीयो वर्णो भवतीति सूत्रार्थः । एवं चात्र छदानामानंत्येऽतिशयद्योतनायाकारस्थाने इकारस्तदपेक्षया तृतीयो जात इति भावः । अस्योदाहरणं दर्शयन्प्रयोगोऽप्यत्र साधक इत्याशयेनाह ॥ मथनादिति । मथानान्माथिल इति वक्तव्येऽतिशयद्योतनाय यथाकारस्येकारस्तृतीयो जातस्तद्वदित्यर्थः । एवं चातिशयेनानंताः छदाश्चक्रधारास्थानीयाः परमाण्वादिरूपावयवा यस्य तदनंतच्छदीति व्याख्येयमिति भावः ॥१८॥ जन्मादिकर्तृत्वादिसकलगुणपूर्णमप्राकृतविग्रहं भगवंतमवलोक्य श्रुत्यादौ यद्भगवत्प्रतीकतयोक्तं ब्रह्मांडादिकं तन्न भगवतो वास्तवं शरीरमित्याह ॥ एक इत्यादि श्लोकद्वयेन । स्वयमेक एव सन्नपि सिसृक्षया द्वितीयो वासुदेवनामा सन् आत्मन् आत्मन्यधिको योगो यस्याः साऽधियोगा सा च सा माया च तया नित्यावियोगिन्या मायारूपया श्रिययेत्यर्थः । अदो विश्वं स्वशक्यत्वाच्छक्तिभिः सत्त्वादिगुणैः । एवं जगज्जन्मादिकर्तृत्वविशिष्टमिदं त्वद्रूपं यतो यर्हि यस्मात्त्वय्यसाधारण्येन विद्यमानया लसंती

तुलसी यस्यां सा तथा तया मालया भगवानयमेव भगवानिति मया त्वं विलक्षित इतरविलक्षणतया ज्ञातः । अतः । हे अधीश । अनुग्रहाय भक्तानामुपासनार्थं मायया स्वेच्छयैव यद्भूतसूक्ष्ममुपलक्षणया महदाद्यात्म ब्रह्मांडाख्यं पदं स्थानं भगवान् जगृहे । एतत्तवेप्सितमिष्टं । स्वरूपभूतमिति यावत् । न किंतु प्रतिमास्थानीयमेवेति ज्ञातव्यमित्यर्थः ॥ २० ॥ एतादृशरूपं दर्शयतो भगवतो नमनमेव प्रतिक्रियेत्याशयेनाह ॥ तंत्वेति । अनुभूत्या स्वरूपानुभावेनोपरतो नित्यनिवृत्तः क्रियार्थो देहाद्या- पादककर्मफलविशेषो यस्य स तथा तं । स्वमायया स्वेच्छया वर्तितं प्रवर्तितं लोकतंत्रं लोकप्रवृत्तिसाधनं येन स तथा तं । अभीक्ष्णं पुनः पुनर्नमनीयपादसरोजं यस्य तं । एतदुपपादनायैवेतरविशेषणानि । अल्पीयसि भक्ते भजने वा कामान्वर्षतीति तथा तं ॥ २१ ॥ अव्यलीकमप्रियं यथा न भवति तथा प्रणतोऽमृतेन सुखकरेण प्रेमास्मिताभ्यां यदुद्वीक्षणमुत्कृष्टं निरीक्षणं तेन विभ्रमंती स्फुरंती भ्रूर्यस्य स तथोक्तः ॥ २२ ॥ प्रेमया तव चैत्यं चित्तस्थं भावं विदित्वैव समयोजितं संघटितं । तत्किमि- त्यतआह ॥ यदर्थमिति । यदर्थमेवेत्यन्वयः ॥ २३ ॥ मृषा वृथा संगृहीत एकाग्रीकृत आत्मा मनो यैस्ते तथा तेषां ॥ २४ ॥ पुरा मया समयोजीत्युक्तमेव दर्शयति ॥ प्रजापतीति । प्रजापतीनां मरीच्यादीनां पतिः । विख्यातं मंगलमभ्युदयं सदाचारादि- लक्षणं यस्य स तथा ॥ २५ ॥ हे विप्र कर्दम । महिष्या सह ॥ २६ ॥ असितापांगीं नीलांजनेन विनाऽपि नीलद्युतिनेत्रां तां ॥ २७ ॥ यत्र यस्यां भार्यायां समाहितमभिसंधानेन स्थितं । नृपवधू राजकन्या ॥ २८ ॥ याऽऽत्मनि धृतं ते वीर्यं रेतो- नवधा नव कन्यारूपेण प्रसविष्यति । त्वदीये वीर्ये त्वद्वीर्यप्रसूतासु नवसु कन्यासु ऋषयो मरीच्याद्या आत्मनस्तेजोगर्भलक्षण- माधास्यन्धास्यंति ॥ २९ ॥ निर्देशमाज्ञामपि समर्पणेन पवित्रीकृताया अशेषाक्रियास्तासां फलं यस्य ॥ ३० ॥ गार्हस्थ्यानंतरं चतुर्थाश्रमोऽपि त्वया स्वीकार्य इत्याशयेनाह ॥ कृत्वेति । दत्वा । भूतेभ्य इति शेषः । आत्मवान् जितमनस्कमप्यात्मानं स्वात्मानं जगच्च सह युगपदेव द्रक्ष्यसि मदाधारं पश्यसीत्यर्थः । आत्मनि स्वात्मनि स्थितं मा मां पश्यसि ॥ ३१ ॥ क्षेत्रे भार्यायां स्वांश शकलया स्वरूपभूतांशविभागेन त्वद्वीर्येण संभूय संभूत इव प्रदर्श्य तत्त्वसंहितां परापरतत्त्वप्रतिपादकं सांख्य- शास्त्रं प्रणेष्ये करिष्ये ॥ ३२ ॥ प्रत्यगक्षगः प्रत्यग्भूतेंद्रियविषयः सरस्वत्या नद्यः परिश्रितात्परिवेष्टितात् ॥ ३३ ॥ सिद्धैर्मृग्यत

इति सिद्धमार्गः । अशेषसिद्धेश्वरैर्ब्रह्मादिभिरभिष्टुतश्चासौ सिद्धमार्गश्चेति विग्रहः । पत्ररथाः पक्षिणस्तेषामिंद्रो गरुडस्तस्य पत्रै-रुच्चरितमभिव्यक्तं सामाधारभूतऋक्समुदायरूपं स्तुतिविशेषं तदारूढमुदीर्णमुत्कृष्टं साम चाकर्णयन् । उच्चारितस्तोमामिति पाठे उच्चारिताः स्तोमाः स्तुतिविशेषा यस्य सामाधारभूतास्त उदीर्णसामाकर्णयन्निति व्याख्येयं ॥ ३४ ॥ शुक्ले भगवत्येवं ब्रुवति सति तं कालं परश्व इत्युक्तं कालं प्रतिपालयन्प्रतीक्षमाणः ॥ ३५ ॥ शातकौंभाः सौवर्णाः परिच्छदाः परिकरा यस्मिन् तं । वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥ हे सुधन्वन्विदुर ॥३७॥ कर्दमाश्रमस्थसरसः । बिंदुसर इति कस्मान्नामेत्यतस्तत्र निमित्तमाह ॥ यस्मिन्निति । यस्मिन्सरसि । प्रपन्ने शरणागते कर्दमे ॥ ३८ ॥ तदाश्रमं वर्णयति ॥ पुण्यमित्यादिना । शिवमारोग्यकरममृत-वत्स्वादुजलं यस्मिन् ॥ ३९ ॥ कूजंतः पुण्या मृगा द्विजाः पक्षिणश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैः । युक्तमिति शेषः । अन्वितमित्यस्यात्रापि संबंध इति वा ॥ ४० ॥ उद्घुष्टमाघोषितं मत्तानां भ्रमराणां विभ्रमो विविधं भ्रमणं यस्मिन् बर्हा येषां संतीति बर्हिणो मयूरास्त एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । मिथ आव्हयंतो मत्तकोकिला यस्मिन् ॥ ४१ ॥ कदंबादिभिर्वृक्षैरलंकृतं ॥ ४२ ॥ कारंडवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितं ॥ ४३ ॥ हरिणादिभिर्मृगैर्वृतं । तत्र क्रोडाः सूकराः श्वविशो वृका गवया वन्या गावो गोपुच्छैश्चमरीभिर्हरिभिः सिंहैः कपिभिर्वा मर्कैर्वनमार्जारैर्मर्कटैर्वा नाभिभिः कस्तूरी-मृगैः ॥ ४४ ॥ ४५ ॥ उग्रो युक् योगो यस्य तेन वपुषा विद्योतमानं । अतिक्षामत्वाभावे हेतुद्वयमाह ॥ भगवत इत्यादि । ॥ ४६ ॥ तस्य भगवतो व्याहृतं वचनं तदेवामृतकलापीयूषममृतकलशश्चंद्रस्तद्वतं समीचीनममृतं भगवतः प्रकाशरूपत्वेनाल्हाद-कत्वेन च चंद्रस्थानीयत्वेन तद्वचनस्य तद्गतामृतस्थानीयत्वं । तस्य श्रवणेन तल्लक्षणपानेन चेत्यर्थः । प्रांशुमुन्नतं दीर्घमर्हणं यथा स्यात्तथोपसंसृत्य ददर्शेति पूर्वेणान्वयः । असंस्कृतमभ्यंजनादिसंस्कारवर्जितमत एव मलिनं ॥ ४७ ॥ उटजं पर्णशाला-माशीर्भिः प्रतिनंद्यानुरूपया राजयोग्यया सपर्यया पूजया प्रत्यग्रण्हात्सत्कृतवान् ॥ ४८ ॥ संयतं सम्यङ्नम्रं श्लक्ष्णया मधुरया ॥ ४९ ॥ हे देव नृप । चंक्रमणं पर्यटनं हि यस्मादतस्त्वं । सप्तसु प्रथमेति सूत्रात् । यस्मिंस्त्वयि पालिनी जगत्पालना गुणशक्तिरस्ति तस्मादित्यर्थः ॥ ५० ॥ ऋषिर्मन्वाविष्टं राजराजेश्वराख्यं हरिरूपं स्वोपास्यशुक्लाभिन्नं ज्ञात्वा प्रणमति ॥

योऽर्केति । यस्त्वमिति वर्तते । रूपाणि धर्मान् अर्कस्य प्रकाशकत्वमिंदोराल्हादकत्वमग्नेरधृष्यत्वमिंद्रस्यैश्वर्यवत्त्वं वायोर्वेगं यमधर्मस्य पुण्यापुण्यविवेकपूर्वकं शिक्षकत्वं प्रचेतसो वरुणस्य गांभीर्यमित्येतानीति यावत् । स्थाने तत्तदवसरे प्राप्ते सति आधत्से धारयसि । तस्मै शुक्लात्मने शुक्लनामकहर्याविष्टदेहाय । अत्रैवमावेशपरत्वेनैव व्याख्येयं नाभेदपरत्वेनेत्याशयेन स्वायंभुवमनौ हरेर्विशेषावेशसद्भावे हर्यभावे च प्रमाणमाह ॥ स्वायंभुव इति । एवकारयोस्तु शब्दस्य च तु विशेषेण विष्ण्वावेवायुता एव विष्णुस्वरूपका नैवांति संबंधः । अर्जुनौ कार्तवीर्यपांडवौ ॥५१॥ हरेः पालिनी शक्तिस्त्वय्यप्यस्तीत्युक्तं व्यतिरेकमुखेनोपपादयति ॥ न यदेति । जैत्रं जयशीलं । मणिगणा अर्पिता यस्मिन् विस्फुरन्नादं कुर्वच्चंडकोदंडं धनुर्यस्य ॥५२॥ स्वसैन्यस्य चरणैः क्षुण्णं संघुष्टं वेपयन्कंपयन् अंशुमान्सूर्यः ॥५३॥ वर्णाश्रमाणां निर्बंधनं नियमनं यैः । वर्णाश्रमधर्मनियमननिमित्ता इति यावत् । बत अहो ॥५४॥ व्यंकुशैर्निरंकुशैः । ततश्च किमित्यत आह ॥ शयान इति । न्यायान्यायविचारशून्य इत्यर्थः । न वर्णाश्रमधर्ममात्रविनाशः किंतु सर्वोऽप्ययं लोको दस्युग्रस्तश्चोरापहृतार्थः सन्विनंक्ष्यति ॥५५॥ यद्यप्येवं धर्ममार्गरक्षार्थं तव सर्वत्र पर्यटनं संभवत्यथाऽपि कार्यविशेषार्थमत्र तवागमनमित्यतो यदर्थं यस्य कार्यस्य सिद्ध्यर्थं त्वमिहागतस्तत्किमिति त्वां पृच्छे तदुच्यतां । वयं । तत्त्वया कथितं कार्यं निर्व्यलीकेन हृदा प्रीतियुतेनांतःकरणेन प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥३-२२॥

॥ हरिः ॐ ॥ एवमाविष्कृतोऽशेषाणां गुणानां कर्मणां चोदयं । विनयविशेषप्रदर्शनाय सव्रीड इवेत्युक्तं । उप समीपे स्वहृदये स्थितो यो अः परमात्मा तत्रैव रतं । वचनावसाने हरिं । ध्यायंत इति यावत् । हेत्यनेन मनोर्विनयमभिनंदति ॥ १ ॥ मनुः स्वचिकीर्षितं विज्ञापयिष्यन् त्वं धर्मसेतू रक्षक इति मुनिवचनस्य भवद्रक्षिता एव वयं धर्मसेतुरक्षका एवमस्माकं युष्माकं च परस्परमुपजीव्योपजीवकभावो हरिणैव पूर्वं कृतः । स एव भगवताऽस्माकं मुख्यरक्षक इत्युत्तरं तावदाह ॥ ब्रह्माऽसृजदित्यादिना । ब्रह्मा ब्रह्मांतगतो हरिर्युष्मान् ब्राह्मणान् अस्मत्परीप्सयाऽस्मद्रक्षणेच्छया छंदोमयान्वेदप्रधानान्योगो भगवद्भक्त्यादिलक्षणः ॥ २ ॥ अस्मान्क्षत्रियान् ब्रह्म ब्राह्मणजातिस्तस्य हरेर्हृदयं हृदयरूपांगस्थानीयं । क्षत्रं क्षत्रजातिः । अंगमितरांगस्थानीयं प्रियं प्रधानमंगमप्रधानमिति वा ॥ ३ ॥ सदसदात्मकः कार्यकारणव्यापी ॥ ४ ॥ इदानीं स्वविज्ञापितकार्यं

स्वीकाराय तद्दर्शनादिकं तावदभिनंदति ॥ तवेत्यादि श्लोकत्रयेण । धर्मं राज्यपालनादिरूपं ॥ ५ ॥ अकृतात्मनामजितमनस्कानां ॥ ६ ॥ अपावृतैरपगतावरणैर्जुष्टाः सेविताः सादरं श्रुता उशतीरुशत्यो निर्मलाः ॥ ७ ॥ एवं तमभिनंद्येदानीं स्वाभीष्टं विज्ञापयति ॥ स भवानिति सप्तभिः । श्रावितं विज्ञापितं ॥ ८ ॥ भ्रातृमतीत्वप्रदर्शनायाह ॥ प्रियव्रतेति ॥ ९ ॥ १० ॥ तत्तस्मात्प्रतीच्छ स्वीकुरु । गृहमेधेषु गृहस्थाश्रमयोग्येष्वनुरूपामनुकूलस्वभावां सौंदर्ये च स्वभावे च रूपमित्यभिधानात् ॥११॥ न प्रतिगृहीष्ये इति निराकरणं तव नोचितमित्याह ॥ उद्यतस्येति । उद्यतस्येति स्वतः प्राप्तस्य कामस्य विषयस्य प्रतिवादः प्रत्याख्यानं न शस्यते न धर्मशास्त्रानुकूलः । निर्मुक्तसंगस्यापि विषयापेक्षाशून्यस्यापि ब्रह्मचर्यादेरित्यर्थः ॥ १२ ॥ दातुमुद्यते मादृशे प्राप्तेऽन्योऽस्माकं दाता भविष्यतीत्यपि वचनं न भवादृशां यशोधनानां युक्तमित्याह ॥ उद्यतमिति । दातुमुद्यतं मादृशं राजानं कीनाशं कदर्यं । हतः स्यादिति शेषः ॥ १३ ॥ भवांस्तु सकामः । अतस्तदप्रत्याख्यानमनुचितमित्याशयेनाह ॥ अहं त्वेति । उपकुर्वाणो विवाहकामो वेदानधीत्य यो वर्णी विवाहार्थं गुरोः कुलात्कृतानुज्ञो निवर्तेत उपकुर्वाण उच्यत इति वचनात् ॥१४॥ बाढमित्युक्तमेव विशदयति ॥ उद्वोढुकाम इति । तव पुत्री च बाढं योग्या इत्याह ॥ अप्रमत्तेति । पतिशुश्रूषणेयत्ता विषयासक्तिवर्जिता । धर्मार्थकामहेतुर्या त्वप्रमत्तेति तां विदुरिति स्मृत्युक्तप्रकारेणाप्रमत्तेत्यर्थः । अप्रदत्तेति पाठेऽन्यस्मै वाच्याऽप्यदत्तेत्यर्थः । तथा च परामृष्टत्वशंकाभावाद्विवाहयोग्येति भावः । चतुर्णां विवाहविधीनां मध्येऽयमाद्यः प्रथमो ब्राह्मः शक्त्या कन्यामलंकृत्यागताय वराय यत्र सा प्रदीयते स ब्राह्मः । विधिरस्त्विति शेषः ॥ १५ ॥ हे नरदेव नृपते । अस्याः पुत्र्या यः समाम्नाय विधौ दशास्यां पुत्रानाधेहि पतिमेकादशं कृधीत्यादिवेदवाक्ये प्रतीतः प्रसिद्धः कामः सुप्रजावत्वादिरूपः । स भूयाद्भवेत् । य उक्तरूपो मम कामः स तेऽस्याः पुत्र्याः सकाशाद्भूयादिति वा । अत्र स्वांगकान्त्या श्रियं क्षिपतीमिव स्थितामिति प्रतीतार्थस्य बाधितत्वादबाधितां योजनां दर्शयति ॥ स्वयेति । तथा चान्याः स्थितामिति पदद्वयमध्याहृत्य योजनीयमिति भावः ॥१६॥ विश्वावसुर्गंधर्वः संमोहेन कालकृतकश्मलेन विमूढं व्याकुलं चेतो यस्य ॥१७॥ ललनानां स्त्रीणां ललामां भूषणभूतामसेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्ते तथा तैः पुरुषैरदृष्टामित्यनेन लक्ष्मीप्रसादवद्भिरेव प्राप्यत्वमुक्तमिति ज्ञातव्यं । मनोः

सुतामिति मूलं। उच्चपद उत्तानपादस्य स्वसारं भगिनीमित्यनेन भ्रातृमतीत्वं। अभिजातः सत्कुलीनः। अनेनात्मनस्तद्वरणयोग्यतामाह ॥ १२ ॥ भजिष्ये स्वीकरिष्ये समयेन कालविशेषावधिकेन संकेतेन । तमेवाह ॥ यावदिति । इयं तव पुत्रीति यावत्। यावता कालेन मे आत्मनो मद्देहाच्च्युतं तेजोवीर्यं बिभृयात् । अपत्यवती स्यादिति यावत् । तावंतमेव कालं भजिष्ये । अत एतस्मात्कालादनंतरं पारमहंस्याः परमहंसाश्रमसंबंधिनो अत एव मुख्या ये धर्मास्तान् शुक्लेन शुद्धेन भगवतोपदिष्टान् अहिंस्रान्यागीयपशुहिंसादिवर्जितान् बहुमन्येऽनुतिष्ठामि ॥१९॥ इदं न मया स्वबुद्ध्योच्यतेऽपि तु भगवतैवमुपदिष्टमित्याह ॥ यत इति। यत्र यस्मिन्नवतिष्ठते प्रलये । एतानि विशेषणानि तदाज्ञाया अनुल्लंघ्यत्वसूचकानि । पतिर्ब्रह्मांतर्यामी परं प्रमाणं मुख्योपदेष्टा। अस्मिन्नर्थे इति शेषः ॥ २० ॥ हे उग्रधन्वन् विदुर । इयदेवैतावदेवोपगृण्हन्ध्यायन् । अनेन यावता प्रयोजनसिद्धिस्तावदेव योगिभिर्व्यक्तव्यं नाधिकमिति सूचयति । मुखेन स्वमुखेन देवहूत्याश्रेता लुलुभे प्रलोभितवान् । अयमेव मत्पातित्वयोग्य इति तस्या भावमुत्पादितवानित्यर्थः ॥ ११ ॥ स मनुरनु एवमृषिवचनानंतरं माहिष्याः शतरूपाया दुहितुश्च व्यवसितं निश्चयं ज्ञात्वा ददावित्यन्वयः ॥ २२ ॥ पारिबर्हान्विवाहकाले वरवध्वोर्दीयमानानि द्रव्याणि गृहवासपरिच्छदान् गृहाश्रमोपयुक्तोपकरणानि च ॥ २३ ॥ प्रत्वा दत्वा सदृक्षाय सदृशाय गता व्यथा चिंता यस्य ॥२४॥ शिखाः केशानासिंचन् ॥२५॥२६॥ ऋषिकुल्याया ऋषिकुलप्रियाया रोधसोस्तीरयोः स्थितानामुपशांतानामतिशयेन भगवन्निष्ठानां ब्रह्मावर्तप्रजाः । ब्रह्मावर्तनामकदेशस्थाः प्रजाः पतिं स्वामिनं ॥ २७ ॥ २८ ॥ कोऽसौ ब्रह्मावर्तदेश इत्यत आह ॥ बर्हिष्मती नाम पुरीति । सेतरपुरीभ्योऽपि पुण्यतमेत्याशयेनाह ॥ न्यपतन्निति । यत्रेत्यस्यापि संबंधः । यत्र बर्हिष्मतीप्रांतदेशे यज्ञस्य यज्ञवराहस्य रोमाण्यपतन् ॥ २९ ॥ रोमाणि तत्र पतितानीत्यत्र ज्ञापकमाह ॥ कुशा इति । कुशकाशसंज्ञा दर्भविशेषाः । त एव रोमाण्येव । विधेयलिंगापेक्षया त एवेत्युक्तं । रोमाणां तत्र पतित्वादेव कुशकाशसमृद्धिस्तत्र जातेति भावः । अत्र हरिरोम्णां कुशकाशाभेदः प्रमाणविरुद्धः कथमुच्यत इत्याशंकायां प्रमाणेनैवात्र विवक्षितं तात्पर्यं दर्शयति ॥ ज्ञानानंदेति । अनेन प्रतीतार्थग्रहणं बाधकं सूचितं । वराहवपुषोऽस्य विष्णोरित्यनेन यज्ञस्येत्येतदुक्तार्थं। आदिपदेन काशा धुन्वतः । स्वांगमिति शेषः । प्रयाग

इत्यनेन प्रयाग एव बर्हिष्मतीति सूचयति । तु शब्देन तत्र कुशकाशादीनां बाहुल्यं सूचयति । आसन्नित्यस्यार्थः ॥ अभूवन्निति । तथा चात्र रोम्णां कुशादीनां जन्यजनकभाव एव विवक्षितो नाभेदः । ज्ञानानंदरूपैस्तैर्जडानां कुशादीनामभेदायोगादिति तात्पर्यमुक्तमिति ज्ञातव्यं । ननु तर्हि तत्र पतितानां रोमाणां किं तथैव स्थितिर्नेत्याह ॥ रोमाणीति । अत एव तत्क्षेत्रं पुण्यतममिति भावः । ननु तर्हि त एवासन्निति कथमित्यत उक्तप्रमाणानुसारेण तद्योजनां दर्शयति ॥ त एवासन्निति । तथा च प्रथमा पंचम्यर्थे व्याख्येयेति भावः । अत्र नियामकं सूत्रं पठति ॥ सप्तास्विति । सप्तसु विभक्त्यर्थेषु प्रथमा विभक्तिर्भवतीति सूत्रार्थः । भगवद्रोमोत्पन्नानां तत्रत्यानां कुशकाशानां माहात्म्यं दर्शयन्नाह ॥ ऋषय इति । यज्ञघ्नान्यज्ञविघ्नकरान् राक्षसादीन्यज्ञं विष्णुं ॥ ३० ॥ इदानीं बर्हिष्मती नामानिरुक्तिं दर्शयन्नाह ॥ कुशेति । कुशकाशमयं कुशकाशनिर्मितं यतो बर्हिषो गुणाद्दृढस्थानमक्षयं मोक्षाख्यं अनेनोत्तमफलसाधनबर्हिष्मत्वेन निमित्तेनास्या बर्हिष्मती शब्दवाच्यत्वमिति सूचयति ॥ ३१ ॥ बर्हिष्मतीं नामेति । उक्तनिमित्तेनेति शेषः । तस्यां विद्यमानं भवनमन्येषां धर्मार्थमोक्षाणामविरोधेनेत्यनेनेतरपुरुषार्थानुकूलानेव कामानेव बुभुज इति सूचयति ॥३२॥ प्रत्यूषेषूषत्स्वनुबद्धेन भक्तियुक्तेन ॥३३॥ योगमायासु योगप्रभावाल्लब्धाणिमादिसामर्थ्येषु निष्णातं नितरां स्थितं । तद्युक्तमिति यावत् । संस्रावयितुं हरिकथाश्रवणादिना श्लथयितुं ॥३४॥ एतदेवाह ॥ अयातयामा इति । अत्रायातयामपदांतर्गतयातयाम शब्दस्य प्रकृतसंगतमर्थविशेषं प्रमाणेनैवाह ॥ गतसारमिति । गतसारं निष्फलं । यातयामं यातयामपदवाच्यं । यत इह यातयाम शब्देन यामो याम इति शब्देन सार उच्यत इत्यर्थः । तथा च तस्य मनोः स्वांतरं स्वस्वामिकं मन्वंतरं यापयंति समापयंतीति स्वांतरयापना यामाः कालावयवविशेषा अयातयामा अगतसारा अनिष्फला आसन्निति मूलार्थ इति भावः ॥ ३५ ॥ एतदेवोपपादयितुं तस्य विशेषणान्याह ॥ शृण्वत इति । परिभूतं दूरीकृतं गतित्रयं तिर्यग्यातनातमोरूपं येन स तथा ॥ ३६ ॥ ननु मनुष्यत्वेन स्थितस्य मनोः शरीरादिक्लेशसंभवे कथं यातयामानामगतसारत्वमित्यत आह ॥ शरीरा इति । दिव्या अंतरिक्षप्रभवा मानुषाः शत्रुप्रभवा भौतिकाः शीतोष्णादिप्रभवाः । अत्र पर्यास इत्येतदप्रतीत्या व्याख्याति ॥ पर्यास इति । तथा च देवत्वापेक्षया पर्यासो विप-

योसौ वैपरीत्यं मानुषत्वेनावस्थानं तदाऽपीत्यर्थः ॥ ३७ ॥ धर्मशास्त्रप्रणेतृत्वाल्लोकहितकारित्वाच्च न तस्य क्लेश इत्याशयेनाह ॥ यः पृष्ट इति । नृणां वर्णाश्रमाणां च धर्मानिति संबंधः ॥ ३८ ॥ तदपत्योदयं तस्य मनोरपत्यं देवहूतिस्तस्योदयं प्रभावं ॥ ३९ ॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ३–२३ ॥ ॥

॥ हरिः ॐ ॥ पितृभ्यां मातापितृभ्यां प्रस्थिते गमने कृते सति । इंगितं चित्तस्थितं । तज्ज्ञाने कोविदा निपुणा भवानी पार्वती ॥ १ ॥ विस्रंभेणतत्तोपणे ममाभीष्टसिद्धिर्भविष्यत्येवेति विश्वासेन । आत्मशौचं मनसो देहस्य वा शुद्धिः ॥ २ ॥ दंभोऽविद्यमानमाहात्म्यप्रकटनं । अघं निषिद्धाचरणं । तेजीयांसं ब्रह्मापरोक्षज्ञानिनं ॥ ३ ॥ महाशिषोऽपत्यादिरूपाः ॥ ४ ॥ क्षामां ग्लानिं प्राप्तां कर्शितां कृशतां प्राप्तां पीडित आर्द्रीकृतचित्तः ॥ ५ ॥ यो देहिनामतीव सुहृत् । अयं स्वदेहः । समुचितं स्नानालंकारभोजनादिलक्षणं स्वयोग्यं कर्तव्यं प्रति नावेक्षितो न गणितः । उपेक्षित इति यावत् । यदर्थे यस्य मम प्रीत्यर्थं क्षपितुं कृशीकर्तुं कृशदेहदर्शनेनैवायं तुष्टः स्यादिति बुद्ध्येति यावत् । सोऽहमित्यन्वयः ॥ ६ ॥ आत्मयोगो भगवद्भक्तिलक्षणस्तैर्विजिता प्राप्ता । मदनुभावनया मत्सेवयाऽवरुद्धां फलदानाय स्वाभिमुखीकृतां दृष्टिमपरोक्षज्ञानसामर्थ्यं प्रपश्य । फलस्य सन्निकृष्टत्वाभिप्रायेणैवमुक्तं । वितरामि प्रकटीकरोमि । कथं भूतां दृष्टिं । अभयां पतनभयरहितफलदामशोकां शोकराहित्यप्रदां । मोक्षहेतुभूतामिति यावत् । येन मदीयेनापरोक्षज्ञानसामर्थ्येन मोक्षो भवति तज्ज्ञानसामर्थ्यं तुभ्यमैहिकपुरुषार्थप्रदमपि यथा स्यात्तथा प्रकटीकरोमीति भावः ॥ ७ ॥ ननु मदभीष्टदानाय ज्ञानसामर्थ्यमेव कस्मात्प्रकटनीयं । काम्यकर्मभिरपि तत्प्राप्तिसंभवादित्यत आह ॥ अन्य इति । अन्ये पुनः काम्यकर्मविशेषाः किं न किमप्यतितुच्छा इत्यर्थः । कुतः यत उरुक्रमस्य भगवतो भ्रुव उद्विजृंभो वक्रीभावस्तेन विभ्रंशिता विनाशिता अर्थरचना मनोरथा येषु ते तथा । भगवान्स्वभ्रूविलासेन कर्मलब्धान्मनोरथान्नाशयति । न ज्ञानसामर्थ्यलब्धानिति भावः । अतो निजधर्माणां गार्हस्थ्योचितधर्माणां दोहो येभ्यस्तान्वीक्रियाभिरप्यश्वमेधादिरूपविशिष्टकर्मभिरपि दुरधिगमान्प्राप्तुमशक्यान् अत एव दिव्यान् लोकविलक्षणान्विभवान्विविधान्विषयान् भुंक्ष्व यतः सिद्धासि मदनुभावनया दिव्यविभवभोगयोग्यासि ॥ ८ ॥ अखिलयोगमाया योगसामर्थ्यलभ्या

अणिमादयः सिद्धयस्तत्साधनभूतासु विद्यासु विचक्षणं निपुणं गताधिर्निश्चिंता संप्रश्रयो विनयः प्रणयः प्रेमस्ताभ्यां विव्हला गद्गदा तया गिरा व्रीडासहितोऽवलोकस्तेन विलसद्धसितं चाननं यस्याः सा ॥९॥ हे द्विजवृष ब्राह्मणश्रेष्ठ हे भर्तः। यद्ब्रवीष्येतत्सर्वं तव राद्धं सम्यक् सिद्धं । अमोघयोगमायानाममोघयोगसामर्थ्यवतां योगिनामधिपे त्वयि तद्योगसामर्थ्यमहमवैमि जानामि। किंतु यस्ते त्वया समयोऽभिहितो यावत्तेजो बिभृयादात्मनो म इत्येवं रूपः सः सकृत्सकृद्गर्भाधानपर्यंतः। यतः सतीनां वरीयसि पत्यौ अंगसंगो गुणप्रसवः पुण्यकरः । अनेनान्यस्य नीचस्यांगसंगः पापकर इति सूचयति ॥ १० ॥ अंगसंगार्थं च प्रथममिति कर्तव्यतां संपादयेत्याह ॥ तत्रेति । हे ईश । तत्रांगसंगविषये । इति कृत्यं साधनं यथोपदेशं कामशास्त्रविधिमनतिक्रम्योपाशिक्षोपकल्पय । येन साधनेनाभ्यंगभोजनपानादिना मे कर्शित एष आत्मा सिद्ध्येत रतिसमर्थो भवेत् । अतिरिरंसयाऽतीवरंतुमिच्छया ते त्वया । त्वद्दर्शनेनेति यावत् । कृतोऽभिवृद्धो मनोभवः कामस्तेन धर्षिताया मे कामोऽन्योऽपि मनोरथः सिद्ध्येत तदुपाशिक्षयेत्यन्वयः । आदौ तावत्सदृशं सार्वभौमपुत्र्या मम योग्यं भवनं विचक्ष्व विचारय ॥ ११ ॥ योगं तदुपायभूतोपासनाविशेषमास्थितः कुर्वन् । तर्ह्येव तदानीमेवाविरचीकरत्प्रकाशयामास ॥ १२ ॥ सर्वासामृद्धानामुपचयः समाहारस्तेन नोदर्कमुत्कृष्टमुपस्कृतं शोभितं ॥ १३ ॥ दिव्यान्यलौकिकान्युपस्कराणि भांडादिगृहोपकरणानि तैरुपेतं युक्तं पट्टिकाभिः पट्टवस्त्रनिर्मिताभिः ॥ १४ ॥ विचित्राणि माल्यानि पुष्पाणि यासु ताभिर्मंजु मधुरं यथा भवति तथा सिंजंतः षडंघ्रयो भ्रमरा यासु ताभिः स्रग्भिर्मालाभिः ॥ १५ ॥ विन्यस्तनिलयेषु विरचितप्रासादेषु कशिपुभिः शय्याभिः कांतं कमनीयं पर्यंको मंचस्तदादिभिश्च कांतं ॥ १६ ॥ १७ ॥ द्वास्सु द्वारेषु । विद्रुमदेहलीत्यत्र देहली शब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ देहलीति । तथा च विद्रुमनिर्मितद्वारसंबंधेन भातं शोभितमिति मूलार्थ इति भावः । वज्ररचिताः कपाट्योऽस्य संतीति वज्रकपाटिमत् ॥१८॥ चक्षुष्मंतो दीप्तिमंतः पद्मरागाद्या मणयो निर्मितैः खचितैर्वितानैर्वितानसमूहैः ॥१९॥ ननु कृत्रिमानां तत्राप्रसक्तिरित्यतः प्रसक्तिं दर्शयन् कृत्रिमानित्येतद्व्याख्याति ॥ कृत्रिमानिति । तथा च कृत्रिमान् शोभार्थं कृतान्हंसादीन्स्वान्ज्ञातीन्मन्यमानैरिति व्याख्येयमिति भावः ॥ २० ॥ विहारस्थानं क्रीडाप्रदेशो विश्रामः शयनगृहं । संवेश उपभोगस्थानं प्रांगणं गृहाद्बहिराजिरं प्राकाराद्बाहिर्यथो-

पजोषं यथासुखं । आत्मनः स्वस्यापि विस्मयकरमिव स्थितं ॥ २१ ॥ नातिप्रीतेन मलिनदेहत्वात्परिचारिकाऽभावाच्चास्मि-न्ह्रदे बिंदुसरसि ॥ २२ ॥ समादायाहृत्यारुहाधिरोह । शुक्लेन भगवता कृतं आशिषामाशास्यानामर्थानां ॥ २३ ॥ सरजं धूलिधूसरं वेणीभूतान् जटायितान् । मूर्धजान्केशान् ॥ २४ ॥ अंगं च बिभ्रत्यभ्यंगाभावादभिवृद्धं देहसंबद्धं यत्कल्मषं तन्मलं तदेव पंकं तेन संच्छन्नमाच्छादितनिजवर्णमत एव शबलौ विवर्णौ स्तनौ यस्य तत्सरस्वत्या नद्यः शुभानां जलानामा-शयमाश्रयभूतं । शुभजलाशया जलचरा यस्मिन्निति वा ॥ २५ ॥ सरस्यंतर्निमग्ना सती दशशतानि सहस्रसंख्याकाः कैशोर-वयसः षोडशवर्षवयस उत्पलगंधवद्गंधो यासां ताः स्त्रियः प्रोचुरित्यन्वयः ॥ २६ ॥ वयं कर्मकरीरतः शाधि आज्ञापय महत्या राज्ञा अर्हणयोग्येन स्नानेनाभ्यंगेन मनस्विनीं प्रसन्नमनसां नूत्ने नूतने ॥ २८ ॥ सर्वगुणैर्भक्ष्यभोज्यचोष्यलेह्यलक्षणैर्मधुरादि-षड्रसैर्वोपेतममृतलक्षणमासवं मदकरममृतासवं पानं पेयं ॥ २९ ॥ आदर्शे दर्पणे । अत्रापेक्षितं क्रियापदं पूरयति ॥ आदर्शे ददर्शेति । अन्यथा दृष्ट्वेत्यनुवादासंभवादिति ध्येयं । आदर्श इति न सप्तम्यंतं दर्पणवाचि किंतु छांदसं रूपमित्यभिप्रेत्य ददर्शेति तद्व्याख्यानमित्यप्याहुः । स्वमात्मानं स्वीयं देहं कृतं स्वस्त्ययनं मंगलं यस्य । लसन्मुखमित्यंतैर्विशेषणैर्विशिष्टमात्मानं ददर्श दृष्ट्वा च यदा सस्मारेत्यन्वयः । कुलस्त्री तु शिरःस्नानमुत्सवे स्नातुतैलतः । वारे वा पैत्रके कर्मण्यन्यदा कंठसंप्लवा इति स्मार्ताः । कृतं शिरःस्नानमभ्यंगो येन । भूषितत्वमेवाह ॥ निष्केति । निष्कं पदकं ॥ ३० ॥ कंठे ग्रीवायां यस्य ॥३१॥ श्रोण्योः पूर्व-पश्चिमश्रोणीभागयोः । रुचिकेन कंठाभरणविशेषेण मंगलद्रव्येण कुंकुमादिना वा । रुचिकं मंगलद्रव्ये ग्रीवाभरणदंतयोरित्यभि-धानात् ॥ ३२ ॥ सुभ्रुवा सुदता चक्षुषेत्येकवचनानि जात्यपेक्षाणि । एतैरलकांतैर्लसन्मुखं यस्य तं । कथं भूतेन चक्षुषा । श्लक्ष्णो मनोहरः स्निग्धः स्नेहयुक्तोऽपांगो नेत्रप्रांतेनावलोकनं यस्य तेन । पद्मकोशं स्पर्धत इति पद्मकोशस्पृक् तेन ॥ ३३ ॥ ॥ ३४ ॥ निशाम्य दृष्ट्वा योगगतिं योगमार्गं । सामर्थ्यमिति यावत् । संशयं विस्मयं ॥ ३५ ॥ संवीतौ कंचुकादिना परिवृतौ रुचिरौ च स्तनौ यस्य तत् ॥ ३६ ॥ जातभावो जातस्नेहः । हे अमित्रहन् ॥ ३७ ॥ तस्मिन्विमाने मुनिर्बभ्राजे । अलुप्त-महिमाऽपरिच्छिन्नमाहात्म्यः । उपचीर्णं शुश्रूषितं वपुर्यस्य । उत्कचक उद्गतदोष उत्कृष्टकुंतलो वा । कचः कलं दोषे च

कुंतले भ्रमरे तथेत्यभिधानात् । उद्गुणपानवीच्य इत्येतदप्रतीत्या व्याख्याति ॥ उद्गुणेति । उद्गुणेत्यस्य तात्पर्यं ॥ उत्तमेति । पानेत्यस्य ॥ अमृतेति । वीचयुक्तस्य ॥ वीचीयुक्त इति । मत्वर्थे यत्प्रत्यय इति भावः । तथा चोत्कृष्टा गुणा माधुर्यादयो यस्य तद्गुणमुत्तमं पानं पेयममृतं तस्य वीच्यस्तरंगास्ता अस्य संतीति तथा । यथेष्टममृतपानकर्तेति यावदिति मूलार्थ इति भावः । अत्र दृष्टांतमाह ॥ ताराभिरिति । उत्कच इत्युद्गुणपानेति च विशेषणद्वयं दृष्टांतोऽपि चंद्रे यथायोग्यं योज्यं । अत्र चंद्रवन्मुनिर्नभ इव विमानं तारा इव स्त्रियः ॥ ३८ ॥ तेन विमानेनाष्टलोकपानामिंद्रादीनां विहारो यस्मिन्कुलाचलेंद्रे मेरौ तस्य द्रोणीषु दरीष्वनंगः कामस्तस्य सखा यो मारुतः शीतसुगंधमंदानिलस्तेन सौभगं सौरतखेदपरिहारजं सुखं यासु । नुतः स्तुतो द्युधुनिः स्वर्गनदी गंगा तस्याः पातेन शिवः स्वनो यासुनिःतासु रेमे ललनावरूथी स्त्रीसमूहवान् ॥ ३९ ॥ वैस्रंभकानि देवोद्यानानि तेषु मानसे च सरसि ॥ ४० ॥ अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ कुत इत्यतः श्रीहरिचरणशरणानामसाध्यस्याभावादित्याह ॥ किं दुरापादानमिति । उद्दामचेतसामुत्कृष्टबुद्धीनां तीर्थं गंगापदोर्यस्य स तीर्थपत्तस्य हरेः ॥ ४२ ॥ गोलं मंडलं स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावंतं ॥४३॥ आत्मानं योगसामर्थ्यान्नवधा विभज्य नवशरीराणि गृहीत्वा मानवीं राममपि नवधा विभज्यातिरमयन्नितरां रमयन्रेमे ॥ ४४ ॥ आपच्येिन पत्या संगते-त्यत्रापीक्ष्य शब्दार्थ प्रमाणेनैवाह ॥ प्राप्तेति । पुमानिति शेषः । तथा च प्राप्तषोडशवर्षेण यौवनावस्थामापन्नेन पत्येति मूलार्थ इति भावः ॥ ४५ ॥ ४६ ॥ आत्मना स्वमनसाऽऽत्मवित्परमात्मानुसंधानवान्मुनिः स्वरूपं नवधा विधाय तामपि नवधा भावयं-स्तस्यां नवधा विभक्तायां रेतो गर्भमाधत्त । कुत एवं चकारेत्यत उक्तं ॥ सत्यसंकल्पेति । हरेः सत्यसंकल्पं वेत्तीति सत्यसंकल्प-विद्धरिसंकल्पं ज्ञात्वैवं कृतवानिति भावः ॥४७॥ स्त्रियः प्रजाः स्त्रीरूपाः प्रजा अपत्यानि प्रसवानंतरमुभावप्येकैकरूपवंतौ जाताविति द्रष्टव्यं ॥४८॥ प्रव्रजिष्यंतं चतुर्थाश्रमस्वीकर्तुमिच्छंतमुशती पुत्रेच्छावती पतिव्रता स्मयमाना बहिः । अंतस्तु विक्लवेन व्याकुलेन विदू-यता संतप्यमानेन ॥ ४९ ॥५० ॥ उपावाह संपादितवान् । अभयमैहिकमामुष्मिकं च । एतदेवाह ॥ ब्रह्मन्निति । दुहितृभिः समा दुहितृयोग्याः । एवमैहिकमभयं प्रार्थयित्वाऽऽमुष्मिकं तत्प्रार्थयते ॥ कश्चिदिति । कश्चित्पुत्रो विशोकाय मोक्षाय ॥५२॥ परि-

त्यक्तो विस्मृतः परमात्मा हरिर्यथा सा तथा तस्याः ॥ ५३ ॥ परं भावं तवोत्तमं योगसामर्थ्यं । तथाप्येवं मदीयदोषसद्भावेऽपि यतः परमभागवते त्वयि प्रसंगः कृतोऽतः सोऽभवाय मोक्षायास्तु ॥ ५४ ॥ एतदेवोपपादयति ॥ संयोग इति । निःसंगत्वाय वैराग्याय तद्वारा मोक्षायेत्याशयः ॥ ५५ ॥ यो धर्मं मोक्षं वा न संपादयति तस्य जन्म व्यर्थमित्याह ॥ नेहेति । इह भारते वर्षे । धर्माय धर्माख्यपुरुषार्थप्रयोजनाय कर्म क्रियमाणं । यस्य देहिनो व्यापारः स देही ॥ ५५ ॥ न मुमुक्षे मोक्तुमिच्छां न कृतवती ॥ ५७ ॥ इति श्रीभागवतटिप्पण्यां चतुर्विंशोऽध्यायः ॥ ३—२४ ॥ ॥

॥ हरिः ॐ ॥ निर्वेदं वैराग्यं वादितुं शीलमस्यास्तीति निर्वेदवादिनी तां। अत्र शालिनीमित्यस्यार्थं प्रमाणेनैव दर्शयति॥ मालिनीति । तथा च शालिनीं भार्यामिति व्याख्येयमिति भावः । शुक्रस्य भगवतो यदभिव्याहृतं संभूय स्वांशकलयेत्यादिरूपं वचनं॥१॥ आत्मानं त्वां मां च प्रति। अक्षरो देहनाशशून्यः ॥२॥३॥ स शुक्रस्त्वयाऽऽराधितः सन् ते औदर्यः पुत्रतयाऽवतीर्णो हृदयग्रंथिमहंकारममकाररूपं संसारबीजं छेत्स्यति। ब्रह्म चतुर्मुखं भावयतीति ब्रह्मभावनः। ब्रह्म परं ब्रह्म भावयत्युपदिशतीति वा ॥४॥ श्रद्धाथ विश्वस्य॥५॥ बव्हस्थितयोऽवयवभूता यस्य कालस्य बहुतिथयस्तास्मिन्काले गते सति। कार्दमं वीर्यं रेत आपन्नः प्रविष्टस्तस्यां देवहूत्यां जज्ञे। अत्र शुक्रशोणितसंबंधेनास्मदादिदेहवद्भगवद्देहो जात इति प्रतीयते ।न चाप्राकृतविग्रहे तत्संभवति। अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ नावतारेष्वपीति । काले दशमे मासि । तथा च लोकमोहनाय भगवतैवं प्रदर्शितं । यत्तत्रानूदितं न तु वास्तवमुक्तमतो न कोऽपि दोष इति भावः । नन्वग्नेर्दारुव्यतिरेकेणानवस्थानवत्कापिलस्य देवहूतिव्यतिरेकेणावस्थानाभावात्कथं दारुण्यग्निरिवेति दृष्टांत इत्यतोऽस्य तात्पर्यमाह ॥ अग्निरिव दारुणीति । मात्र शब्देन तद्व्यतिरेकेण स्थित्यभावं व्यावर्तयति । अत एव जज्ञ इति व्यक्त्यर्थकजनिधातुप्रयोग इति भावः ॥ ६ ॥ घनाघना इत्येकं पदं वर्षंतो मेघा इत्यर्थः । जगर्जुरिति शेषः ॥ ७ ॥ अपवर्जिताः प्रक्षिप्ताः ॥ ८ ॥ परिप्लुतं चेष्टितं ॥ ९ ॥ सत्त्वेनेत्यस्य सत्त्वगुणेनेत्यन्यथाप्रतीतिवारणायात्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ महागुणाभिपूर्णत्वामिति । च शब्दो वामने पूर्वकृतसमुच्चयार्थः । तथा च सत्त्वेन महागुणपूर्णेनांशेन स्वरूपांशेन जातमभिव्यक्तमिति व्याख्येयमिति

भावः । स्वः परमात्मना राजत इति स्वराट् तस्य हरेश्चिकीर्षितं । कर्तुमिष्टं सांख्यशास्त्रनिर्माणं सभाजयन्पूजयन् । साध्विति बहुमानयन्निति यावत् । अत एव प्रकर्षेण हृष्यमाणैरसुभिरिंद्रियैः । चकाराद्देवहूतिं च ॥ ११ ॥ तत्रत्वयेति पंचभिः कर्दमं प्रत्याह । अपचितिः पूजा ॥ १३ ॥ सत्यः पतिव्रता । हे वत्स कर्दम । बृंहयिष्यांति वर्धयिष्यंति ॥ १४ ॥ ऋषिमुखेभ्यो मरीच्यादिभ्यः । विस्तृणीहि विस्तृतं कुरु ॥ १५ ॥ स्वमायया स्वेच्छया भूतानां मुक्तियोग्यानां शेवधिं पुरुषार्थसाधने निधिं शेवधिस्थानीयं देहं बिभ्राणं ॥ १६ ॥ इदानीं देवहूतिं प्रत्याह त्रिभिः ॥ ज्ञानेति । ज्ञानविज्ञानाख्ययोगेन मोक्षोपायेन कर्मणां संसारमूलभूतानि कर्माण्युद्धरन् उत्पाटयिष्यन् । हिरण्यकेशादिस्वलक्षणलक्षितः ॥ १७ ॥ तं तवाविद्याऽज्ञानमूलो भ्रमः संशयः परापरतत्त्वविषयकस्तयोर्ग्रंथिमूलकारणभूतं जडांतःकरणं तत्त्वविज्ञापनेन छित्वा गां भूमिमन्येषामपि भक्तानां तत्त्वविज्ञापनाय विचरिष्यति ॥ १८ ॥ नायं दुष्टकपिल इत्याह ॥ अयमिति । सिद्धगणानां ज्ञानिसमूहानामधीशः कुतः । यतः सांख्याचार्यैः सुसंमतः । अत्र दुष्टकपिलस्यापि सांख्याचार्यसंमतत्वात्तद्व्यावर्तनाय सांख्य शब्दार्थं प्रमाणेनैव दर्शयति ॥ सम्यग्ज्ञानं त्विति । तु शब्दोऽवधारणे । तदर्थस्तज्जनको यमनियमादिः । तथा च सांख्याचार्यैः सम्यग्ज्ञानप्रवर्तकैः सुसंमतः स्वगुरुत्वेन सम्यङ्निश्चित इत्यर्थः । दुष्टस्तु नैतादृश इति भावः ॥ १९ ॥ कुमारैः सनकादिभिः । सहेत्यस्य पूर्वोत्तरत्र च संबंधः । हंसो निर्मलो ब्रह्मा ॥ २० ॥ शतधृतौ शतसंख्याकगुणावधितारतम्यावधिभूते ब्रह्मणि विश्वसृजां मरीच्यादीनां ॥ २१ ॥ एतदेव विविच्याह ॥ मरीचय इति । कलां कालनाम्नीं । एवमुत्तरत्रापि ॥ २२ ॥ युक्तां योग्यामिति सर्वत्र विशेषणं ॥ २३ ॥ वितन्यसे संबद्धः क्रियसे । समलालयद्धनमानाभ्यां संतोषितवान् ॥ २४ ॥ कृतदारा विवाहितभार्याः । नंदं तोपमापन्नाः प्राप्ताः संतः ॥ २५ ॥ पुनः कर्दमचरितशेषं वक्ति ॥ स चेति । च शब्दार्थः प्रकृतत्वानुसंधनार्थः । अत्र त्रियुगमित्येतदप्रतीत्या प्रकृतसंगततया प्रमाणेनैव व्याख्याति ॥ युगत्रय इति । तथा च कृतादीनि त्रीणि युगान्यवतारार्थं यस्य स त्रियुगस्तामिति व्याख्येयमिति भावः । विविक्ते रहसि ॥२६॥ स्वाभीष्टं प्रष्टुं कापिलमभिनंदयन्नाह ॥ अहो इत्यादि सप्तभिः । निरये नरकतुल्ये संसारे पापच्यमानानां पुनः पुनर्भृशं दह्यमानानां स्वैः स्वीयैरमंगलैः ॥२७॥ बहुषु जन्मसु विपक्वेन सुप्रसिद्धेन ।

विपाकेनेति पाठे बहुभिर्जन्मभिर्विपाकः सिद्धिर्यस्य तेनेति व्याख्येयं। सम्यग्योगः समीचीनो भक्तियोगः। अष्टांगयोगो वा। तेन जातेन समाधिना चित्तैकाग्र्येण शून्यागारेषु विविक्तस्थलेषु ॥ २८ ॥ हेलनमवज्ञां न गणय्यागणयित्वा । उचितमेव तस्यैतदित्याह ॥ यः स्वानां भक्तानां पक्षमभीष्टं पुष्णातीति पक्षपोषण इति ॥ २९ ॥ भक्तानां ज्ञानमाभिवर्धनस्तेषामेव शर्म सुखं चिकीर्षुस्त्वं तव पुत्रत्वेनावतरिष्यामीति स्वीयवाक्यमृतं सत्यं कर्तुं मे गृहे भार्यायामवतीर्णोऽसीत्यन्वयः । भक्तशर्मकरणाय तमभिवर्धनाय स्ववाक्यसत्यत्वकरणाय चेत्यवतार इति गम्यते ॥ ३० ॥ एतदेव विशदयति ॥ तान्येवेति । अस्य श्लोकस्य प्रकृतसंगतां योजनां दर्शयति ॥ यानीति । यानि ब्रह्मादिरूपाणि ब्राह्मणादिशरीराणि स्वजनानां ब्रह्मादिदेवानां । व्यक्त्यर्थमिति शेषपूरणं । अवतारार्थं प्रवेशायाभिरूपाणि प्रियाणि भवंति । अत्र प्रमाणसंवादमाह ॥ व्यक्त इति । स्थानमित्यनेन रूप शब्द उक्तार्थः । सतां ब्रह्मादीनां ततश्चायं श्लोकार्थः॥ अरूपिणः प्राकृतशरीररहितस्य तवावताराय प्रवेष्टुं स्वजनानां ब्रह्मादीनां भक्तानामिह भूमौ यानि यानि रूपाण्यत्रिपराशरादिब्राह्मणशरीराणि वा दशरथवासुदेवादिक्षत्रियशरीराणि वा रोचंतेऽभीष्टानि भवंति। तान्येव तेऽभिरूपाणि प्रियाणि भवंति । अत इदानीमवताराय ब्राह्मणे मयि प्रवेशस्य ब्रह्माद्यभीष्टत्वान्मां प्रविश्य मद्गृहेऽवतीर्णोऽसीति भावः ॥ ३१ ॥ ऐश्वर्यमीश्वरत्वं । वैराग्यमितरस्यासारताज्ञानं । श्रीःसंपत् । ताभिः आ सम्यक् पूर्णं ॥ ३२ ॥ त्रिवृतमित्येतत्त्रिभिः सत्त्वादिगुणैर्वृतमित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति ॥ वेदैरिति । वृतत्वात् प्रतिपादितत्वात् । तथा च त्रिभिर्वेदैर्वृतं तात्पर्यतः प्रतिपादितमिति मूलार्थ इति भावः । आत्मानुभूत्या स्वरूपज्ञानेनानुगतोऽवगतो विषयीकृतः प्रपंचो येन स तथा तं । स्वच्छंदशक्तिं स्वेच्छानुसारिजगत्सृष्ट्यादिशक्तियुतं । नाम्ना कपिलं ॥ ३३ ॥ इदानीं स्वाभीष्टं कर्तुमाज्ञां पृच्छति ॥ तंत्वेति । उत शब्दोऽप्यर्थः । आप्तकामोऽपि परिव्राजां संन्यासिनां पदवीं मार्गं हृदि त्वां युंज्यन् त्वामुद्दिश्य मनोयोगं कुर्वन् ॥ ३४ ॥ त्वं कस्मान्मद्गृहे जात इत्याशंकायां तत्र निमित्तमाह ॥ मयेति । अत्र सत्यलौकिक इत्यस्याप्रतीत्याऽर्थमाह॥ सत्यलौकिक इति। सत्येत्यस्यार्थः॥ यथार्थेति । अबाध्येत्यर्थः। विषयविशेषणमेतत्। न तु ज्ञानविशेषणं। तथात्वे सत्यलोक शब्दात्प्रत्ययोत्पत्तौ सत्यपदे आदिवृद्धिप्रसंगात् । लोकपदस्यार्थः ॥ ज्ञानेति । प्रत्ययार्थः ॥ विषय इति ।

तथा च सत्योऽबाध्यश्चासौ लौकिको ज्ञानविषयश्च तास्मिन्निति मूलं योज्यमिति भावः । यथार्थं शब्दस्यार्थानतिक्रमार्थस्य ज्ञानविशेषणत्वे तु उक्तमूलयोजनालब्धार्थप्रदर्शनमेवेदं न व्याख्यानमिति द्रष्टव्यं । भवेदेवं व्याख्यानं यदि लोक शब्दो ज्ञानवाची स्यादित्यतस्तत्राभिधानं दर्शयति ॥ आभास इति । ततश्चायं श्लोकार्थः ॥ हे मुने । तुभ्यं पुत्रस्तेऽहं भविष्यामीति यदवोचं तद्दतं सत्य कर्तुं मयाजनि । ननूक्तमपि कस्मात्सत्यं कर्तव्यमित्यत उक्तं । हि यस्माल्लोकस्य सत्यलौकिकेऽबाध्ये ज्ञानविषये श्रुत्यादिप्रतीतार्थस्य बाध्यत्वनिर्णयायेति यावत् । मया प्रोक्तं मदीयवचनमितिहासपुराणादिरूपं प्रमाणं निर्णायकमथ तस्मान्ममानृतवादित्वे लोके मद्वचनेन श्रुत्यर्थं न कुर्यादिति भावः ॥ ३५ ॥ त्वद्गृहे मे जन्म न तवैवोपकारकं किंतु सर्वेषां सतामित्याह ॥ एतन्म इति । दुराशयाद्दुःखस्थानात्संसारात् । स्थानेऽभिप्राय आशय इत्याभिधानात् । प्रसंख्यानाय सम्यग्ज्ञापनायात्मदर्शिनां परमात्मापरोक्षज्ञानिनां समत्वाय साहित्याय । विशेषज्ञानलाभायेति यावत् ॥ ३५ ॥ नन्वात्मज्ञानमार्गः पूर्वसिद्ध एवास्त्यतः पुनस्तत्प्रदर्शनं तव किमर्थमित्यत आह ॥ एष इति । आत्मपथ आत्मज्ञानमार्गोऽव्यक्तः संप्रदायप्रवर्तकाभावात्तिरोहितः सन् ॥ ३७ ॥ कामं यथेच्छमापृष्टोऽनुज्ञातः संन्यस्तेनार्पितेन कर्मणा मृत्युं संसारकारणं मनः ॥ ३८ ॥ आत्मनि स्वरूपदेहे आत्मना मनसाऽभयं मोक्षमृच्छसि प्राप्स्यति ॥ ३९ ॥ मोक्षे वैराग्यं मुख्यसाधनमित्याशयेनाह ॥ विश्वमिति । अत्र विश्वमात्मानं चेश्वरं विज्ञायेत्यन्यथाप्रतीतिवारणाय योजनां दर्शयति ॥ विश्वमिति । एतदित्यस्यार्थः ॥ एतादृशमिति । एतादृश इत्युक्तमेव विवृणोति ॥ असारमिति । यत इत्यनयोरध्याहारः । अन्यथा वैराग्यस्येश्वरज्ञानसाधनत्वाभावात् । उपप्लव शब्दार्थं दर्शयन् न ख्यातीत्यस्य तात्पर्यमाह ॥ दुःखाज्ञानादीति । उपप्लव शब्द एवोपद्रववाची । दुःखाज्ञानादीत्येतद्योग्यतालब्धमुक्तं । न ख्यातीत्यस्य तात्पर्यं ॥ नेति । स्वरूपेणैवेत्यर्थः । अन्यथा न ख्याति न भासत इति तदनुभवनिषेध एव स्यान्न तु तस्येत्थं तात्पर्यमुक्तमित्यवगंतव्यं । मूले तु दुःखाद्यनुभवस्यैवानर्थत्वमभिप्रेत्य तत्परिहाराकथनाय न ख्यातीत्युक्तं ॥ ततश्चायमर्थः ॥ विश्वमेतदेतादृशमसारं यतोऽतस्तत्परित्यज्यात्मानमादानादिकर्तारमभ्विरं सर्वेश्वरं शास्त्रेण विज्ञाय मुनिर्मननशीलः शांतमनोवाक्यो निवृत्तान्यविषयकमनोवाग्व्यापारो यदा भवति तदोपप्लवो दुःखाज्ञानाद्युपद्रवो न ख्याति न भासते पुनस्तदनुभवो

न भवति । उपद्रवस्वरूपमेव न भवतीत्यर्थः ॥ ४० ॥ मम मातुश्चिंता तव माभूदित्याह ॥ मात्र इति । आध्यात्मिकीं परमात्मादितत्त्वविषयां शमनीमुन्मूलनीं वितरिष्ये उपदेक्ष्यामि । असौ माता ययाचेत्यत्र चकारस्त्वच्छिक्षासमुच्चायकः । परमानंदं च प्राप्स्यसीति द्वितयि च शब्दार्थः ॥ ४१ ॥ ४२ ॥ मौनं मुनीनां संबंधि व्रतमहिंसालक्षणं मठादिनिकेतनरहितः ॥ ४३ ॥ यत्सदसतो मूर्तामूर्तात्प्रपंचाद्विलक्षणं तत्तस्मिन् ब्रह्मणि श्रुत्यादिभिर्गुणानामवभासो यस्य स तथा । तस्मिन् गुणैर्ज्ञानानंदादिभिरवभास इति गुणावभासस्तस्मिन्निति वा । विगुणे विगतगुणत्रये । एकभक्त्या केवलभक्त्याऽनुभाविते ध्याते ॥ ४४ ॥ पुनः कर्दमस्थितिमाह ॥ निरहंकृतिरिति । अहं कर्तेति बुद्धिशून्यः । इदं देहादि ममेति बुद्धिशून्यो निर्मानो निर्द्वंद्वः शीतोष्णद्वंद्वकृतोपद्रवरहितः समदृग्योग्यतानुसारेण तत्तदर्थज्ञानी । स्वदृगित्यत्र स्व शब्दः स्वात्मवाची न स्वात्मज्ञानस्य मोक्षसाधनत्वाभावात्किंतु परमात्मवाच्येत्यभिप्रेत्य तस्य परमात्मवाचकत्वे निमित्तं प्रमाणेनैव दर्शयति ॥ अनन्येति । स्वातंत्र्यादित्यर्थः । च शब्दस्तद्ग्रंथोक्तसमुच्चायकः । तथा च स्वतंत्रं हरिं पश्यतीति स्वदृगिति मूलार्थ इति भावः । प्रत्यग्र इत्यस्यापि प्रकृतसंगतमर्थं दर्शयति ॥ प्रत्यग्रातिरिति । तथा च प्रत्यक् स्वांतर्यामिणि रतिं दर्शनाविर्भूतं सुखं यस्य स प्रत्यग्रातिरिति मूलं व्याख्येयमिति भावः । शांतधीर्निश्चलबुद्धिर्धीरः संपद्यापदि चैकप्रकारेण हरिबुद्धावेवाचलरमणशीलः ॥ ४५ ॥ भक्तिभावेन भक्तिस्वभावेन लब्धात्मा वशीकृतपरमात्मा ॥ ४६ ॥ तस्यापरोक्षज्ञानप्रकारमाह ॥ आत्मानमिति । अत्रात्मशब्दद्वयं भगवत्परमेव न स्वात्मपरमित्याभिप्रेत्य समाख्याप्रमाणं पठति ॥ भूतगर्भश्चेति । भूतानि गर्भे यस्येत्यनेन भूतानि चात्मनीत्येतदुक्तार्थं । द्विरूपवानित्यनेनान्योन्याश्रयत्वशंका परिहृतेति ज्ञेयं । पूर्ण एव यतः । ननु पूर्णत्वेऽध्यात्म शब्दवाच्यत्वं कुत इत्यतस्तस्यैव तच्छब्दनिरुक्तिलभ्यत्वादित्याह ॥ सदैवाप्तगुण इति । प्राप्तगुण इत्यर्थः । आङ् पूर्वकात्तनोतेर्डमन् प्रत्यये ह्यात्मेति पदं पूर्णता पर्यायविस्तृतिवाचि विस्तृतिश्च देशतः कालत इव गुणतोऽपि विवक्षितेति भावः । तथा चात्मानं गुणपूर्णं भगवंतं सूक्ष्मरूपेण नियामकतयाऽवस्थितमात्मनि व्याप्तरूपे ॥ ४७ ॥ मुक्तावंतरंगसाधनानि दर्शयन्नाह ॥ इच्छाद्वेषेति ॥ ४८ ॥ इति श्रीभागवतटिप्पण्यां पंचविंशोऽध्यायः ॥ ३—२५ ॥ ॥

।। हरिः ॐ ।। मैत्रेयेणोक्तं शुकमुखाच्छ्रुत्वा राजा देवहूत्यै कपिलेनोपदिष्टं श्रोतुकाम उक्तमनूद्य प्रशस्यावशिष्टं कपिलोपदिष्टप्रकारं कथयेति प्रार्थयते ।। कपिल इत्यादिना । तत्त्वसंख्याता तत्त्वगणनपरशास्त्रनिर्माता । साक्षादनुपचारेणाजो विष्णुः स्वयमेव जातो न तु पृथ्वादाविवाविष्टः । नृणामधिकारिणामात्मप्रज्ञप्त्यै स्वस्वरूपज्ञापनायात्ममायया स्वस्वरूपेच्छया जातो यः कपिलः ।। १ ।। यः कपिलस्तस्य धर्मिणां निवृत्तधर्मवतां पुंसामर्हस्य सामान्यस्य गरिम्णो गुरुतमस्य विश्रुतौ विशेषेण श्रवणे सति श्रुतो देवो हरिर्येन तस्यापि मेऽसव इंद्रियाणि भूरि यथा तथा तृप्यंति परमानंदं प्राप्नुवंति ।। २ ।। स्वच्छंदः स्वेच्छाधीन आत्मा स्वरूपं यस्य । स्वतंत्र इति यावत् । आत्ममायया स्वेच्छया प्रकृत्या वा कीर्तन्यानि कीर्तनयोग्यानि ।। ३ ।। एवं यथा त्वयाऽहं प्रचोदित एवं विदुरेणान्वीक्षिक्यां ब्रह्मविद्यायां प्रचोदितः सन् प्रीत इदं वक्ष्यमाणं यथा येन प्रकारेण विदुरं प्रत्याह तथा तेनैव प्रकारेण । तदेवेति यावत् । त्वां प्रत्यहं । वक्ष्यामीति शेषः ।। ४ ।। अरण्यं प्रति प्रस्थिते गते सति । विदुरेण बिंदुसरसि ।। ५ ।। धातुर्ब्रह्मणो वच एष मानविगर्भे ते प्रविष्ट इत्यादिरूपं ।। ६ ।। असद्भिरमंगलैर्विपर्ययैरिंद्रियाणां तर्पणात्संभाव्यमानेन लोल्यमानेन यर्नेद्रियगणेनांधयतीत्यंधतमोऽज्ञानं प्रपन्ना प्राप्ताऽस्मि ।। ७ ।। दुःपारस्य पारगमनवर्जितस्य पारं गमयतीति पारगं त्वमेव सच्चक्षुः सत्त्वलक्षणं निर्दुष्टं चक्षुर्मे मया बहूनां जन्मनामंते जातं त्वदनुग्रहाल्लब्धं ।। ८ ।। न केवलं ममैव त्वं चक्षुः किंतु सर्वस्यापि सज्जनस्येत्याह ।। य इति । आद्य इत्यादिविशेषणानि सच्चक्षुष्ट्वोपपादकानि ।।९।। अथ तस्मादपाकृष्टुमुन्मूलयितुं । संमोहमेव दर्शयति ।। य इति । एतस्मिन्देहगेहादौ यो ममेत्यवग्रहो दुष्टाभिमानस्त्वयैव योजित उत्पादितस्तं संमोहमित्यन्वयः ।। १० ।। त्वमेवोक्तरूपसंमोहेन बंधकोऽतस्त्वमेव तमपाकृत्य मोचय । त्वत्कृतविनाशेऽन्यस्य सामर्थ्याभावादिति भावः । उपसन्नाय शिष्याय वक्तव्यं ब्रह्म शाश्वतमिति वचनात् । तव चोपसत्त्यभावात्कथमुपदिशामीति नाशंकनीयमिति भावेनाह ।। तत्वेति । शरणंगता उपसन्ना । केन निमित्तेन प्रकृतेः पुरुषस्य च जिज्ञासया ज्ञातुमिच्छया । ननु यदि देवहूत्याः प्रकृतिपुरुषस्वरूपमेव मोक्षार्थं जिज्ञासितं तर्ह्युत्तरत्र नारायणाख्यं परतत्त्वमपरतत्त्वमपि चेतनाचेतनात्मकं तत्र चेतना रमाब्रह्माद्यास्तारतम्योपेता हरेर्बंधकशक्तिर्महदादिजडं चेत्येतत्सर्वं मोक्षार्थं कापिलेन कथमुपादिष्टमित्याशंकायां तत्सर्वं

प्रकृतिपुरुष शब्दार्थतयाऽत्र विवक्षितमतो नाजिज्ञासितोक्तिरित्याशयेन प्रकृतिपुरुष शब्दयोस्तावदर्थकत्वे प्रमाणं दर्शयति ॥ नारायण इति । जडमव्यक्तं महदादिकं । उपदेशांगं नमनमपि करोति ॥ नमामीति ॥ ११ ॥ ईप्सितमिष्टमपवर्गचोदनं मोक्ष-साधनोपदेशप्रार्थनं । पुंसामित्यनेन देवहूत्या लोकोपकारायेदं प्रार्थनं कृतमिति सूचयति । आत्मवतां वशीकृतमनसां ॥ १२ ॥ मोक्षसाधनमेवादो निष्कृष्याह ॥ योग इति । ननूक्तरीत्या परापरतत्त्वस्योक्तत्वेनेदानीं प्रकृतिपुरुष शब्दवाच्यानां नारायणादि-स्वरूपाणामेव मोक्षार्थं जिज्ञासितत्वस्योक्तत्वेदानीं तदर्थमाध्यात्मिकयोगनिरूपणेऽसंगतिरित्यतोऽत्राध्यात्मिकपदेन पूर्वोक्तनारा-यणादिस्वरूपमेव विवक्षितमतो नासंगतिरित्याशयेनाध्यात्मिकपदार्थं प्रमाणेनैव दर्शयति ॥ परमात्मादिकमिति । तथा चाध्यात्मिकं देहमधिकृत्य वर्तमानानां परमात्मादितत्त्वानां स्वरूपं ज्ञानलक्षणो वा तज्जनलक्षणो वा । योग उपायो मतः संमतः । निःश्रेयसस्वरूपं दर्शयन् कारणताग्राहकमन्वयं दर्शयति ॥ अत्यंतेति । यत्र यस्मिन्नाध्यात्मिकयोगे सति । भवतीति शेषः । अत्र सुखस्यापि दुःखवदत्यंतोपरतिरुच्यते न च तत्संभवति । तथात्वे मोक्षस्यापुरुषार्थत्वप्रसंगादतोऽत्र दुःखसमकक्ष-तयोक्तं सुखं प्रमाणेनैव दर्शयति ॥ सुखमिति । शरीरे सति भोग्यमंतःकरणपरिणतरूपं । च शब्दस्तु शब्दार्थः । सुखं त्विति संबंधः । सर्वमविशेषितं सामान्यत एव दुःखं विलयमायातीत्यर्थः । कुत एवं सुखे संकोच इत्यत उक्तं ॥ नित्यानंद इति । तु शब्दो यस्मादित्यर्थे । भुज्यते । मुक्तैरिति शेषः । तथा च मूले नित्यसुखानुभवश्चेति पूरणीयमिति भावः ॥ १३ ॥ १४ ॥ तत्र मनोवशीकरणं प्रथमसाधनमित्याह ॥ चेतः खल्विति । अस्यात्मनो जीवस्य गुणेषु विषयेषु ॥ १५ ॥ ननु मुक्तेर्हर्यपरोक्षज्ञानमात्रसाध्यत्वात्कथमतद्युक्तं विमुक्तय इत्युक्तमित्यतस्तेनापरोक्षज्ञानमपि भवतीत्याह ॥ अहंममेत्यादि श्लोकत्रयेण । अत्र भगवद्भजनकालेऽदुःखमसुखमिति दुःखवत्सुखस्यापि सर्वात्मनाऽभाव उच्यते नासौ संभवति । अनिषिद्धबाह्यसुखानुभवदर्शनात् । ध्यानादिना च स्वरूपसुखाभिव्यक्तेः प्रमाणसिद्धत्वादतोऽत्राभि-प्रायं प्रमाणेनैव दर्शयति ॥ बाह्य इति । तथा च शरीरधारणार्थं बाह्यसुखानुभवसत्त्वेऽपि तत्र सक्त्यभावाभिप्रायमेतदिति भावः । कुत एवं सुखे संकोच इत्यतोऽत्र बाधकं सूचयन्नाह ॥ हरिभक्त्येवेति । नित्यानंदमभिव्यक्तनित्यानंदं । अनेन

प्रथमश्लोकतात्पर्यमुक्तं । द्वितीयश्लोके आत्मानमित्येतत्परमात्मानमिति व्याख्यानं । परिपश्यतीति तृतीयश्लोकस्थस्य व्याख्यानं ॥ पश्यतीति । अत्र स्वात्मनेत्यस्य तात्पर्यं ॥ आत्मप्रसादत इति । द्वितीयश्लोकस्थानां निरंतरं केवलाखंडितशब्दानां योग्यमर्थं प्रमाणेनैव दर्शयति ॥ अभेदादिति । केवल उदाहृत इत्यन्वयः । असदृशत्वतोऽहमेको मत इत्यन्वयः । हरिवाक्यमिदं । तृतीयश्लोके प्रकृतिं च हतौजसामित्युच्यमाना प्रकृतिः केत्यपेक्षायामत्र योग्यां प्रकृतिं प्रमाणेनैव दर्शयति ॥ बंधकशक्तिरिति । परमाच्छादिका दुष्टा प्रकृतिः । हतौजसमुदासीनमित्यस्य तात्पर्यं ॥ विष्णुशक्त्या वियुज्यत इति ॥ ततश्चायं श्लोकत्रयार्थः ॥ गुणेषु सक्तं बंधायेत्येतदुपपादनायोक्तं ॥ अहंममेति । तेन गुणेषु विषयेष्वहं ममाभिमानजन्यैः कामादिभिर्युतं मनोबंधायेत्युक्तं भवति । तैर्मलैर्यदावीतं रहितं । अभिमानत्यागेनेति शेषः । तदा शुद्धं निर्दुष्टं सर्वथा दुःखापादककाम्यनिषिद्धपरित्यागाद्दुःखरहितमदुःखमुक्तरीत्या बाह्यसुखे आसक्त्यभावेनासुखमत एव शीतोष्णादिसंबंधेऽपि समं निर्विकारं ॥ १६ ॥ पुरुषो जिज्ञासुरात्मानं परमात्मानं केवलं स्वगुणदेहेंद्रियाद्यभिन्नं । प्रकृतेश्चेतनाचेतनारूपायाः परमुत्तमं । निरंतरं स्वावतारभेदरहितं स्वयंज्योतिः स्वप्रकाशमणिमानं परमसूक्ष्मं स्वाविंबभूतमखंडितमव्याहतशक्तिं ॥ १७ ॥ ज्ञानं परोक्षनिश्चयो भक्तियोगेन भक्तियुतध्यानेनात्मना भगवत्प्रसादेन च परिपश्यति स्वयोग्यतानुसारेण पश्यति । ननु परमाच्छादिकायाः प्रकृतेः सत्वे कथं पश्यतीत्यत उक्तं ॥ प्रकृतिं चेति । परमाच्छादिकां दुष्टां चेतनरूपां बंधकशक्त्यपरपर्यायां प्रकृतिं च हतौजसां विष्णुशक्त्या हतसामर्थ्यामुदासीनामधिकारिणं विहायान्यत्र स्थितां यः पश्यति । तथा चातद्युक्तं विमुक्तय इति यदुक्तं तदुक्तरीत्याऽपरोक्षज्ञानवैराग्यद्वारैवाभिप्रेतमतो न कोऽपि दोष इति भावः ॥ १८ ॥ ननु विषयमुक्तस्य मनसोऽहैर्यपरोक्षज्ञानजननाय किं मुख्यसहकारीत्यतो भक्तिरेवेत्याह ॥ न युज्यमानयेति ॥ १९ ॥ इदानीं ब्रह्मज्ञानोत्पत्तौ प्रतिबंधकमाह ॥ प्रसंगमिति । असद्भार्यादिप्रसंगमतिस्नेहमजरं पुनर्नवत्वेनाक्षयं । ननु विषयेष्वासक्तस्य मनसोऽकस्मात्कथं तत्रासक्त्यभावः स्यादित्यतोऽत्र मूलकारणं साधुसंगं दर्शयति ॥ साधुष्विति । आत्मनोऽधिकारिणो यं प्रसंगं प्रकृष्टं स्नेहं विषयेषु जातमजरं पुनरभिवृद्ध्याऽक्षयं पाशं पाशवद्बंधकं स एव प्रसंगः । अपावृतमपगतावरणं ॥ २० ॥ के ते साधव इत्यपेक्षायां साधूनां लक्षणमाह ॥ तितिक्षव

इति चतुर्भिः । तितिक्षवः स्वोत्तमकृतापराधसहिष्णवो नीचेषु सत्सु कारुणिकाः स्वसमानां सर्वदेहिनां सुहृदः सत्सु न जातशत्रुर्येषां ते तथा । साधु प्रशस्तं कर्मभूषणं येषां ते इव साधवः ॥ २१ ॥ अनन्येन भावेन भक्तिमित्यत्र भक्तेरनन्यभावो नामान्यत्राविद्यमानतेति प्रतीयते न चासौ संभवति । ब्रह्मादिभक्तेरपि मोक्षसाधनत्वादतोऽत्र विवक्षितमनन्यभक्ति शब्दार्थं दर्शयति ॥ यादृशीति । मय्युद्रेकान्माहात्म्यातिशयाद्यादृशी सर्वोत्कृष्टा भक्तिः । अन्यत्र ब्रह्मादौ । मूले प्रकृते मत्प्रसादार्थं त्यक्तानि काम्यानि निषिद्धानि च कर्माणि यैः ॥ २२ ॥ मदाश्रया मत्प्रतिपादिकास्तापांस्तपांसि । ऐकात्म्यगतचेतस इत्येतज्जीवेश्वराभेदज्ञानिन इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति ॥ एक इति । आत्म शब्दार्थः ॥ पूर्ण इति । देशतः कालतो गुणतश्चेति शेषः । आङ् पूर्वात्तिनोतेर्डमन् प्रत्यये आत्मेत्यस्य निष्पन्नत्वात् । अवधारणार्थस्यैक शब्दस्य व्यावर्त्यं दर्शयति ॥ नान्य इति । प्रत्ययार्थकथनं ॥ तद्वशा इति । चेतः शब्दार्थनिरूपणं ॥ ज्ञानमिति । स्थिरमिति गत शब्दतात्पर्यप्रदर्शनं । ततश्चैकः केवलः स्वयमेवात्मा पूर्ण एकात्मा तस्येदमधीनमित्यैकात्म्यं । तत्र विषये गतमेकप्रकारेण स्थितं चेतो ज्ञानं येषामिति व्याख्येयमिति भावः ॥२३॥ दुष्टसर्वसंगवर्जिताः अथ तस्मात्संगो विषयासक्तिस्तत्कृतदोषहरा इत्यर्थः ॥२४॥ सत्संगस्य मनसो विषयासक्त्यभावजनकत्वं न साक्षात्किंतु भक्तिजननद्वारेणैवेत्याशयेनाह ॥ सतां प्रसंगादिति । प्रसंगात्प्रकृष्टसंगात् । मम वीर्यैः पराक्रमैः । लब्धाः संपदो यासु हृत्कर्णयो रसायनाः सुखदा जोषणात्सेवनादपवर्गस्य वर्त्म ज्ञानादिकं यस्मात्तस्मिन्हरौ श्रद्धावत्यास्तिक्यबुद्धिसहिताऽनुक्रमिष्यत्युत्पत्तुमारंभं करिष्यति ॥ १५ ॥ भक्त्यनंतरं जायमानापवर्गस्य साधनक्रमं दर्शयति ॥ भक्त्येति । पुमान् अधिकारी दृष्टाः श्रुताश्च ये आत्मनः परमात्मादिचेतनास्तेषां यानि द्रविणानि गोप्यतया द्रविणस्थानीयानि स्वरूपाणि तदनुचिंतया येषां सारासारत्वादिविमर्शेनैंद्रियादिंद्रियोपभोग्याद्विषयाज्जातो विरागो यस्य चित्तस्य ग्रहणे परमात्मन्येव स्थापनार्थं योगयुक्तः कथाश्रवणादिरूपयोगयुक्तो ऋजुभिः स्वदेहानुकूलैर्योगमार्गैर्यमादिभिः ॥ २६ ॥ प्रकृतेर्ज्ञातानां गुणानां विषयाणामसेवयेति पुनर्वैराग्यवचनं तस्यावश्यकत्वद्योतनाय । वैराग्यविजृंभितेन वैराग्याभिवृद्धेन ज्ञानेन । परोक्षज्ञाननिश्चयेन जातेन योगेन ध्यानादिरूपेण प्रत्यगात्मानं जीवस्वरूपांतर्गतं तद्भिन्नं स्वयोग्यं वा हरिं इह देहेऽवरुंधे वशीकृतवत्पश्यति

॥ २७ ॥ भक्तेर्ज्ञानसाधनेषु प्राधान्योक्तौ जिज्ञासया देवहूतिः पृच्छति ॥ कास्त्विदिति । अधिकारिणो द्विविधाः । मोक्षकामास्तदकामाश्चेति । तत्र किं मोक्षकामानां भक्तिरुत्तमा । उत तदकामानां । यदि तदकामानामपि भक्तिरेवोत्तमा तर्हि सा कीदृशी किं लक्षणा मम गोचरा मया ज्ञातव्या कर्तव्या वा । निर्वाणं मोक्षाख्यमंजसा मोक्षकामेभ्योऽप्याधिक्येन ॥ २८ ॥ निर्वाणात्मन्परमानंदमूर्ते ॥ २९ ॥ तद्भक्तिलक्षणमेतद्योगलक्षणं च विजानीहि विशेषेण ज्ञापय सुखं यथा स्यात्तथा ॥ ३० ॥ अर्थमर्यत इति व्युत्पत्त्या ज्ञेयं । जातस्नेहो जातानुग्रहः । अनुग्रहे निमित्तमाह ॥ यत्रेति । अत्र यत्र तन्वाभिजात इत्युक्त्या शुक्रशोणितसंबंधेन भगवतो देहोत्पत्तिरुच्यत इति प्रतीयतेऽतोऽत्र विवक्षितां जनिं प्रमाणेनैव दर्शयति ॥ शुक्लेनेति । अन्येषां हरिरमाव्यतिरिक्तानां स्वतनुवैव स्वस्वरूपभूततन्वैव । तु शब्दो ज्ञानानंदादिरूपविशेषणार्थः । जनिः प्रादुर्भाव इत्यर्थः । यथाश्रुतस्वीकारे बाधकमाह ॥ नित्येति । नित्योदिता ज्ञानरूपा तनुर्यस्य । तथा च यत्र यस्यां तन्वा ज्ञानादिरूपनित्योदितदेहेनाभिजातः प्रादुर्भूततन्वेति मूलं व्याख्येयमिति भावः । तत्त्वाम्नायं तत्त्वान्याम्नायंते पुनः पुनरुच्यंते यस्मिंस्तत्तथा । तत्सांख्यं शास्त्रं । कथं भूतं । भक्तिवितानयोगं भक्तिं विस्तारेण स्वश्रवणेन योजयतीति भक्तिवितानयोगं ॥ ३१ ॥ मोक्षकामाधिकारिभक्त्यपेक्षया तदकामानामेव भक्तिरुत्तमेति सैव या त्वया ज्ञातव्या कर्तव्या चेत्याशयेन तस्या लक्षणं दर्शयति ॥ देवानामिति । अत्रानुस्राविककर्मणामित्येतदप्रतीत्या प्रमाणेनैव दर्शयति ॥ आनुस्राविकेति । य इंद्रियगणो गुरोरुच्चारणमनुश्रूयत इत्यनुस्रावा श्रुतिः । तद्विहितमानुस्राविकं तदेव कर्म कार्यं यस्य स तथा । तस्येदं तात्पर्यं श्रुत्युक्तं यो न लंघयेदिति । सत्त्व एवैकमनस इत्यत्र प्रकृतसंगतं सत्त्व शब्दार्थं प्रमाणेनैवाह ॥ सदेति ॥ ततश्चायं श्लोकार्थः ॥ सत्त्व एव सदा सर्वगुणाढ्ये विष्ण्वावेवैक मुख्यं मनो यस्य शुद्धसात्त्विकस्य पुंसो देवानां द्योतनात्मकानामिंद्रियाणां गुणलिंगानां गंधादिकगुणोपलब्धिलक्षणकार्यानुमेयानां तथा वचनादिक्रियानुमेयानां चानुस्राविककर्मणां श्रुत्युक्तानुष्ठान करणानां ॥ ३२ ॥ या भगवत्यनिमित्ता फलोद्देशरहिता केवलं स्वाभाविकी निरवधिकस्नेहरूपस्वभावनिर्वृत्ता वृत्तिः सा भक्तिः सिद्धेर्मुक्तेर्गरीयसी । नन्विदं साधनस्य साध्यापेक्षयोत्तमत्वं बाधितं कथमुच्यत इत्यतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ अपूर्णभक्तेरिति । अनिमित्तत्वरूपांगाभावेना-

पूर्णा सकामा भक्तिर्यस्य तस्याधिकारिणो मुक्तौ सत्वात् । तु विशेषेण पूर्तिमुत्तमाधिकारिभक्त्याऽभिव्यक्तसुखपूर्तिसमां पूर्तिं नेष्यति । भक्तिरुत्तमाधिकारिणामनिमित्ता भक्तिर्गरीयसी । इदानीमेवाधिकसुखाभिव्यक्तिहेतुत्वादुत्तमा । न च तदेव कुत इति वाच्यं । यतः पूर्णा सांगाऽनिमित्तत्वरूपांगोपेतत्वात् । ततश्च साऽनिमित्ता भक्तिः सिद्धेः सकामतया व्यंगभक्तिसाध्यायाः परममुक्तेः सकाशाद्गरीयसी । अनिमित्तत्वरूपांगलाभेनेदानीमेव तदपेक्षयाऽधिकसुखाभिव्यक्तहेतुत्वादिति मूलाभिप्राय इति भावः । नन्वियं भक्तिरनुद्देशितत्वान्न मुक्तिं जनयेदित्यतोऽनुद्देशितामपि मुक्तिं स्वभावादेव जनयतीति सदृष्टांतमाह ॥ जरयतीति । कोशं लिंगशरीरं निगीर्णं भुक्तमन्नं । अनलो जाठरः ॥ ३३ ॥ अनिमित्तभक्तिकर्तारः कीदृशा इत्यपेक्षायां तेषां स्थितिं दर्शयति ॥ नैकात्म्यतामिति पंचभिः । अत्रैकात्म्यता शब्दार्थं न स्पृहयंतीत्यत्र विवक्षितमध्याहारं च प्रमाणेनैव दर्शयति ॥ नेच्छंतीति । सायुज्यमपीत्यनेनैकात्म्यतामित्येतदुक्तार्थं । तर्हि तेषां श्रुत्याद्युक्तसायुज्यप्राप्तिः कथमित्यत उक्तं ॥ आज्ञात्वेनेति । सुखाधिक्यं यावत्स्वरूपाविर्भावः । पूर्वमपि बहुतरस्य जातत्वात्पुनरिति वचनं । पंचमे येषामहमात्मेति वचनेनैक्यं प्रतीयतेऽतस्तत्र विवक्षितमात्म शब्दार्थं दर्शयति ॥ आदानादीति । न तु स्वरूपमित्यर्थः । प्रमाणविरुद्धत्वादिति भावः ॥ ततश्चायं श्लोकपंचकस्यार्थः ॥ केचिदुत्तमाधिकारिणो मे मया भक्तिफलत्वेन दीयमानामेकात्मतां सायुज्यमपि न स्पृहयंति नेच्छंति । किं त्वाज्ञात्वेन गृह्णते । मदीहा मद्विषयकसर्वव्यापारवंतः प्रसज्य मिलित्वा सभाजयंते संभाव्य वदंति शृण्वंति ॥ ३४ ॥ यानि रूपाणि पश्यंति नः साकं सह स्पृहणीयामिष्टां वाचं वदंति ॥ ३५ ॥ तैर्दृष्टं रूपैर्दर्शनीया मनोहरा अवयवा येषु । वामान्यनुकूलानि सूक्तानि शोभनवचनान्युदाराणि विलासादीनि येषां तैः । हृतात्मनोऽपहृतमनसो हृत्प्राणस्यापहृतेंद्रियवृत्तेर्भक्तिमेवान्विच्छतोऽपि पुंसः प्रसन्नोऽहमण्वीं सूक्ष्मां सायुज्यलक्षणां गतिं मुक्तिं प्रयुंजे ददामि ॥ ३६ ॥ न केवलं सायुज्यमेव प्राप्नुवंति किंतु विभूत्यादिकमपीत्याह । अथो मुक्त्यनंतरं ये विभूतिं छत्रचामरादिलक्षणां माययेच्छया चितां निर्मितां । अष्टांगमैश्वर्यमणिमादिरूपमनुप्रवृत्तं भक्तिफलत्वेन दीयमानं तथा भद्रां सन्मार्गप्रसन्नां । श्रियं देवीं द्योतमानां शरीरशोभां च स्पृहयंति ते परस्परं मे सकाशान्मे लोकेऽश्नुवते मदाज्ञाया अनुल्लंघ्यत्वाद्भुंजते ॥ ३७ ॥ मद्दत्तान् भोगान्नाशयितुं तत्र कोऽपि न समर्थ इत्याशयेनाह ॥

न कर्हिचिदिति । अहमेव परः सर्वोत्तमो ज्ञेयो येषां ते मत्पराः शांतरूपाः सुखपूर्णस्वरूपा न नंक्ष्यंति कुतोऽपि भोगहीना न भविष्यंति । ननु तत्रापि कालस्य सत्वात्तेन विनाशः स्यादित्यत उक्तं । मे मदीयोऽनिमिषो हेतिः कालाख्यमायुधं तान्नो लेढि न ग्रसति । तत्र हेतुर्येषामिति । आत्माऽऽदानादिकर्ता सुत इव स्नेहविषयो विश्वसनीयत्वात्सखोपदेष्टृत्वाद्गुरुर्हितकारित्वात्सुहृदः पूज्यत्वाद्दैवमिष्टं ॥ ३८ ॥ वैराग्यविवृद्ध्या भक्त्या भजतां मोक्षप्रदोऽहमेवेत्याह ॥ इमं लोकमिति । उभयायिनं लोकद्वयसंचारिणमात्मानं स्वात्मानमनुमेयं चेमे पुत्रकलत्रादयो रायो धनानि ॥ ३९ ॥ अन्यो मोक्षप्रदो नेत्याह ॥ नान्यत्रेति । प्रधानपुरुषेश्वरात्प्रकृतिहिरण्यगर्भोत्तमादात्मन आदानादिकर्तुर्भगवतो मदन्यत्रान्यस्मात्सर्वभूतानामधिकारिणां तीव्रं भयं संसाररूपं न निवर्तत इत्यन्वयः ॥ ४१ ॥ कुत इत्यतो ममैवेतरसर्वदेवनियामकत्वादित्याह ॥ मद्भयादिति ॥ ४२ ॥ मद्भजनेनैव मुक्तिरित्यत्र पुराकल्परूपार्थवादमाह ॥ ज्ञानेति । योगिनो ज्ञानिनः संतः ॥ ४३ ॥ भक्तिरेव मोक्षे मुख्यसाधनं नान्यादिति निगमयति ॥ एतावानेवेति । मय्यर्पितं सन्मनः स्थिरं भवतीति य एतावानेव ॥ ४४ ॥ इति श्रीभागवतटिप्पण्यां षड्विंशोऽध्यायः ॥ ३–२६ ॥ ॥

॥ हरिः ॐ ॥ अथ देवहूत्या पृष्टाया भक्तेर्द्वौ अंशौ स्नेहो माहात्म्यज्ञानं चेति । तत्र स्नेहरूपमंशं निरूप्य यन्माहात्म्यज्ञानरूपांशोपपादनाय तत्त्वाम्नायं यत्प्रवदंति सांख्यं प्रवोचदित्युक्तं तत्प्रपंचयति ॥ अथेति । अथ भक्त्यंशस्नेहनिरूपणानंतरं । गुणैः सत्त्वादिभिः ॥ १ ॥ ननु मुक्तिः परमात्मज्ञानादेव न तत्त्वज्ञानलक्षणादतः कथमेतदित्यत आह ॥ ज्ञानमिति । आत्मानं परमात्मानं दर्शयतीति परमात्मदर्शनं ज्ञानं तत्त्वानां ज्ञानमतो हृदयग्रंथिविभेदनमहंकारममकारनिवर्तकं पुरुषस्याधिकारिणो निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णये वर्णयामि । तत्त्वविविक्ततया तत्स्रष्ट्र्यादिकर्तृत्वेन च परमात्मज्ञानं मुक्तिसाधनमिदं च न तत्त्वानां स्वरूपज्ञाने भविष्यति । अतस्तत्त्वानां ज्ञानमपि मोक्षसाधनतयोक्तमिति भावः ॥ २ ॥ तत्त्वं द्विविधं । स्वतंत्रमस्वतंत्रं चेति विभागमभिप्रेत्य स्वतंत्रतत्त्वस्वरूपं दर्शयति ॥ अनादिरिति । जननमरणशून्य इत्यर्थः । सर्वानादत्त इत्यात्मा स्वतंत्र इत्यर्थः । पुरु अभीष्टं सनोतीति पुरुषः सत्त्वादिविकाराभावान्निर्गुणः प्रकृतेश्चेतनाचेतनरूपायाः पर उत्तमः प्रत्यगंतः

स्थितं जीवस्वरूपं धाम गृहं यस्य । सर्वं जीवांतर्यामीत्यर्थः । स्वयंज्योतिरन्यानपेक्षया सर्वज्ञं विश्वं सर्वजगद्येन समन्वितं व्याप्तं केवलमंतरेव नियामकः न केवलमंतरेणैव किंतु बहिरपि व्याप्त इत्यर्थः ॥ ३ ॥ भगवत उक्तरूपानादित्वे किं मानमित्यपेक्षायां जननमरणाभावप्रतिपादकश्रुतिप्रसिद्धमेतादित्याह ॥ न जात इति । श्रुत्यर्थानुवाद एवायं न श्रुतिरित्याशयेन श्रुतिस्वरूपं स्वयमेवाह ॥ स परम इति । परम इत्यस्यार्थः ॥ आत्मेति । हीत्यनुवादेन प्रसिद्धमिति व्याख्यानं । इतीति शेषपूरणं । तथा च स आत्मा न जायते न म्रियत इत्येतदर्थकश्रुतिस्वरूपं हि प्रसिद्धमिति मूलं योज्यमिति भावः । ननु नोदाहृतश्रुत्या भगवतो जन्ममरणाभावसिद्धिः । तदवतारेषु जन्ममरणयोर्दर्शनादित्याशंकायां तद्दर्शनं भ्रम एवेति कैमुत्यन्यायेनैव सिद्धमित्याशयेनाह ॥ देहाद्युपाधिभिरिति । अत्र कैमुत्यन्यायो न प्रतीयतेऽतो जीवोऽपीति पदमध्याहृत्य योजयति ॥ देहाद्युपाधिभिरिति । आत्तधर्म इत्यस्य विशेष्यप्रदर्शनाय जीव इति । अपीति कैमुत्यसूचकाध्याहारः। यथा स्वप्न इत्यस्यार्थः॥ स्वप्नवदिति । भ्रांत्या जायते म्रियते चेत्यप्यध्याहार्यप्रदर्शनं । इति प्रतीयत इति शेषः। अपि शब्दसूचितं कैमुत्यं स्पष्टयति ॥ किम्विति। सर्वज्ञत्वं स्वयंज्योतिः शब्दोक्तं स्वतंत्रत्वमात्म शब्दोक्तं । आदि पदेन निर्गुणत्वाद्यनुवादः । ईश्वरो भ्रांत्या जायते म्रियते चेति प्रतीयत इति किं वाच्यमित्यभिप्राय इति शेषः। न हि प्रेक्षावान्स्वाधीनैः करणैरात्मनो दुःखमापादयतीति युक्तमित्याशयः। ननु चार्वाकवादेन देहस्यैवात्मत्वावगमाज्जीवे जननमरणे पारमार्थिके एव न भ्रांतिकल्पिते इत्यत आह ॥ भ्रांतित्वादिति । देहात्मत्वस्य तद्वादस्य भ्रांतिमूलत्वादित्यर्थः । ननु कुत एवमध्याहारेण व्याख्यानमित्यतः समाख्याप्रमाणबलादित्याशयेन समाख्याप्रमाणं पठति ॥ परस्येति । भ्रांत्येत्यस्य पूर्वार्धेऽपि संबंधः। तथा च स्वतंत्रस्य परस्य जन्ममृत्याद्या भ्रांत्या प्रतीताः स्युरिति किं पुनर्वक्तव्यं यतो जीवस्याप्यस्वतंत्रतया प्रसिद्धस्य भ्रांत्या जन्ममृत्यादिसंगतिः प्रतीयत इति योज्यं ॥ ततश्चायं मूलार्थः॥ देहाद्युपादिभिरस्वाभाविकैर्देहेंद्रियादिभिर्निमित्तैरात्ततद्धर्माः स्वीकृतदेहादिधर्मा भूतजननादिधर्माः । अस्वतंत्रतयाऽस्वाभाविकदेहादिनिमित्तजननमरणप्रसक्तिमान्न स्वत इत्यर्थः । अत्र दृष्टांतमाह ॥ यथा स्वप्न इति । स्वप्नेऽस्वाभाविकवासनामयदेहधर्मवत्तद्धर्मत्वेन पश्यति तथैवेत्यर्थः । तथा च भूतान् जननमरणादीन् तदीक्षिता स्वाप्नपदार्थद्रष्टा । स्वदेहेऽविद्यमानानेव तद्धर्मत्वेन पश्यति तथैवेत्यर्थः ।

तथा चैवं विधो जीवोऽपि यदा भ्रांत्या जातो मृत इति प्रतीयते स्वरूपेण तस्य नित्यत्वात् । तदोक्तरीत्या सार्वज्ञस्वातंत्र्यादिजीववैलक्षण्ययुक्तः । अस्वाभाविकदेहसंबंधाभावेन तद्धर्मप्रसक्तिशून्य इति यावत् । ईश्वरो भ्रांत्या जायते म्रियत इति प्रतीयत इति किं वाच्यमिति भावः ।। ४ ।। एवमनादिपदोक्तं जननमरणाभावं श्रुत्यादिभिरुपपाद्येदानीं स्वतंत्रलक्षणतयोक्तं यन्निर्गुणत्वं प्रकृतिपरत्वं तस्यातिव्याप्तिपरिहाराय जीवस्य प्रकृतितद्गुणबद्धत्वं वक्तुमाह ।। स एवेति । यः पूर्वमनादिरात्मेति श्लोके स्वतंत्रतयोक्तः स एवेत्यर्थः । प्रकृतिमुभयरूपां । सूक्ष्मामव्यक्तां द्योतमानां गुणमयीं सत्त्वादिगुणात्मिकां तदभिमानिनीं च । यदृच्छया स्वेच्छयैव प्राप्तमित्यन्यथाप्रतीतिवारणाय गतामित्येतद्व्याख्याति ।। उपगतामिति । सर्वदा समीपस्थामित्यर्थः । एतत्प्रदर्शनायैव विभुरिति विशेषणं । अभ्यपद्यत सृष्ट्यादिव्यापाराभिमुखीं चकार । किं स्वप्रयोजनाय नेत्याह ।। लीलयेति ।। ५ ।। तामेव लीलां दर्शयाति ।। गुणैरिति । अत्र मुमुह इत्यनेन भगवत एव मोह उच्यत इति प्रतीतिवारणाय तद्व्याख्याति ।। मुमुह इति । अंतर्णीत णिजर्थोऽयं प्रयोग इति भावः । अत्र प्रयोगांतरं दृष्टांततया दर्शयाति ।। तदेतन्म इति । विजानीहीत्यस्य विज्ञापयेत्यर्थकत्वस्य तत्र सिद्धत्वादिति भावः । कृत्वा विवाहं तु कुरुप्रवीरा इत्यत्रापि कृत्वेत्यस्य कारयित्वेत्येवार्थः । तत्तु कर्तृत्वं पांडवानामभिमन्युविवाहकारयितृत्वस्यैव प्रमाणसिद्धत्वादिति भावः। तद्वदत्रापि ज्ञेय इत्यर्थः । नन्वेवं प्रयोगे किं निमित्तमित्यपेक्षायां तत्र निमित्तं प्रमाणेनैवाह ।। यत्रेति । कारयिता प्रयोजककर्ताऽतीवस्वतंत्रोऽतिशयेनैव स्वतंत्रस्तत्ज्ञापनाय तत्र प्रयोजककर्तरि कर्तृवाचकशब्दः । तु विशेषेण बाहुल्येन । प्रोच्यते प्रयुज्यते । अस्य प्रकृतं मुमुह इति वचनमेवोदाहरणमित्याशयेनाह ।। यथेति । मुमुह इत्यस्यार्थकथनं ।। अज्ञमिति । भ्रांतमित्यर्थः । संसारभागितीत्युत्तरश्लोकापातप्रतीतार्थानुवादरूपशब्दः अन्यत्र ग्रंथतो वा । चापि शब्दौ परस्परसमुच्चयौ । पूर्वश्लोके उपगतामित्यस्य सदा समीपस्थामिति व्याख्यानसमर्थनाय प्रमाणं पठति ।। लये वाऽपीति । अंतराले स्थितिकालेऽपि क्वचित्कदाचिन्नावतिष्ठत इत्यन्वयः ।। ततश्चायं श्लोकार्थः ।। गुणैः सत्त्वादिभिः सात्त्विकादिभेदेन विचित्राः सरूपाः समानरूपाः प्रजाः कार्याणि सृजंतीं प्रकृतिमवलोक्य तया जातां जगत्सृष्टिमवलोक्येत्यर्थः । सः स्वतंत्रतत्त्वरूपो हरिरिह संसारे ज्ञानगूहया जीवस्वरूपज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया प्रकृत्या ।

तज्जन्यस्थूलदेहेनेति यावत् । सद्यः स्थूलदेहप्राप्त्यनंतरमेव मुमुहे तत्र स्थितं जीवं मोहयामास । तत्र कर्तृत्वाभिमानमुत्पादितवानित्याशयः ॥ ६ ॥ एतदेव विशदयति ॥ एवमिति । प्रकृतिगुणैरिति शेषः । पुमानित्यस्यार्थः ॥ जीव इति ॥ ७ ॥ ततश्च किमित्यत उक्तं ॥ तदस्येति । तत्तस्मादविद्यमानकर्तृत्वाभिमानादस्य जीवस्य संसृतिर्जन्ममरणप्रवाहः । बंधः सुखदुःखभोगरूपः । न केवलमेतावत्किंतु पारतंत्र्यं पराधीनत्वं च । तत्कृतमभिमानकृतं भवति । अत्र जीवस्य पारतंत्र्यं पराधीनत्वरूपं न स्वाभाविकं किंतु बंधवदभिमाननिमित्तमिति प्रतीयते न चेदं संभवति जीवस्य सुरगुर्वधीनत्वस्य स्वाभाविकत्वादतोऽत्र विवक्षितं पारतंत्र्यं प्रमाणेनैव दर्शयति ॥ विष्णोरिति । गुरूणां च तंत्रताऽधीनता जीवस्य नित्यस्वाभाविकी । यत्तु तस्य जीवस्यान्यतंत्रत्वं उक्तविष्ण्वाद्यन्याधीनत्वं । स्वापेक्षया नीचाधीनत्वमिति यावत् । तत्तु तदेव ज्ञानाद्विष्ण्वादिज्ञानादिशेषेण निवर्तते । अस्वाभाविकमिति यावत् । तथा चात्राभिमानकृततयोच्यमानं पारतंत्र्यमुक्तरूपमस्वाभाविकमेव विवक्षितमिति भावः । संसृत्यादिकं कस्मात्प्रयोजकाद्भवतीत्यपेक्षायामुक्तं ॥ अकर्तुरित्यादि । तदस्येति प्रकृतजीवविशेषणतया भात्यतोऽपेक्षितमध्याहृत्य व्याख्याति ॥ अकर्तुरिति । इदं सर्वथा कर्ता न भवतीति प्रतीतिनिरासाय प्रमाणेनैव व्याख्याति ॥ अक्लिष्टत्वादिति । करणकाले क्लेशशून्यत्वात् । अकर्तोच्यत इति शेषः । अकार्यत्वात्कर्त्रंतराजन्यत्वात् । अनेन न विद्यते कर्ता यस्येति व्याख्यानं सूचयति । प्रतीतार्थ एव किं न स्यादित्यतोऽत्र बाधकप्रमाणं पठति ॥ एष कर्तेति । एष जगत्प्रभुः कर्ता । ननु तर्ह्यकर्तृत्ववचनविरोध इत्यत आह ॥ न क्रियत इति । अन्येन । कर्त्रेति शेषः । तथा चाकर्तृत्ववचनं तदर्थकमिति भावः । ननु कुतोऽन्येन न क्रियत इत्यतोऽत्र युक्तिमाह ॥ कारणमिति । सर्वस्यापि स्वयमेव कारणं यत इत्यर्थः । तथा च जीववत्क्लेशेनाकर्तृत्वात्कर्तृजन्यत्वाद्वा कर्तुः साक्षिणो जीवसंबंधि पुण्यपापादिक साक्षादीक्षमाणस्य निर्वृतात्मनः स्वत आनंदपूर्णस्येश्वरस्य सकाशादस्य जीवस्य संसृत्यादिकं भवतीति मूलं व्याख्येयमिति भावः ॥ ८ ॥ नन्वेवं प्रकृतिपुरुषयोरुभयोरपि जीवबंधकत्वेऽविशेषात्कुतः पुरुषस्य प्रकृतिपरत्वमित्यतः प्रकृतिपरत्वोपपादनाय पुरुषस्य जीवबंधकत्वे विशेषमाह ॥ कार्यकारणकर्तृत्व इति । अप्रतिपत्तिविप्रतिपत्तिनिरासाय श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ ब्रह्मादिभिरिति । स्वोत्पादित-

कर्तृत्ववद्धिरिति शेषः । अनेन कार्यं शरीरं कारणमिंद्रियं तत्कर्तृत्वं तद्ब्रह्मादिजीवगतं तास्मिन्विषये प्रकृतिं श्रियं विष्णुबलाश्रयेणैव कारणं विदुरिति मूलयोजनां सूचयति । तथा च ब्रह्मादिजीवगतकर्तृत्वरूपबंधं प्रति प्रकृतेः कारणत्वं न स्वातंत्र्येण किंतु हर्यधीनतयैवातो विशेषात्पुरुषस्य प्रकृतिपरत्वं युक्तमिति भावः । विशेषांतरं च प्रतिपादयत उत्तरार्धस्य तात्पर्यमाह ॥ सुखदुःखप्रद इति । जीवानामिति शेषः । अन्येषां चान्येषामपि श्रीब्रह्मादीनां जीवगतसुखदुःखकर्तृत्वं तदाज्ञयैव न स्वातंत्र्येण । तथाऽपि यत्सर्वजीवगतं सुखदुःखानां भोक्तृत्वं तद्धरिः स्वयमेक एव करोति । अतस्तस्य प्रकृतिपरत्वं युक्तमित्याशयः । ननु जीवानामपि स्वस्वसुखदुःखभोक्तृत्वं प्रति हेतुत्वात्कथमयं विशेष इत्यत आह ॥ भोक्तृत्वमात्रेति । मात्र शब्दार्थः कात्स्न्यार्थः सर्वभोक्तृत्वकर्तृत्वमित्यर्थः । इदं चान्यत्र कुत्राचिज्जीवे नास्तीत्यर्थः । प्रकृतेर्भोक्तृत्वदानेऽल्पप्रवृत्तिरित्यत्रोक्तत्वात्कथमत्र नास्तीत्युक्तमिति शंकापरिहाराय जीव इत्युक्तं । प्रकृतेः कर्तृत्व इवात्राधिकप्रवृत्त्यभावादयं पुरुषस्य विशेषो भवतीति ज्ञातव्यं । अनेन सुखदुःखानां कर्तृत्वे प्रकृतिमन्यद्वा कारणं विदुः । भोक्तृत्वे तु परं केवलं प्रकृतेः परं पुरुषं कारणं विदुरिति मूलयोजनां सूचयति । अत्र गीतासंमतिमप्याह ॥ प्रकृतिं पुरुषं चैवेति । कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत इत्यंतग्रहणस्यात्र विवक्षितत्वात्प्रकृतिसिद्धिः । प्रकृतिं पुरुषं चैवेत्येतदादित्वेनोदाहरणं तु प्रकृतिपुरुषयोः प्रसक्तिप्रदर्शनायेति ज्ञातव्यं । अनेनास्वतंत्रत्वस्यापि चेतनाचेतनभेदेन द्वैविध्यं । चेतनानामपि दुःखस्पृष्टत्वास्पृष्टत्वभेदेन द्वैविध्यं युक्तमिति ज्ञातव्यं ॥ ९ ॥ एवं प्रकृतिपुरुषयोर्जगत्कारणत्वे उक्ते विवित्सया देवहूतिः पृच्छति ॥ प्रकृतेः पुरुषस्यापीति । लक्षणं स्वरूपं । अस्य जगतः सदसद्व्यक्ताव्यक्तरूपं जगद्यदात्मकं याभ्यां व्याप्तं प्रकृतिपुरुषयोस्तावज्जगति व्याप्तिं तत्कारणत्वं च श्रुत्यादिसिद्धं त्वयाऽपि सूचितं । तत्र किमुभयोर्व्याप्तिराकाशादिवदुतान्यथा । कारणत्वं चोभयोः किमेकरूपमुतानेकरूपमिति प्रश्नाशयः ॥ १० ॥ तत्र प्रकृतेरुपादानतयैव कारणत्वं पुरुषस्य तु तन्निमित्तनैवेति वक्तुं प्रकृतिस्वरूपं तावद्दर्शयति ॥ यत्तात्त्रिगुणमिति । व्याप्तिरिति प्रकृतेः स्वकार्येषूपादानतयैव पुरुषस्य तु तन्नियामकत्वेन विवक्षिता । अत्र श्रीसंज्ञा चेतनप्रकृतिरप्यचेतनप्रकृत्याभिमानिप्रतिपाद्यतया विवक्षिता । त्रैविध्यं वा प्रकृतेरुच्यते । अव्यक्तमित्यव्यक्तत्वं सदसदात्मक-

मिति व्यक्ताव्यक्तत्वरूपत्वं विशेषवत् । कार्यात्मकमिति वक्तव्यं । एतदप्युभयसाधारणमित्याशयेन प्रमाणं पठति ॥ व्यक्ताव्यक्तात्मकमिति । न प्रलयकालगं नापि सृष्टिसमयगं किंतु तदुभयमध्यकालगं । सृष्ट्युन्मुखं प्रधानं सदसदात्मकं व्यक्ताव्यक्तात्मकं विद्यात् । अव्यक्तमित्येतदुभयत्र व्याख्याति ॥ असर्गेति । असर्गा न विद्यते सर्गो यस्याः सकाशात्सा तथा । अत एव केवला कार्यरहिता । सा चोभयविधाऽपि प्रलयकालीनैवाव्यक्तेत्युच्यत इत्यर्थः । व्यक्ताव्यक्तात्मकत्वं प्रकारेण चेतनप्रकृतौ दर्शयति ॥ सिसृक्षुरुभयात्मिकेति । सिसृक्षा च न प्रलयकालीनायामव्यक्तायां नापि सृष्टिकालीनायां व्यक्तायामिति भावः । विशेषवदित्यस्य तात्पर्यमाह ॥ व्यक्तैवेति । तु शब्दोऽवधारणे । चेतनप्रकृतौ कार्यरूपत्वं कार्यं रूप्यतेऽनयेति व्युत्पत्त्या कार्यनियामकत्वादिरूपं ज्ञेयं । प्रकृतिरुभयरूपा । प्रधानमित्यस्य व्याख्यानं ॥ कार्यत इति । अविशेषमित्येतद्व्याख्याति ॥ अविशेषेति । अनेन विशेषः कार्यो न विशेषोऽविशेष इति व्याख्यानं सूचयति । तथा च यत्तत्त्वं सत्त्वादिगुणत्रयरूपमव्यक्तं सूक्ष्मं नित्यमविनाशि सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञानिनस्तत्त्वं प्रधानं नाम्ना प्रकृतिमाहुरित्यन्वयः । सा च श्रीर्विष्णुसंश्रयेत्यनेन प्रकृतेर्यतः श्रेष्ठः स भगवानित्येतद्वक्ष्यमाणमुक्तार्थमिति ज्ञातव्यं । विशेष शब्दस्य कार्यवाचकत्व एवैतद्व्याख्यानं संभवति तदेव कुत इत्यतोऽत्र प्रमाणं पठति ॥ विशेष इति ॥ ११ ॥ विशेषवदित्युक्तान्विशेषान्दर्शयति ॥ पंचभिरिति । ब्रह्मपूरितमेतच्च विंशतिकं गणं प्राधानिकं प्रधानकार्यं विदुरित्यर्थः ॥ १२ ॥ पंचभिः पंचभिरित्यादिनोक्तचतुर्विंशतितत्त्वानि स्वयमेव दर्शयति ॥ महाभूतानीति । तावंति पंच ॥ १३ ॥ १४ ॥ अंतरात्मनेंऽतःकरणस्य लक्षणरूपया लिंगरूपया वृत्त्येत्यर्थः । लक्ष्यते ज्ञायते । भेदः प्रभेदः । जात्यभिप्रायमेकवचनं । चतुसृभिस्तद्वृत्तिभिस्ते ते येंऽतःकरणप्रभेदा ज्ञायंत इति मूलार्थः । तत्र का वृत्तिः कस्यांतःकरणप्रभेदस्य ज्ञापिकेत्यपेक्षायां चतुर्विधांतःकरणसाध्या वृत्तीः प्रमाणेनैवाह ॥ बुद्धिरिति । अध्यवसानं निश्चयः । अहंकारः । हेतुरिति शेषः ॥ १५ ॥ साक्षात्प्रकृतिकार्येष्वेतेभ्योऽधिका संख्या न ज्ञानिसंमतेत्याह ॥ एतावानेवेति । सगुणस्य ब्रह्मणः सन्निवेशो विस्तारः । यावान्मया प्रोक्त एतावानेव संख्या तत्त्वज्ञैः । अत्र सगुणब्रह्म शब्देन प्रधानमेव विवक्षितमित्याशयेन तत्र प्रमाणं पठति ॥ हरिस्त्विति । हरिरेवेत्यर्थः । श्रीरिति सगुणं

ब्रह्म सत्त्वादिगुणात्मकं प्रकृत्यभिमानिनी । नन्वेवं प्रकृतेरेव सगुणब्रह्मत्वे सगुणस्य ब्रह्मणः सन्निवेश एतावानिति चतुर्विंशतितत्त्वानामपि कथं सगुणब्रह्मरूपत्वमुच्यत इत्यतस्तदाभिप्रायमाह ॥ तदंगजानीति । तदंशजानीत्यर्थः । तद्रूपं तत्त्वरूपमुच्यते । सगुणब्रह्मेति शेषः । कार्यकारणयोरभेदात्प्रकृतिसूक्ष्मभागोपादकानां तत्त्वानां प्रकृत्यात्मकसगुणब्रह्मसन्निवेशत्वोक्तियुक्तेति भावः । नन्वेवं स्वतंत्रतत्त्वतयोक्तस्य पुरुषस्यात्रापरिसंख्यानान्न्यूनतेत्याशंकां परिहरन्हरेर्जिज्ञासितां व्याप्तिं तावदाह ॥ यः काल इत्यादिना । अनेनास्वतंत्रतत्त्वानामेवेदं चतुर्विंशतितत्त्वेन परिसंख्यानं न तत्त्वमात्रस्यातो न न्यूनतेत्युक्तं भवति ॥ १६ ॥ नन्वेवमपि पुरुषो न संगृहीत इत्यतः काल इति पुरुषस्यैव रूपांतरमित्याह ॥ प्रभावमिति । एतत् श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ पुरुष इति । पौरुषशब्दांतर्गतपुरुष शब्दव्याख्यानं ॥ पुरुषो हृदि स्थित इति । यो जीवमोहकतयोक्त इत्यर्थः । परमो विष्णुः । एके यतोभयमित्यस्य तात्पर्यं ॥ अथवा रुद्रदेहस्थ इति । एवं प्रमाणेन तात्पर्यं प्रदर्श्य पौरुषं प्रभावमिति पदद्वयलब्धमर्थं दर्शयति ॥ पौरुषमिति । पुरुषस्य हृदिस्थस्य व्याप्तं रूपमिति । अनेन प्रकर्षेण सर्वदेशसंबंधित्वेन रूपेण भवतीति प्रभावमिति व्याख्यानं सूचयति । एक इत्युक्त्या न मिथ्याज्ञानिन इत्याह ॥ एक इति । कुत इत्यत आह ॥ अप्राकृता इति । तेषां प्राकृतत्वे प्रकृतिमीयुषोऽहंकारविमूढस्य यतो भयं भवति स काल इति ज्ञानासंभवात् । अप्राकृताः प्रकृतिकृताज्ञानादिवर्जिता एवैते वाच्या इति भावः ॥ ततश्चायं मूलार्थः । यः कालः पंचविंशतिकस्तं कालं पौरुषं हृदिस्थितपरमात्मसंबंधि प्रकर्षेण सर्वदेशसंबंधित्वरूपेण भवतीति प्रभावं । हृदिस्थस्य व्याप्तं रूपमिति यावत् । प्राहुर्ज्ञानिनः । एकेऽन्ये तु ज्ञानिनः प्रकृतिमीयुषः प्रकृतिकृताज्ञानादिबद्धस्यात एवाहंकारविमूढस्य कर्तुः कर्तृत्वाभिमानवतो जीवस्य यतो रुद्रांतर्गताद्भयं संसारविच्छेदरूपं भवति तं कालमाहुरित्यर्थः ॥ १७ ॥ तर्हि त्वन्मते कः काल इत्यपेक्षायामाह ॥ प्रकृतेरिति । गुणसाम्यस्य प्रलयकालीनाया निर्विशेषस्य कार्योदासीनायाः प्रकृतेरुभयाविधाया यतश्चेष्टा जगत्सृष्ट्याद्यनुकूलक्रिया भवति स काल इत्यस्माभिरुपलक्षितो ज्ञातः । प्रलयकालीनप्रकृतिप्रवर्तको निरवधिकव्याप्तिमान् शून्यनामा विष्णुरेव काल इति ममापि संमतमित्याशयः ॥ १८ ॥ नन्वयं व्याप्तः कालाख्यो भगवान्हृदिस्थात्पुरुषाख्याद्रूपाद्भिन्नश्चेत्तत्त्वानां पंचविंशतित्वोक्त्ययोगः ।

अभिन्नश्चेदेकस्मिन्परिच्छिन्नापच्छिन्नपरिमाणद्वयासंभव इत्यतोऽभेदेऽप्यघटितघटकैश्वर्ययोगेन विरुद्धपरिमाणद्वयसंभव इत्याशयेनाह ॥ अंतरिति । आत्ममायया स्वसामर्थ्येन । सत्त्वानामिति कर्मणि षष्ठी । सर्वान्प्राणिनो यः समन्वेति व्याप्नोति स भगवानेक एवेत्याशयः ॥ १९ ॥ एवं पुरुषस्य प्रकृतिव्याप्तिविलक्षणां व्याप्तिमभिधायेदानीं प्रकृतिकारणत्वविलक्षणं कारणत्वं कर्तृत्वरूपं दर्शयंस्तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह ॥ दैवादिति । अत्र दैव शब्दो जीवादृष्टपर इति प्रतीयते । उत्तरत्र च वासुदेवसंकर्षणानिरुद्धा एव महदहंकारमनोनियामकतया कथ्यंते न प्रद्युम्नः । महदादिशब्दाश्च जडपरा एवेति च प्रतीयंतेऽत एतत्प्रकरणतात्पर्यं प्रमाणेनैवाह ॥ प्रकृतेरिति । दैवमित्यनूद्य नारायणात्मकमिति व्याख्यानं । प्रलयजलशायीत्यर्थः । क्षोभकं सृष्ट्याभिमुख्ये कारकं । चेतनायास्तु सिसृक्षत्वावस्थाप्रापकं । योनावित्यस्य व्याख्यानं ॥ प्रकृताविति । परः पुमानित्यस्यार्थः ॥ परमः पुरुषोत्तम इति । नन्वयं किं प्रलयवर्ती नेत्याह ॥ तदेवेति । यो महतः स्रष्टा तत्तु महत्तत्त्वनियामकं च रूपं वासुदेवाख्यमेव । मूले तूत्तरत्र सहस्रशिरसमिति विशेषणात् । संकर्षणाख्यमित्यत्र शेष एव प्रतिपाद्यत इति प्रतीतिवारणाय तत्तात्पर्यमाह ॥ संकर्षणाख्य इति । तु शब्दोऽवधारणे । हरिरेवेति संबध्यते । यामको नियामकः । मूले उपलक्षणतयेदमपि ग्राह्यमित्याशयेनाह ॥ स्थूलेति । अनिरुद्धाख्यमिति मूलेऽनिरुद्धो न कामपुत्रो विवक्षितः किंतु हरिरेवेत्याह ॥ अनिरुद्धेति । महदादितत्त्वनियामकहरिमूर्तिकथनप्रसंगात्तदभिमानिनो देवानप्याह ॥ महत्तत्त्वादीति । महत्तत्त्वादीनामभिमानिनो जीवा इति विशेषसूचनाय तु शब्दः । अंगजः कामः । तथा च कामजश्चानिरुद्धक इत्येते चत्वारो विवक्षिता इति शेषः । नन्वभिमानिनश्चत्वारोऽभिमन्यमानानि महदहंकारमनांसि त्रीण्येवातः कथं घटतेत्यत उक्तं ॥ सूक्ष्मस्थूलविभेदेनेति । अहंकारस्येति शेषः । ततश्च शेषः । सूक्ष्माहंकाराभिमानी स्थूलाहंकाराभिमानी काम इति विवेको ज्ञातव्यः ॥ २० ॥ ननु प्रलयकालीने तमसि स्वसृष्टतत्त्वसाक्षात्कारप्रतिबंधके सति कथं तत्र विश्वसृष्टिरित्यतस्तत्प्रदेशस्थं तमो भगवता पीतमित्याह ॥ विश्वमिति । अत्र जगदंकुर शब्देन महत्तत्त्वस्यैव पानकर्तृतया गृहणे कूटस्थ इति विशेषणानुपपत्तिरतो यौगिकोऽयं जगदंकुर शब्दो महत्तत्त्वजनकतया प्रकृतहरिपर एवेत्याशयेनात्र प्रमाणं पठति ॥ अंक इति । जगदंके रमयते यस्मात्तस्माज्जगदंकुरः । इत्युच्यते इति शेषः ।

महांतं योऽसृजज्जीव इत्यनेन तस्य पूर्वप्रकृतत्वं सूचयति । आत्मप्रस्वापनमित्यस्य तात्पर्यं ॥ मोहकमिति । साक्षात्कारप्रतिबंधकमित्यार्थः । अपिबदित्यस्यार्थः ॥ अग्रसदिति ॥ ततश्चायं श्लोकार्थः ॥ उक्तरीत्या जगदंकुरः स एव परः पुमान्विश्वमुत्पत्स्यमानं महदादिकं व्यंजयन् अन्येषामपि साक्षात्कारविषयतां प्रापयन्स्वतेजसा स्वप्रभया तीव्रं निबिडं । आत्मना चतुर्मुखादीनां प्रस्वापनं मोहकं । साक्षात्कारप्रतिबंधकमिति यावत् । अपिबदग्रसीत् । अपसारितमकरोदिति यावत् ॥ २१ ॥ अत्र प्रसंगान्महत्तत्त्वगतस्य वासुदेवस्याध्यात्ममहत्तत्त्वात्मकचित्तजनकत्वमप्यस्तीत्याह ॥ यत्तत्सत्त्वगुणमिति । अत्र यद्वासुदेवाख्यं तदेव चित्तमिति सामानाधिकरण्येनाभेदप्रतीतिवारणायापेक्षितमध्याहृत्य योजनां दर्शयति ॥ यद्वासुदेवाख्यमिति । भगवतः पदमित्यस्यार्थः ॥ भगवत्स्वरूपमिति । सत्त्वगुणं सत्त्वगुणप्राचुर्योपेतमित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव सत्त्वशब्दार्थमाह ॥ सत्त्व शब्देनेति । हरिप्रकरणगतेनेति शेषः । तु मुख्यवृत्त्यैव । एवमेव योजनेत्यत्र ज्ञापकं समाख्याप्रमाणं पठति ॥ महत्तत्त्वगत इति । हि शब्देन श्रुत्यादिप्रसिद्धिं दर्शयति ॥ ततश्चायं श्लोकार्थः ॥ यत्तत्सर्ववेदप्रसिद्धं सत्त्वगुणं पूर्णानंदादिगुणं स्वच्छं धवलं शांतं प्रसन्नं यद्वासुदेवाख्यं भगवतः पदं स्वरूपं तत्तस्मान्महदात्मकं महत्तत्त्वोपादानकं चित्तमंतःकरणप्रभेदरूपकं । ज्ञायत इति शेषः ॥ २२ ॥ चित्तस्य स्वाभाविकानि लक्षणान्याह ॥ स्वच्छत्वमिति । ननु स्वच्छत्वादयो वासुदेवगुणतयोक्तास्तेषामेव कथं चित्तगुणत्वेनोक्तिरित्यतः शब्दसाम्येऽप्यर्थभेदोऽस्तीत्याह ॥ चित्तस्य स्वच्छत्वादय इति । पृथग्वासुदेवगुणभूतस्वच्छत्वाद्यपेक्षयाऽन्य इत्यर्थः । नन्वविकारित्वमसंभावि चित्तस्य विकारित्वादित्यतस्तत्र तात्पर्यं प्रमाणेनैवाह ॥ स्तिमितोदकेति । यत्र पुराणादौ स्तिमितं निश्चलमुदकं चित्तमादिपदात्तादृशं वाय्वादिकं वाऽविकारमित्युच्यते । तत्राल्पविक्रिया बहुतरविकाराभाव एव व्याख्येयो न सर्वथा विकाराभाव इत्यर्थः । ननु स्वच्छत्वादीनां चित्तवृत्तिरूपत्वाभावात्कथं वृत्तिभिर्लक्षणमित्यतोऽत्र विवक्षितं वृत्तिशब्दार्थं प्रमाणेनैव दर्शयति ॥ वृत्तिरिति । वृत्तिरित्यादिभिः शब्दैः स्वभावोऽभिधीयत इत्यर्थः । एवं वृत्ति शब्दस्य स्वभावार्थत्वे प्रकृते को वाक्यार्थो लब्ध इत्यतस्तं दर्शयति ॥ वृत्तिभिरिति । वृत्तिभिः स्वभावैः स्वरूपभूतैर्धर्मैः । लक्षणं प्रकृत्या चरत्सुरित्यादिवत्तृतीया । तादृशधर्मा एव लक्षणमित्यर्थः । एकवचनं समुदायापेक्षं ॥

ततश्चायं श्लोकार्थः ॥ स्वच्छत्वं निर्मलत्वविकारित्वं बहुतरविकाराभावः । शांतत्वं निश्चंचलत्वं चेतसः सच्चित्तस्य वृत्तिभिः स्वभावैर्लक्षणं । तादृशस्वभावात्मकान्येव लक्षणानि शास्त्रोक्तानीत्यर्थः । ननु स्वच्छत्वादिकमनुपलभ्यतेऽतः कथमिदं तल्लक्षणमित्यत आह ॥ यथेति । प्रकृतिः स्वभावः । परा पश्चात्कालीना दृश्यते । तद्वदिति शेषः । यथा प्रावृट्कालेऽपां मृत्तिकादिना कालुष्यं बहुतरफेनतरंगादिरूपो विकारश्चांचल्यं दृश्यते । अथ प्रावृट्कालगमनानंतरं शरीरादिनैर्मल्यं फेनतरंगादिरूपेण विकाराभावो ह्रदादिषु निश्चलत्वं स्वभावभूतं दृश्यते । तथा सच्चित्तेष्वपि श्रवणाद्यभावकाले स्वच्छत्वाद्यदर्शनेऽपि श्रवणादिसंपत्तिप्राप्त्यनंतरं दृश्यत एवातो नासंभव इति भावः ॥२३॥ अहंकारस्योत्पत्तिपूर्वकं विभागादिकमाह ॥ महत्तत्त्वादित्यादिना । क्रियासु स्वविहितासु शक्तिर्यस्य स तथा । नन्वेवं महति न क्रियाऽहंकारे च न ज्ञानमित्यागतमित्यतोऽत्र तात्पर्यं प्रमाणेनैव दर्शयति ॥ ज्ञानप्रधान इति । तु शब्दोऽनुक्तसमुच्चायकः । स्वगतज्ञानापेक्षयाऽल्पक्रियावानित्यर्थः । क्रियाधिकः स्वगतज्ञानापेक्षयाऽधिकक्रियावानित्यर्थः । कुत एवं तत्र ज्ञानाभाव किं न स्यादित्यत आह ॥ इतरेति । उमाद्यपेक्षयेत्यर्थः । ईरितः । वेदादाविति शेषः । तथा चोमाद्यपेक्षयाऽधिकज्ञानत्वे सति स्वगतज्ञानापेक्षयाऽधिकक्रियावत्त्वमहंकारलक्षणमनेनोक्तं भवतीति ज्ञातव्यं ॥ २४ ॥ त्रैविध्यं दर्शयति ॥ वैकारिक इति । वैकारिकादीनां कार्याण्याह ॥ यत इति । यतो यस्मान्मनसो भवः स वैकारिकः । एवं यत इंद्रियाणां भवः स तैजसो यतो भूतानां भवः स तामस इति त्रिविध इत्यन्वयः ॥ २५ ॥ वैकारिकादीनां कार्यांतराणि दर्शयति ॥ वैकारिक इति । अत्राधिदैवमित्यस्य प्रकृतसंगतमर्थं प्रमाणेनैवाह ॥ देवताधिकृतमिति । तथा च देवताभिरिंद्रियदेवताभिरधिकृतमधिष्ठितं यच्छरीरजातं तदिहाधिदैव शब्देनोच्यत इत्युक्तं भवति । नन्वेवमिंद्रियदेवतादेहानां वैकारिकाहंकारजातत्वे वैकारिकोऽधिदैवमिति कथं प्रथमाप्रयोग इत्यत आह ॥ वैकारिक इति ॥ इत्यादि पंचम्यर्थ इति । इत्यादिषु वाक्येषु विद्यमानाः प्रथमाः पंचम्यर्थे व्याख्येया इत्यर्थः । कुत एवं प्रयोग इत्यतोऽत्र नियामकं प्रमाणं पठति ॥ सप्तस्विति । यद्यत्र कारणे स्वातंत्र्यं विवक्षितं तत्र कारणे सप्तसु विभक्त्यर्थेषु प्रथमैव भवतीत्यर्थः । प्रकृते च वैकारिकादीनां कारणानां स्वातंत्र्यं द्योतयितुं प्रथमायोग इति भावः ॥ ततश्चायं मूलार्थः ॥ वैकारिको वैकारिकात् । तु शब्द इंद्रियसंबंधि-

त्वरूपविशेषार्थः । अधिदैवमिंद्रियसंबंधिदेवताधिष्ठितं देहजातमित्यर्थः । बुद्धिर्बुद्धितत्त्वं तदभिमान्युमा च प्राणोऽहंकारिकः तैजसस्तैजसाज्जाता इत्यर्थः । तामसं तु तामसादेवार्थमात्रं मीयत इति मात्राः शब्दादिरूपं मेयं । जातमिति शेषः । कुत एवं विभागेन कार्यजनकत्वमहंकारस्येत्यत आह ॥ गुणव्यतिकर इति । गुणानां सत्त्वादीनां व्यतिकरो व्यत्यासो वैषम्यं यस्मिन्स तथा । यतो गुणव्यतिकरोऽहंकारस्तस्मादुक्तरीत्या त्रीणि कार्याणि वृणोतीति त्रिवृत् । स्वप्रविष्टसत्त्वादिगुणानुसारेणोक्तं कार्यत्रयमहंकारमुत्पादितवानिति भावः ॥ २६ ॥ अहंकाराभिमानिनं देवं तन्नियामकं भगवद्रूपं चाह ॥ सहस्रशिरसमिति । यं सूक्ष्माहंकारमनंतं शेषाभिमन्यमानं प्रचक्षते ज्ञानिनः संकर्षणाख्यं पुरुषं भगवंतं भूतेंद्रियमनोमयं भूताद्यात्मकसूक्ष्माहंकारनियामकं प्रचक्षत इत्यन्वयः । उपलक्षणं चैतत् । स्थूलाहंकारकामाभिमन्यमानं तन्नियामकं भगवंतं प्रद्युम्नाख्यं प्रचक्षत इत्यपि ग्राह्यं ॥ २७ ॥ अहंकारलक्षणान्याह ॥ कर्तृत्वमिति । अहंकृतेरिति वक्ष्यमाणमत्रापि संबध्यते । अत्रैकस्याहंकारस्य कथं विरुद्धकर्तृत्वादिकामित्यतस्तद्घटनां प्रमाणेनैव दर्शयति ॥ मनोरूपेणेति । वैकारिकाहंकारस्य मनोरूपेण परिणतत्वादिति भावः ॥ देहरूपेणेति । तामसाहंकारस्य भौतिकदेहाकारेण परिणतत्वादित्याशयः । इंद्रियात्मतयैवेत्येवकारसंबंधः । तैजसाहंकारस्येंद्रियाकारेण परिणतत्वादित्याशयः । मनोरूपेण कर्तृत्वमित्युक्तमुपपादयति ॥ यत इति । मनसि सत्यहंभावोऽहं कर्तेत्यभिमानो जायते । तस्मात्कर्तृत्वाभिमानजनकत्वात् । ननु जीवे कर्तृत्वं स्वाभाविकं तदनुभवोऽपि साक्षिरूपो नित्योऽतः कथं तत्र जडमनस उपयोग इत्यत आह ॥ स्वभावेति । तन्मनः । तु विशेषेणासन्नोपाधिस्थूलदेहापेक्षया सन्निहितोपाधिरूपमित्यर्थः । कर्तृत्वादेः स्वाभाविकत्वेऽपि देहादावहंममाभिमानरूपस्य ज्ञानस्य बाह्योपाधिसंबंधं विनोत्पादासंभवादित्याशयः । इंद्रियात्मतया करणत्वमित्युक्तमुपपादयति ॥ कर्मज्ञान इति । कर्मसहितं ज्ञानं तस्मिन् । कर्म शब्दः कर्मेंद्रियसाध्यवचनादिक्रियापरः । इंद्रियमित्येकवचनं समुदायापेक्षं । तथा च कर्मसु ज्ञानेषु च यत इंद्रियाणां करणताऽत इत्यर्थः । ननु कार्यत्वस्येंद्रियादिसाधारण्यात्कथं देहरूपेण कार्यतेत्युक्तमित्यतस्तदभिप्रायमाह ॥ कार्यं देह इति । सत्यमिंद्रियादिकमपि कार्यमिति तथाऽप्येकादशेंद्रियाणि लिंगशरीरात्मनाऽनादिसंबद्धानि पुनः पुनरुपचीयंते । देहस्तु कर्मवशादविद्यमान एव पुनः पुनर्नूतनो

जायतेऽतोऽसाधारण्येन देहस्य कार्यरूपत्वमुक्तमित्याशयः । लक्षणांतरमाह ॥ शांतेति । एकस्मिन्नहंकारे विरुद्धं शांतत्वादिकं कथमित्यतोऽत्रापि प्रमाणेनैव तद्विवेकं दर्शयति ॥ शांतरूप इति । देवपिता वैकारिकः । शांतरूपः शांतरूपदेवजनकत्वादेवे- त्याशयः । करणस्रागिंद्रियस्रष्टा तैजसो घोरो घोररूपसंसारसाधनेंद्रियजनकत्वादेवेत्यर्थः । भूतपिता तामसोऽप्रकाशादप्राकट्या- द्यावद्वैकारिके तैजसे वा स्थितस्याभिमानिनो ज्ञानप्रकटनं न तावत्तामसाहंकारे स्थितस्यातोऽयं मूढ इत्युच्यते इत्यर्थः । ननु कोऽत्राभिमानी यस्य ज्ञानादिप्रसक्तिरित्यत आह ॥ त्रिरूप इति । योऽयं त्रिरूप इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ अहंकृते- रहंकारस्य कर्तृत्वं वैकारिककार्यं मनोरूपेण देहादावहंममेत्यादिरूपं कर्तृत्वाभिमानजनकत्वात्तैजसमिंद्रियरूपेण ज्ञानक्रियाकरणत्वं तामसं कार्यभूतात्मकदेहरूपेण पुनः पुनर्जननात्कार्यत्वं च लक्षणं ज्ञातव्यमित्यर्थः । लक्षणांतरमाह ॥ शांतेति । वैकारिक- रूपेण शांतं देवदेहजनकत्वाच्छांतत्वं तैजसरूपेण घोरसंसारजनकेंद्रियजनकत्वाद्घोरत्वं । तामसरूपस्य शेषस्य पूर्ववज्ज्ञानप्राकट्या- भावान्मूढत्वमिति वा लक्षणं ज्ञातव्यमित्यर्थः ॥ २८ ॥ वैकारिकाद्यहंकारेभ्यो मन आदीनामुत्पत्तिरुक्ता ॥ तामधुना प्रपंच- यति ॥ वैकारिकादित्यादिना । तल्लक्षणमाह ॥ यत्संकल्पेति । यद्यस्मात्संकल्पविकल्पवृत्तिविशेषाभ्यां कामसंभवो वर्तते भवति । तन्मनस्तत्त्वमजायतेत्यन्वयः । संकल्पविकल्पद्वारा नानाविधकामजनकं मन इति लक्षणमुक्तं भवति ॥ २९ ॥ मनस्तत्त्वस्या- भिमानिनं देवं नियामकं भगवद्रूपं चाह ॥ यद्विदुरिति । यदनिरुद्ध इत्याख्या यस्य कामपुत्रस्य तत्तदभिमन्यमानं विदुः । अनिरुद्ध इत्याख्या यस्य भगवद्रूपस्य तत्तन्नियम्यामिति वा । हृषीकाणामिंद्रियाणामधीश्वरं श्रेष्ठं । अत एव वैकारिका- ज्जननं न तैजसात् । अनिरुद्धस्य वर्णमाह ॥ शारदेति । शारदं शरत्कालीनमिंदीवरं । नीलोत्पलं तद्वच्छामं । इदमुपलक्षणं । संकर्षणस्य रक्तत्वं प्रद्युम्नस्य पीतत्वं च द्रष्टव्यं । योगिभिः संराध्यं मनोजयाय सम्यगाराध्यं । मनः परत्वे तु योगिभिः प्रत्याहारादिरूपयोगवद्भिः शनैः संराध्यं वशीकर्तुं योग्यं नान्यथा दुर्ग्रहत्वात् ॥ ३० ॥ हे सति । द्रव्यस्फुरणविज्ञानमित्ये- तदप्रतीत्या व्याख्याति ॥ द्रव्यस्फुरण इति । तथा चेंद्रियाणां चक्षुरादीनामनुग्रहादनुप्रवेशनान्मनसा द्रव्यस्य स्फुरणे सामान्या- कारेण ज्ञाने जाते सतींद्रियाणामनुग्रहाद्बुद्ध्या यद्विशेषं ज्ञानं जायते तद्बुद्धेर्लक्षणमिति मूलार्थ इति भावः॥३१॥ लक्षणांतरमप्याह ॥

संशय इति । अत्र मनसा द्रव्यस्फुरणे सति बुद्धेर्विशेषज्ञानजनकत्वमित्येतत्प्रपंचयत्संशयादिजनकत्वं मनसः साधारणस्मृतिजनकत्वं च चित्तेऽतिव्याप्तमिति शंकापरिहाराय बुद्धिसाध्यान्संशयादीन्प्रदर्शयितुं प्रमाणं पठति ॥ सामान्यमिति । सामान्यं सामान्याकारविषयं। विशेषाद्विशेषमवग्राह्यं। अचलो विशेषदर्शनानिवर्त्यः। चलो विशेषदर्शने निवर्त्यः। चंचलाऽदृढा। विमर्शे सति बाध्येति यावत्। तु शब्दोऽवधारणे। बुद्धेः। जायतेति शेषः। ननु बुद्धिकार्याणां संशयादीनां कथं बुद्धिलक्षणत्वमित्याशंकापरिहाराय मूले बुद्धेः पृथक् लक्षणमित्युक्तं। लक्ष्यस्वरूपानात्मकं लक्षणमित्यर्थः। तत्र लक्षणस्वरूपानात्मकस्य लक्षणत्वं कथमित्यतः प्रमाणेनैव तदुपपादयति ॥ येनेति। ज्ञायत। इतरव्यावृत्तत्वादिनेति शेषः। तथा च पृथक् लक्षणस्यापीतरव्यावृत्ततया लक्ष्यज्ञानजनकत्वाल्लक्षणमुपपन्नमिति भावः ॥ तथा चायमर्थः ॥ विशेषदर्शनानिवर्त्यः संशयस्तादृशो विपर्यासो विपरीतनिश्चयः। निश्चय इदमित्थमेवेति प्रमाणजन्यः। स्मृतिश्चंचला विमर्शबाध्या। एव शब्देन चित्तजां स्मृतिं व्यावर्तयति। स्वापो निद्रा। इत्येवं रूपाभिर्वृत्तिभिः कार्यैः पृथक् स्वरूपानंतर्गतं लक्षणमुच्यते शास्त्रे। इतरव्यावृत्तत्वेन लक्ष्यज्ञानजनकत्वादिति। अत्र वृत्तिभिरिति वचनं कार्यकारणभावेन संबंधेनोक्तलक्षणानां लक्ष्यधर्मत्वप्रदर्शनायेति ज्ञातव्यं ॥३२॥ इंद्रियाण्येवेत्येवकारेण तदभिमानिदेवतादेहव्यवच्छेदः। कथं भूतानींद्रियाणि। क्रियाज्ञानविभागशः क्रियाज्ञानरूपकार्यविभागेन। विभक्तानीति शेषः। तथा च क्रियाजनकानि विज्ञानजनकानि चेत्युक्तं भवति। बुद्धिः प्राणश्च तैजस इति बुद्धिप्राणयोस्तैजसत्वमुक्तं। तयोरपि किमिंद्रियत्वं न किंतु तदभिमानित्वमेवेत्याशयेनाह ॥ प्राणस्येति। क्रियाशक्तिः कर्मेंद्रियप्रेरकतया क्रियाजनने शक्तिरित्यर्थः। बुद्धेरुमाया विज्ञानशक्तिता ज्ञानेंद्रियप्रेरकतया विज्ञानजननशक्तिमत्वमित्यर्थः। अत्र प्राण शब्देन न मुख्यप्राणग्रहणं। तस्य पूर्वमेवोत्पन्नत्वादतोऽन्य एव प्राणो ग्राह्य इति प्रमाणेनैव दर्शयति ॥ प्रधानवायुरिति। महता सह जायतेऽतो नात्र विवक्षित इति भावः। तैजसस्तैजसाहंकारकार्यः। स्वज आकाशाद्वायुरित्युक्तो भूताभिमानी प्रवहः। स्पर्शस्त्वगिंद्रियाभिमानी प्राणः। तत्सुताः प्रधानवायुसुताः। तथा चात्र तैजसाहंकारिकप्राण एव ग्राह्य इति भावः ॥ ३३ ॥ शब्दमात्रं शब्द एव श्रोत्रमिंद्रियं तस्मान्नभसोऽभूदिति संबंधः। तु शब्दः पूर्वमुत्पन्नमपि तन्नभसा पुनरुपचितं

भवतीति वक्ष्यमाणविशेषसूचनार्थकः । शब्दं गमयतीति शब्दगं ॥ ३४ ॥ शब्दलक्षणमाह ॥ अर्थाश्रयत्वमिति । अर्थो विषयो यस्य स तथा तस्य भावस्तत्वं । अर्थप्रतिपादकत्वमित्यर्थः । द्रष्टुर्लिंगत्वमित्यस्य कुड्यादिव्यवहितस्य वक्तुरनुमापकत्वमिति व्याख्यानमसादिति भावेन प्रमाणेनैव तद्व्याख्याति ॥ शब्देनैवेति । अनेन हरिज्ञापकत्वं लक्षणं नातिव्याप्तमिति दर्शितं भवति । लिंगं ज्ञापकं । तु शब्दस्तस्मादित्यर्थे । तथा च द्रष्टुः सर्वज्ञस्य लिंगत्वं ज्ञापकत्वं च शब्दस्य लक्षणं विदुरिति मूलार्थ इति भावः । एवकारः परकीयव्याख्याननिरासार्थः । नभसस्तन्मात्रत्वं च शब्दस्य लक्षणमित्युच्यते । तदुपपादयति ॥ स्पर्शाद्यभावादिति । शब्द इति शेषः । न केवलं लिंगमिति कीर्त्यते नभसस्तन्मात्रा चेति कीर्त्यत इति संबंधः । यद्वा । अत मात्रया शब्द इतरगुणाभावसमानाधिकरणगुणपर इत्यभिप्रेत्य प्रमाणेनैव तदुपपादयति ॥ स्पर्शाद्यभावादिति । तथा च शब्दस्य नभसस्तन्मात्रत्वमितरगुणाभावसमानाधिकरणगुणत्वं च लक्षणमिति मूलार्थ इति भावः । नन्वेवं वाय्वादौ त्वक् शब्दादीनामपि सत्वेन स्पर्शादीनां कथं मूले वक्ष्यमाणं तन्मात्रत्वमित्यत आह ॥ स्पर्शादयश्चेति । तन्मात्रा उक्तरूपतन्मात्रा इति कीर्त्यंते । यतः पंचसु भूतेषु प्रत्येकं स्वभावतः स्थित एको गुणः स इतरे स्वाश्रयादन्यस्मिन् भूत पूर्वसंस्थितेः पूर्वभूतानुषंगादेव तिष्ठति । न स्वभावतः । अतः स्वाभाविकेतरगुणाभावसमानाधिकरणगुणत्वरूपतन्मात्रत्वं स्पर्शादावपि युक्तमेवेत्याशयः । ननु शब्दमात्रमभूदिति शब्दस्य तामसाहंकारकार्यत्वमुक्तं । तत्किं वर्णात्मकशब्दस्योत ध्वन्यात्मकस्य । नाद्यः । तस्य नित्यत्वात् । न द्वितीयः । तस्याकाशजन्यत्वेन तामसाहंकारकार्यत्वाकाशोपादानत्वयोरसंभवादित्याशंक्य परिहरति ॥ शब्द इत्यादिना । तु शब्दोऽप्यर्थको यद्यपि तथाऽपीत्यर्थे वर्तते । तथा च तु यद्यपि शब्दो वर्णात्मक इत्यादि तथाऽपि सूक्ष्मध्वनिरेवाकाश आकाशात्मना विकृतः स एव तामसाहंकारकार्यत्वादिना शब्द्यत इत्यर्थः । ननु तर्हि तस्याव्यक्तत्वेन कथं कर्णग्राह्यत्वमित्यत आह ॥ स एवेति । स एव सूक्ष्मरूप एव ध्वनिः । तु शब्दः स्थूलत्वरूपविशेषद्योतकः । स्थूलतया व्यज्यमानो भेर्याद्यास्ताडनादिनाऽऽकाशसंभूतः कर्णैकगोचरो भवेदित्यर्थः । ध्वनिर्द्विविधः । एक आकाशसूक्ष्मभागोपचायकः । अपरः स्थूलतया पुनराकाशसंभूतः । तत्राद्य एव तामसाहंकारकार्यं । द्वितीय आकाशगुणः कर्णगोचरश्चेति विवेकः । एवं

स्पर्शादावपि द्वैविध्यं ज्ञातव्यं ॥ ३५ ॥ आकाशलक्षणं वक्ति ॥ भूतानामिति । छिद्रदातृत्वं गमनाद्यर्थमवकाशदातृत्वं बहिर्देहाद्बहिर्विद्यमानानां प्राणिनां प्राणापानादीनामिंद्रियाणामात्मनो मनसश्च नाड्यादिछिद्ररूपेण धिष्ण्यत्वमाश्रयत्वं चांतरमंतर्विद्यमानमेव वृत्तिलक्षणं स्वाभाविकं लक्षणमित्यर्थः । बहिरंतरिति व्यवहारास्पदत्वमपरं लक्षणमित्यप्याहुः ॥ ३६ ॥ नभसः स्पर्शद्वारा वायूत्पत्तिमाह ॥ नभस इति । शब्दतन्मात्रादित्यस्य शब्दलक्षणसूक्ष्मरूपादित्यन्यथाप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ नभस इति । तथा च तन्मात्रा शब्दो न सूक्ष्मरूपपरः किंतु इतरगुणाभावसमानाधिकरणाकाशकार्यगुणपरः । शब्दाख्यं तन्मात्रमुक्तविधो गुणो यस्य तस्मादित्युक्तं भवति । आकाशोत्पन्ने वायौ ध्वनिलक्षणानुगतिप्रदशनार्थंयदं विशेषणं । एवमेव वायोश्च स्पर्शतन्मात्रादित्यादेर्व्याख्यानं विशेषणकृत्यं च द्रष्टव्यं । ततो वायोस्त्वगभवादित्यन्वयः । स्पर्शस्य संग्रहः समीचीनं ज्ञानं ततोऽभवदित्यर्थः । ननु स्पर्शादेर्वाय्वादिगुणस्य कथं वाय्वादिजनकत्वमत्रोच्यत इत्याशंकां प्रमाणेनैव परिहरति ॥ स्पर्शादय इति । तथा चात्र वाय्वादिजनकतयोच्यमानस्पर्शादयो वाय्वादीनां सूक्ष्मावस्थाः सूक्ष्मरूपोपचायका एव विवक्षिता न तत्कार्यगुणभूता अतो न विरोध इत्याशयः । ननु तैजसाहंकार्यकार्याणामिंद्रियाणां श्रोत्रं तु शब्दगं त्वक् स्पर्शस्य संग्रहश्चक्षू रूपोपलंभनमित्यादिना कथं पुनर्भूतैरुत्पत्तिरुच्यते । उत्पन्नस्य पुनरुत्पत्त्ययोगादित्याशंकायां अत्र विवक्षितामुत्पत्तिं प्रमाणेनैव दर्शयति ॥ सूक्ष्मेति । संत्येव । अनादित इति शेषः । अहंकृतेस्तैजसाहंकारात् । ब्रह्मशरीरतो ब्रह्मांडांतर्विराट्शरीरात् । तथा च तैजसाहंकारेणोपचितानां पुनः स्थूलतया भूतैरुपचय एवात्रोच्यते न पुनरभूतानामतो न दोष इति भावः ॥ ३७ ॥ स्पर्शलक्षणमाह ॥ मृदुत्वमिति । एतदेवैतदन्यतमत्वमेव स्पर्शस्य स्पर्शत्वं स्पर्श शब्दवाच्यत्वे निमित्तं । लक्षणांतरमाह ॥ तन्मात्रत्वमिति । न स्वतो वायोस्तन्मात्रत्वमुक्तरीत्या स्वाभाविकेतरगुणाभावसमानाधिकरणगुणत्वं च स्पर्शवत्वमिति संबंधः ॥ ३८ ॥ वायुलक्षणमाह ॥ चालनमिति । चालनं वृक्षशाखादेः । व्यूहनं पृथक् स्थितानां तृणादीनामेकीकरणं । प्राप्तिः सर्वज्ञानादिशुभप्राप्तिः । द्रव्य शब्दयोर्नेतृत्वं द्रव्यस्य गंधवतो घ्राणं प्रति । तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य श्रोत्रं प्रति नेत्रत्वं सर्वेंद्रियाणामात्मत्वं स्वामित्वं । नन्वत्र वायोर्जडस्य कथं सर्वशुभप्राप्त्यादिकमुच्यत इत्याशंकां प्रमाणेनैव परिहरति ॥ प्राप्नोतीति । तु शब्दः

सर्वस्य शुभत्वरूपविशेषसूचकः । स्वत एव स्वयोग्यताबलादेव । हरेस्तथा हर्यनुग्रहाच्च । भूतपतिं भवहं । यथा च जनि-
मात्रविवक्षाऽत्रेति भावः । ननु तथाऽपि सर्वेंद्रियाणामात्मत्वं तत्राप्यसंभवीत्यत आह ॥ प्रधानवायुरिति । अन्येषु वायुषु । नन्वेवं
तस्य नीचे प्रवेशेन नीचता स्यादित्यत आह ॥ नीचतेति । अस्य प्रधानवायोस्तत्कृता नीचप्रवेशकृता नीचता न । हरिचित्तप्रेरणाय
प्रविष्टत्वादित्याशयः । कर्माभिलक्षणमित्यस्य क्रियारूपं लक्षणमित्यर्थो न संभवति । प्राप्तेः स्वामित्वस्य च क्रियारूपत्वाभावा-
दतोऽत्र विवक्षितं कर्मशब्दार्थं प्रमाणेनैव दर्शयति ॥ स्वरूपमिति । तथा च कर्माभिलक्षणं स्वरूपमभिव्याप्य स्थितं लक्षणं
स्वरूपभूतं लक्षणमिति यावदिति भावः ॥ ३९ ॥ स्पर्शतन्मात्रात्स्पर्शगुणकात्ततस्तेजसश्चक्षुः समुत्थितमित्यपि योज्यं । रूप-
स्योपलंभनं यस्मात्तथा ॥ ४० ॥ रूपलक्षणमाह ॥ द्रव्याकृतित्वमिति । अत्र व्यक्तिसंस्थात्वमित्यस्य जात्यादिव्यावृत्तमर्थांतरं
दर्शयति ॥ व्यक्तिसंस्थात्वमिति । व्यक्तत्वेनालोकांतरानपेक्ष्य चाक्षुषा प्रतीतिकत्वेन स्थितिर्विद्यमानत्वमित्यर्थः । तथा च
व्यक्त्या लोकांतरानपेक्षप्रतीत्या संस्थात्वं स्थितिः । त्व प्रत्ययः स्वार्थ इत्युक्तं भवति । ननु कुत उक्तरूपस्य व्यक्तत्व-
मित्यतोऽत्र हेतुत्वेन गुणेतत्युक्तमित्याशयेन तादिदानीं व्याख्याति ॥ गुणेतेति । प्रकाशत्वं शुक्लभास्वरात्मकप्रभारूपत्वं । प्रभा
हि तेजसो रूपमिति हि प्राचां वादः । उक्तार्थे प्रमाणमाह ॥ आलोक इति । तर्हि तेजस्त्वमित्यस्य कोऽर्थ इत्यतोऽत्राभिधानं
पठति ॥ तेजस्त्वमिति । उग्रत्वं सम्यग्द्रष्टुमशक्यत्वं । एतच्च सूर्यादितेजसि प्रभोत्कर्ष्येनानुभवसिद्धं । तथा च तेजसस्तेजसस्त्व-
मुक्तविधोग्रत्वप्रदत्वमपरं रूपं लक्षणमित्यर्थः । द्रव्याकृतित्वं द्रव्याकारवत्त्वेनैव प्रतीयमानत्वं । इदं च न शब्दादावस्थतां
भवति रूपलक्षणमिति स्पष्टत्वान्न व्याख्यातं । रूपमात्रस्य तेजोगुणभूतरूपस्य वृत्तयः स्वभावलक्षणानि ॥ ४१ ॥ तेजसो
लक्षणमाह ॥ द्योतनमिति ॥ द्योतनं प्रकाशनं । पचनं तंडुलादेः पाककरणं । पानं रसादनं । अदनं स्वसंबद्धसर्वभक्षणं ।
हिममर्दनं शीतनिवारणं । शोषणं शुष्कीकरणं । क्षुत्तृड्भवः क्षुतृड्जनकत्वं । वृत्तयः स्वभावलक्षणानि ॥ ४२ ॥ रूपमात्रा-
द्रूपगुणकात् । रसमात्रमंभसः सूक्ष्मावस्थारूपं तस्मादंभसो जिह्वाऽभूत् । जिह्वाया रसग्रहः । भवतीति शेषः ॥ ४३ ॥
जलरसस्य मधुरत्वमेव स्वभावसिद्धं लक्षणं प्रसिद्धमिति तदनुक्त्वौपाधिकं तद्विभागमाह ॥ कषाय इति । अत्र लवणोऽपि ग्राह्यः

॥४४॥ उदकलक्षणमाह ॥ क्लेदनमिति । क्लेदनमार्द्रीकरणं । पिंडनं मृदादेः पिंडीकरणं तृप्तिस्तृप्तिजनकत्वं । प्राणनं प्रकृष्टचेष्टाहेतुत्वं जीवनप्रदत्वं वा । आप्यायनं तृट्पीडानिवर्तकत्वं । उंदनमित्यस्यार्थं प्रमाणेनैवाह ॥ उंदनामिति । तथा चोंदनं बिंदुभावो बिंदुरूपेण भवनं लक्षणमित्यर्थः । तापापनोदस्तापनिवर्तकत्वं । भूयस्त्वमित्यस्य कूपादावुद्धृतस्यापि पुनः पुनरुद्गम इति व्याख्यानसांप्रदायकमित्याशयेन स्वयं व्याख्याति ॥ पृथिव्यग्न्यपेक्षयेति । देहे पार्थिवादिदेहेषु । भूयस्त्वं पृथिव्यग्निभागापेक्षया भूयोभिर्भागैर्विद्यमानत्वं । तथा हि । पार्थिवशरीरेष्वर्धं पृथिवी । इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः । तैजसशरीरेष्वर्धं तेजः । इतरार्धे त्रिभागिन्य आपः । भागेन पृथिवी । आप्यशरीरेष्वर्धमापः । इतरार्धे त्रयो भागाः । तैजस एकः पृथिवीभागः । तथा च पार्थिवादिशरीरेषु संभूय पृथिव्यादिभागापेक्षयाऽपां दशभिर्भागैः प्रविष्टत्वाद्भूयस्त्वमिति ज्ञेयं । वृत्तयो लक्षणानि ॥ ४५ ॥ रसमात्राद्रसगुणकाद्गंधमात्रं पृथिवी सूक्ष्मावस्थारूपं । तु शब्दोऽप्यर्थकः । पृथिव्या घ्राणोऽप्यभूदित्यर्थः । गंधं गमयति ज्ञापयतीति गंधगः । अत्रापि पृथिवीगंधस्य सौरभ्यं स्वभावसिद्धं लक्षणं प्रसिद्धमिति तदनुक्त्वौपाधिकतद्विभागमेवाह ॥ करंभेति । करंभो दुर्गंधविशेषः । दग्धपार्थिवादिनिष्ठः । पूतिरपि तादृशः क्लिन्नक्षतादिनिष्ठः । सौरभ्यमतिशयेन सुरभि कर्पूरादिनिष्ठं । शांतः सुरभिविशेषः । तामरसादिनिष्ठः । उग्रो वचादेराम्ल आरनालादिनिष्ठः । आदि शब्दाद्दुर्गंधसुगंधप्रभेदा ग्राह्याः । पृथग्द्रव्यावयववैषम्यात् । पृथिवीसंबंधानां नानाविधानां द्रव्यांशानां वैचित्र्यात् ॥ ४७ ॥ पृथिवीलक्षणमाह ॥ भावनामिति । अत्र भावनमित्यस्यानतिप्रसक्तमर्थं दर्शयति ॥ भावनामिति । उत्पादकत्वं । ओषध्यादेरिति शेषः । ब्रह्मणः स्थानमित्यस्यार्थमसाधारण्याय प्रमाणेनैवाह ॥ ब्रह्मस्थानामिति । तु असाधारण्येन पृथिवी ब्रह्मस्थानमित्युच्यते । कुत इत्यत उक्तं ॥ शरीर इति । प्राथमिकब्रह्मदर्शनस्य पार्थिवशरीर एव जननादित्याशयः । सद्विशेषणमित्यस्याप्यनतिप्रसक्तमर्थमाह ॥ सद्विशेषणामिति । विशेषण शब्दो विशेषणपर्यायः । सच्छब्दोऽव्यक्तवाची । भावप्रधानस्तृतीयातत्पुरुषे विशेषण शब्दस्य परनिपातः । तस्येदं तात्पर्यं ॥ विशेषेण व्यक्तत्वमिति । पृथिव्या इति शेषः । पंचसु भूतेषु तेजःप्रभृति व्यक्तिमित्युच्यते । तत्र तेजो रसगंधत्वेनाव्यक्तत्वादंभश्च गंधवत्त्वेनाव्यक्तत्वात् । ते न सम्यग्व्यक्तं । पृथिवी तु

शब्दादिगुणपंचकवत्तया व्यक्तत्वाद्विशिष्य व्यक्तेति ज्ञेयं । सच्छब्दोऽव्यक्तवाचीत्यत्र प्रमाणमाह ॥ असदव्यक्तमिति । च शब्दस्तु शब्दार्थः । व्यक्तमित्यन्वयः । सर्वसत्त्वगुणोद्भेद इत्येतदनूद्य लक्ष्ये दर्शयन्व्याचष्टे ॥ सर्वेति । हि शब्दः प्रसिद्ध्यर्थकः । प्राणिनामित्यनेन सत्त्व शब्द उक्तार्थः । सर्वगुणा ज्ञानभक्त्यादयः । उद्भेद शब्दव्याख्यानं ॥ व्यज्यंत इति । मुक्तिकालीन-व्यक्तौ शरीरानपेक्षणात् संसारावस्थायामित्युक्तं । ननु ब्रह्मस्थानत्वं सर्वगुणोद्भेदश्च शरीरनिष्ठतया व्याख्यातः । अतः कथं तदुभयं पृथिवीलक्षणं स्यादित्यतः शरीरस्य पार्थिवत्वे प्रमाणं दर्शयति ॥ शरीरमिति । अस्मदादीनामिति शेषः । ननु शरीरस्य तर्हि पंचभूतात्मकत्वोक्तिविरोध इत्यत उक्तं ॥ इंद्रियाणीत्यादि । कोष्ठगो जाठररंध्रश्छिद्रं द्वाराणि । प्राणाः प्राणापाना-दयः पंच । तथा चेंद्रियाद्यंगसहितस्यैव पंचभूतात्मकत्वेन तथा व्यवहारो न त्वंगिनः शरीरस्येति भावः । नान्विदमपि न संभवति । प्रत्येकमंगानामंगिनश्च पंचभूतात्मकत्वादित्याशंक्याह ॥ प्रत्येकमिति । पुनरित्यनेनेदमाचष्टे ॥ सत्यमेवं प्रत्येकं पंचधेति । तथाऽपि पार्थिवशरीरेंऽगीनि पृथिवीभागानां बाहुल्यादंगेष्विंद्रियादिष्वबादिभागानां बाहुल्यादुक्तव्यवस्थोपपत्तिरिति । मूले धारण-मित्यस्य गुरुपदार्थधारकत्वमित्यर्थः । एतत्सर्वं पृथिव्याः स्वाभाविकं लक्षणमित्यर्थः ॥ ४८ ॥ श्रोत्रादींद्रियलक्षणान्याह ॥ नभ इति । नभसो गुणः शब्दः सोऽर्थो विषयो यस्य तच्छ्रोत्रं । एवमग्रेऽपि व्याख्येयं । मनसः सर्वोपलब्धिसाधनत्वात् । तत्रातिव्याप्तिवारणाय सर्वत्र विशेषपदमसाधारणार्थकं । तथा च नभ आदेर्गुणः शब्दादिविशेषोऽर्थोऽसाधारणो विषयो यस्य तच्छ्रोत्रादिकमित्यर्थो द्रष्टव्यः ॥ ४९ ॥ ५० ॥ भावनमिति श्लोकोक्तं पृथिव्यां सद्विशेषणमिति लक्षणमुपपादयति ॥ परस्येति श्लोकेन । परस्य पूर्वस्य कारणस्य शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयादृश्यते । अतो भावानामाकाशादीनां विशेषो गुणः सर्वोऽपि भूमावेवोपलक्ष्यते । तथा च पृथिव्यामुक्तरूपत्वं सद्विशेषणत्वं सिद्धमित्याशयः ॥ ५१ ॥ एवमुत्पन्नानि तत्त्वानि ब्रह्मांडरूपस्य कार्योत्पादने स्वत एव समर्थानीति सांख्यमतनिरासायाह ॥ एतानीति । एतानि महदादीनि सप्ततत्त्वा-न्यसंहत्यामिलित्वा । मेलनाभावादिति हेतुसूचनायेदं । भोगायतनं ब्रह्मांडं तदंतर्गतब्रह्मशरीरं च जगदादिः श्रीनारायणोऽजसा कार्यजननशक्त्युद्बोधकरूपेणाविशत् । महदादीनिति वर्तते । अत्र सप्तेति प्राधान्यविवक्षयोक्तं । इंद्रियादीन्यपि ग्राह्याणि ॥५२॥

तेन भगवतोऽनुविद्धेभ्यः प्रेरितेभ्यो युक्तेभ्योंऽशैर्मिलितेभ्यः । भगवद्देतोरूपेण परिणतेभ्य इति यावत् । उत्थितं उत्पन्न । नन्वेवमस्य ब्रह्मांडत्वप्रसिद्धिः कुत इत्यतोऽत्र निमित्तमाह ॥ पुरुष इति । असौ विराट्पुरुषो ब्रह्मा यस्मादचेतनादंडादुदतिष्ठत् । तदचेतनमंडमिति पूर्वेणान्वयः । तथा च विराण्णामकब्रह्मशरीरकारणत्वादिदं ब्रह्मांडमित्युच्यत इति भावः । अत्र विराट्पुरुषो ब्रह्मैवेत्यत्र समाख्यामाह ॥ अचेतनादिति । आहुरचेतनं । अंडमिति शेषः । विराट् शब्दं ब्रह्मणि निर्वक्ति ॥ विराडिति । विराड् विराट् शब्दवाच्यः । प्रकाशनाद्विशेषेण प्रकाशनादित्यर्थः । राज दीप्ताविति धातोरिति भावः ॥ ५३ ॥ इदमुत्पन्नमंडं बाह्यांतरपदार्थसहितं भगवतः प्रतिमेति मंतव्यमित्याशयेनाह ॥ एतदंडमिति । ननु तोयादिभिरिति वचनात्पृथिवी न संगृहीतेत्यत उक्तं ॥ विशेषाख्यमिति । पृथिव्याख्यामित्यर्थः । तथा च पृथिव्या अंडखर्परसंलग्नत्वात्पृथिवी शब्दोंऽडेऽपि वर्तते । ततश्चांडपृथिव्योरेकशब्दप्रतिपाद्यत्वेनांडग्रहणेऽपि पृथिव्यपि गृहीतेति भावः । क्रमवृद्धैरित्यस्यैव विवरणं ॥ दशोत्तरैति । ॥ ५४ ॥ प्रधानेन गुणत्रयेण प्रकृत्या वा । यत्र यदंतर्लोकवितानः पातालादिलोकविस्तारो यद्विशेषाख्यं यत्तोयादिभिः परिवृत्तं यत्र च लोकवितानः । एतदंडं भगवतो हरे रूपं प्रतिमेत्यन्वयः ॥ ५५ ॥ इदानीं यस्मादुदतिष्ठदसौ विराडित्युक्तं विवृणोति ॥ हिरण्मयादिति । सलिले बहिरावरणे जलेशयाद्विद्यमानाद्धिरण्मयादंडकोशादंडकोशं प्रविश्य तदंतस्थसलिले सहस्रवर्षपर्यंतं योगनिद्रां विधाय तदनंतरमुत्थाय स्ववीर्येण ब्रह्मदेहं सृष्ट्वा तं समाविश्य तस्य खं छिद्रं बहुधा नवधा निर्बिभेद चकार ॥ ५६ ॥ तत्राध्यात्माधिदैवोत्पत्तिमाह ॥ निरभिद्यतेति । निरभिद्यत व्यक्तमभूत् । मुखं तन्नामकं गोलकं वाणी वागिंद्रियं तन्नामा तदभिमानी देवो वाण्या वाङ्नामकेनेंद्रियेणाधिदैवं वान्हिनामदेवो नासे नासापुटे गोलकरूपे घ्राण इंद्रियमंतर्घ्राणेंद्रियात्प्राणस्तदभिमानी नासिक्य एतयोर्नासापुटयोः । सप्तमीयं ॥ ५७ ॥ वायुरधिदैवं वायुनामाऽक्षिणीगोलके चक्षुरिंद्रियं तन्नामा तदभिमानी चैतयोर्गोलकयोर्दिशोऽधिदैवं दिङ्नामानः ॥ ५८ ॥ विराजो ब्रह्मणस्त्वग्गोलकभूता रोमश्मश्रादयस्तन्नामकं त्वगिंद्रियं देवाश्च । ततस्त्वगिंद्रियादोषधयोऽधिदैवं तन्नामानो देवाः । ततो ब्रह्मदेहात् शिश्नं गोलकमिंद्रियं च ॥ ५९ ॥ तस्माच्छिश्नात्तनामा गुह्येंद्रियाभिमान्यापः । अधिदैवं तन्नामानो देवाः । गुदं गोलकं पायुनामकमिंद्रियं च ग्राह्यं । अपानो वाग्व-

भिमानी स एवाधिदैवं मृत्युः बल हस्तेंद्रियं तदभिमानी च । स एवाधिदैवं स्वराडिंद्रः । गतिः पादनामकमिंद्रियं तदभिमानी च । तत इंद्रियात्स एवाधिदैवं हरिरुपेंद्रः । ननु हरेः कथं पादरूपेंद्रियाभिमानित्वं तत्रान्यदत्तस्वामित्वरूपेंद्रियाभिमानित्वस्य श्रुत्यादिबाधितत्वादित्यतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ यज्ञनामेति । तु शब्दस्तस्य यज्ञनामकभगवदपेक्षया नीचत्वसूचकः । अन्यो यज्ञनामकाद्धरेः पाददेवता पादनामकेंद्रियाभिमानी पादनामा तदाविष्ट एवोपेंद्रनामा हरिर्नामाभिमानी । अतोऽनेनैवाभिप्रायेण तं हरिं पाददेवतामाह ऋषय इत्यर्थः । ननु कुत एवममुख्यार्थकल्पनं मुख्यमेवाभिमानित्वं तस्य कुतो न स्यादित्यत आह ॥ तस्येति । अभिमानित्वमन्यदत्तस्वामित्वरूपं पूर्णेति निरवधिकस्वामित्वपूर्णस्याभिमानकृतविकारशून्यस्य चेत्यर्थः ॥६१ ॥ नाड्यो गोलकस्थानीयाः । लोहितं रुधिरमिंद्रियस्थानीयं । आहृतमुत्पन्नं । नद्योऽधिदैवं नदीसंज्ञा उदरं गोलकस्थानीयं ॥ ६२ ॥ क्षुत्पिपासे इंद्रियस्थानीयेऽधिदैवं समुद्रनामा । हृदयं गोलकं मन इंद्रियमधिदैवं चंद्रनामा बुद्धिरिंद्रियमधिदैवं गिरां पतिर्बृहस्पतिरहंकारमिंद्रियमधिदैवं रुद्रश्चित्तमिंद्रियं तदभिमानी ब्रह्मा च चैत्य इत्यधिदैवस्थानीयं बाह्योक्तिः । नन्वयं ब्रह्मचित्तजश्चैत्यः क इत्यपेक्षायां ब्रह्मांतर्यामिणो हरे रूपांतरमिति प्रमाणेनैवाह ॥ चैत्योऽपीति । चैत्योऽपि चित्तनामकोऽपि सन् चतुर्मुखाद्विराजः । नन्वनादेस्तस्य कथं ब्रह्मजत्वमित्यत आह ॥ स्वेच्छयेति । तथा च वन्ह्यादिवद्विराजोऽन्यस्याधिदैवस्याभावात्तत्स्थानीयो ब्रह्मांतर्यामी हरिरेव ब्रह्मचित्तजो जात इत्याशयः । बुद्ध्यहंकारचित्तानामपि हृदयमेव गोलकतया वर्णनीयं । हृदय शब्दश्च तत्रत्यनाडीविशेषपर इति ज्ञातव्यं ॥ ६३ ॥ इदानीं ब्रह्मवाय्वोः सर्वदेवतोत्तमत्वज्ञापनपूर्वकं हरेः सर्वदेवोत्तमत्वज्ञापनायेतरदेवानां ब्रह्मदेहोत्थापनेऽशक्तिं ब्रह्मवाय्वोस्तत्र शक्तिं च वक्तुमाह ॥ एते हीति । हीत्यनेन तच्छ्रुतिप्रसिद्धमिति दर्शयति । अभ्युत्थिता बहिर्निर्गता अस्य ब्रह्मण उत्थापने बहिर्निष्कासने । स्वानि गोलकस्थानानि । तं देहांतर्गतं विराजमुत्थापयितुं चेष्टायुक्तं कर्तुं ॥ ६४ ॥ वाचा वाङ्नामकेन स्वांशेनेंद्रियेण च । एवमग्रेऽपि ॥ ६५ ॥–६८ ॥ विष्णुर्गत्येवेति । अत्र विष्णोरशक्तिप्रसक्तौ तात्पर्यं प्रमाणेनैवाह ॥ यज्ञांतस्थ इति । तु शब्दोऽवधारणे । बलज्ञप्त्या वेत्यन्वयः । अशक्त एव किं न स्यादित्यत आह ॥ तत्स्थ इति । यत इति शेषः । तत्स्थो ब्रह्मवायुस्थः ॥ ७० ॥ बुद्ध्या ब्रह्मापि हृदयमित्यत्र ब्रह्म शब्दो

न विराट्पर इत्याह ॥ ब्रह्मेति । ब्रह्म शब्दस्य बृहस्पतिपरत्वं कुत इत्यतस्तत्र श्रौतप्रयोगं तावद्दर्शयति ॥ यस्मिन्निति । तस्मै विशः स्वयमेवानमंते यस्मिन् ब्रह्मा राजनि पूर्व एतीति श्रुतौ यस्मिन् राजनींद्रे निर्गते सति ब्रह्मा पूर्व एति तस्मै राज्ञे विशः प्रजाः स्वयमेवामनंत इति श्रुत्यर्थः । अत्रेदं पुरो गंतृत्वलिंगेन ब्रह्म शब्दो बृहस्पतिपरतया निर्णीत इति भावः । अत्राभिधानमप्याह ॥ बृहस्पतिरिति ॥ ७१ ॥ चित्तेनेति । चैत्यश्चैत्यनामा क्षेत्रज्ञो ब्रह्मांतर्यामी । चित्तेन तन्नामकेन ब्रह्मणा सह हृदयं प्राविशदित्यर्थः । अत्र ब्रह्मणः स्वदेहादितरदेववत्सर्वात्मना बहिर्निर्गमनेनोदातिष्ठत्तदा विराडित्युक्ताविरोधः । प्रमाणे न विराजस्तत्रैकांशेनावस्थानावगमादतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ अंशेनेति । सुप्तो निर्व्यापारस्थितः । अविशंस्त्वय इत्युक्त्या मूले वायुरपि ग्राह्य इति सूचयति ॥ एषां साम्यशंकायामाह ॥ विशेषेणेति । श्रियः पतेरित्यनेन श्रियोऽपि तन्नियामकत्वं नास्तीति सूचयति । ननु चित्तेन हृदयं चैत्य इति श्लोकार्धे ततस्ते त्वविशंस्त्वय इत्यादिनोच्यते । तत्र ब्रह्मविष्णुवायुवाचकपदानि कानीत्यपेक्षायां तानि दर्शयन् ब्रह्मादिपरतया व्याख्याति ॥ चित्ताभिमानीति । तथा च चित्तपदेन ब्रह्मा ग्राह्य इति भावः । तद्गतो ब्रह्मांतर्यामी विष्णुः क्षेत्रज्ञः क्षेत्रपदवाच्यः । उत्तरश्लोके प्राणेंद्रियमनोधिय इति वक्ष्यमाणत्वादत्रापि प्राणो ग्राह्य इति भावः । तस्य व्याख्यानं ॥ प्राणो वायुरिति । विशेषेण हरिरेवेत्यत्र हेतुमाह ॥ तयोरीश इति । यत इति शेषः । स्वयं स्वातंत्र्येण ॥ ७२ ॥ अत्र दृष्टांतमाह ॥ यथेति । प्राणो वायुरिंद्रियाणि तदभिमानिनो ब्रह्माद्या मनश्चंद्रो धीर्बृहस्पतिरेते येन हरिणा विना पुरुषं जीवं प्रसुप्तं कर्तुं न प्रभवंति । ओजसा स्वसामर्थ्येनैव येन विनोत्थापयितुं जाग्रदवस्थां कर्तुं च न प्रभवंति । तथा च तेन क्षेत्रज्ञेन हरिणा विना ब्रह्मदेहांतर्गताः प्राणादयो ब्रह्मदेहपतनोत्थानयोर्न शक्ता बभूवुरिति वाक्यशेषः ॥ ७३ ॥ एवं हरेः सर्वोत्तमत्वज्ञापनेन किं प्रयोजनमित्यतस्तद्ध्यानमेवेत्याह ॥ तमिति । तं सर्वेंद्रियदेवोत्तमं ब्रह्मवाय्वोरपीशं अस्मिन्देहे विद्यमानं प्रत्यगात्मानमंतर्यामिणं योगपक्कया प्रवृत्तया निवृत्तकर्मानुष्ठानादिरूपयोगजातया धिया बुद्ध्याऽपरोक्षरूपया जातेन ज्ञानेन मननरूपेण विविच्य सर्वोत्तमतया निश्चित्यात्मनि मनसि चिंतयेत् । अधिकारीति शेषः ॥ ७४ ॥

इति श्रीभागवतटिप्पण्यां सप्तविंशोऽध्यायः ॥ ३–२७ ॥ ॥

॥ हरिः ॐ ॥ जीवपरयोरेकशरीरस्थत्वेऽपि परस्य न तत्कृतदुःखादिभोगः किंतु जीवस्यैवेति यत्प्रागुक्तं तदेव तत्र तात्पर्यातिशयद्योतनाय पुनराह ॥ प्रकृतिस्थोऽपीत्यादिना । प्रकृतिस्थोऽपि प्राकृतशरीरस्थोऽपि । अत एव पुरुषो भगवान् नाज्यते न लिप्यते प्राकृतैः शरीरनिमित्तैर्गुणैर्दुःखादिभिरकर्तृत्वात्परतंत्रकर्तृत्वरहितत्वान्निर्गुणत्वात्सत्त्वादिगुणशून्यत्वाज्जलार्कवत्प्रतिबिंबजननद्वारा जलगतबिंबभूततस्यार्कस्य यथा न जलगुणदुष्टत्वं तथैवेत्यर्थः । जलार्कवज्जलप्रतिबिंबितार्कवत्पुरुषो जीव एव लिप्यत इत्यपि ग्राह्यं ॥१॥ ननु जीवस्यापि स्वतश्चिद्रूपस्य कुतोऽयं स्वाभाविकः संसार इत्याशंकायां तत्र कारणमाह ॥ स एषइति । प्रत्यगात्मानमात्मनि चिंतयेदिति । कर्तृतया पूर्वाध्यायांते प्रकृत एषः पूर्वश्लोके प्रकृतो जीवो यर्हि यदा प्रकृतेर्गुणेषु शरीरकार्यसुखादिष्वभिविषज्जतेऽनुभवेन संबद्ध्यते तदाऽहंकारेण मनः प्रभेदरूपेणेंद्रियेण विमूढात्माऽज्ञात परमात्मा स्वातंत्र्योऽहमेव सुखदुःखादौ कर्ताऽस्मीत्यभिमन्यतेऽभिमानवान् भवति ॥ २ ॥ तेनाभिमानेनावशः परब्रह्माधीनः संसारपदवीमभ्येति प्राप्नोति । कथं भूतः । प्रासंगिकैर्विषयस्नेहनिमित्तकैः कर्मदोषैः पुण्यपापैः सदसन्मिश्रयोनिषु देवासुरमनुष्ययोनिष्वनिर्वृतो दुःखासंभिन्नसुखरहितः सन् आत्यंतिकसुखरूपं प्रयोजनाभावेऽपि संसारपदवीमभ्येतीत्याशयः ॥ ३ ॥ ननु प्रयोजनाभावादस्वाभाविको जीवस्य संसारः किं स्वयमेव निवर्तेत नेत्याह ॥ अर्थे हीति । अर्थे प्रयोजनेऽविद्यमानेऽपि । विषयान्ध्यायत इति हेतुगर्भविशेषणं । हि शब्देन ध्यायतो विषयान्पुंसः संगस्तेषूपजायत इत्यागमसिद्धिं दर्शयति । विषयाभिध्यानजनितकामादिना पुनः संसरतीत्याशयः । अत्र दृष्टांतमाह ॥ स्वप्न इति । यथा जाग्रदवस्थायां नानाविधान्पदार्थान्ध्यायतः । तज्जनितसंस्कारैः स्वप्ने स्वप्नावस्थायां न विद्यतेऽर्थः प्रयोजनं यस्य तस्य संसारस्यागमः प्राप्तिस्तथेत्यर्थः ॥ ४ ॥ इदानीं संसारनिवृत्त्युपायमाह ॥ प्रबुद्ध्येति । अत्र स्वप्नसुप्तिभ्यां प्रबुद्ध्यात्मवैशसं वैतथ्यं व्यभिचारं च स्मरन्नित्युक्त्या जाग्रदवस्थाया आत्मवैशसादिस्मरणकारणत्वमुच्यत इति भाति । न च तत्संभवति । जाग्रतां तदनुपलंभात् । अतोऽत्र विवक्षितं सुप्तिशब्दार्थं प्रमाणेनैव दर्शयति ॥ अज्ञानमिति । प्रकृत इति शेषः । न प्रसिद्धावस्थापर इत्येव शब्दः ॥ ततश्चायं श्लोकार्थः ॥ स्वप्नसुप्तिभ्यां विपरीतज्ञानाभ्यां दुर्विषयसेवयाऽऽत्मवैशसमात्मनाशं प्रबुद्ध्य गुरूपदेशेन प्रकर्षेण ज्ञात्वा विषयाणां वैतथ्यं नित्यपुरुषार्थासाधनत्वं । व्यभिचारं स्वात्मानं विहायाप-

गमनं चास्मरन्नसौ अधिकारीमान्विषयान्न ध्यायेत् । यतो येभ्यः पुनः संसारलक्षणं भयं भवति ॥ ५ ॥ गुरूपदेशादिमतामप्युक्तरीत्या विषयध्याने मनसो हरौ निवेशनमेव हेतुरित्याह ॥ अत एवेति । यत एवं मनसो विषयेषु संगः संसारहेतुरत एवेत्यर्थः । असतां विषयाणां पथि मार्गे प्रसक्तं वशं नयेत् । यथा हरिविषयमेव स्यात्तथा कुर्यादित्यर्थः ॥ ६ ॥ मनो वशीकरणेऽपि कारणानि दर्शयन् तत्साध्यं भगवदपरोक्षज्ञानमेव मोक्षसाधनमित्याह ॥ यमादिभिरित्यादिना । अभ्यसन्पुनः पुनश्चित्तमेकाग्रीकुर्वन् भावेन भक्त्या सत्येन सज्जनहितवचनेन ॥ ७ ॥ सर्वभूतसमत्वेन सर्वत्र भगवतः पूर्णत्वादिना साम्यदर्शनेन । तत्तद्वस्तुयोग्यतानुसारिज्ञानेन वा । निर्वैरेण वैष्णवद्वेषराहित्येनाप्रसंगतो दुष्टसंगत्यागेन स्वधर्मेण स्वविहितधर्मानुष्ठानेनेश्वरार्पणादिना महीयसा यदृच्छयैवोपलब्धेन स्वप्रयत्नाभावेऽपि हरीच्छया प्राप्तधनेन विविक्तशरण एकांतवासी शांतो भगवदेकनिष्ठः । मैत्रः स्वसमेषु मित्रबुद्धिमान् करुणः स्वनीचसज्जनेषु कृपावान् आत्मवान्स्वोत्तमेषु स्वामित्वबुद्धिमान् ॥८॥ असदाग्रहमविद्यमानममताबुद्धिं । प्रकृतेः पुरुषस्य दृष्टं यथावद्विषयीकृतं तत्त्वं स्वरूपं येन तेन ज्ञानेन ॥९॥१०॥ निवृत्तबुद्ध्यवस्थान इत्यत्र प्रकृतसंगतं बुद्ध्यवस्थानशब्दार्थं दर्शयति ॥ बुद्धेरवस्थानमिति । आदि पदेन स्वप्नसंग्रहः । तथा च निवृत्तनिद्रावानित्यर्थः । श्रवणादिविना नैव क्षणं तिष्ठेदपि क्वचित् । अत्यशक्ये तु निद्रादौ पुनरेव समभ्यसेदिति वचनात् । अन्यदर्शनं विषयदर्शनं शास्त्रं वा । आत्मना मनसाऽऽत्मानं स्वस्वामिनं परमात्मानमुपलभ्यापरोक्षतया ज्ञात्वाऽऽत्मदृक् तद्दासतया स्वात्मदृक् ॥ ११ ॥ मुक्तलिंगस्त्यक्तलिंगशरीरः सन् मुख्यवायुराभासः प्रतिबिंबो यस्य स सदाभासः । तं वायुः स्वप्राप्तान्स्वबिंबभूतं ब्रह्म प्रापयतीति प्रदर्शनायेदं विशेषणं । असतीत्यस्य प्रकृतसंगतमर्थमाह ॥ असतीति । महाप्रलय इत्यर्थः । सतो वायोः बंधुं पितरं सतो बंधुमसती निरविंदन्निति श्रुत्यर्थानुवादोऽयमिति ज्ञातव्यं । सर्वरूपेषु पूर्णत्वादिना समं । चष्ट इति चक्षुः सर्वज्ञं सर्वेषु प्राणिषु नियामकतयाऽनुस्यूतं प्रविष्टं । अद्वयं समाधिकरहितं ॥ १२ ॥ उपलभ्यात्मनात्मानमित्युक्तं भगवदपरोक्षज्ञानं स्वबिंबद्वारेणैव भवतीति दृष्टांतमुखेनाह ॥ यथा जलस्थ इति । भस्मादिनिर्णिक्तकांस्यपात्रस्थले स्थित आभासः सूर्यप्रतिबिंबो यथा गृहांतर्वर्तिभित्त्यादौ प्रतिफलति तदा गृहास्थितैः पुरुषैर्भित्त्यादिस्थलस्थेन स्वाभासेन बिंबभूतः कांस्यपात्रगतजलस्थ आभासः

सूर्यप्रतिबिंबो दृश्यते तथा चेतनजलस्थेन स्वाभासेन दिवि स्थितः सूर्यो बिंबभूतो दृश्यते ॥ १३ ॥ दार्ष्टांतिकमाह ॥ एवमिति । अप्रतीतेरेतत् श्लोकतात्पर्यं प्रमाणेनैव दर्शयति शेषस्येति । शेषस्याहंकाराभिमानिनः । देवा भूतेंद्रियाभिमानिनः । ब्रह्मणः सन्नामकस्य परब्रह्मणः सत्यदृक् शब्दवाच्यस्य । एव शब्दो यत इत्यर्थे । यतस्ते स्वबिंबदर्शकास्तत इति योज्यं । अनेन स्वाभासैरित्यादितृतीयांतपदानां तात्पर्यमुक्तमिति ज्ञेयं ॥ ततश्चायं श्लोकार्थः ॥ एवं तथा त्रिवृद्वैकारिकादिभेदेन त्रिविधोऽहंकारस्तदभिमानी शेषः स्वाभासैः स्वबिंबैर्भूतेंद्रियमनोगुणैः । गुणाः शब्दादयः सत आभासः । षष्ठीतत्पुरुषोऽभिप्रेतः । तदभिमानिभिर्देवैर्लक्षितो ज्ञातो भवति । सदा भासेन ब्रह्मप्रतिबिंबभूतेनानेन शेषेण सत्यदृक् स्वप्रतिबिंबभूतो ब्रह्मालक्षितो भवति । सदा भासेन सन्नामकपरब्रह्मप्रतिबिंबभूतेन ब्रह्मणा सत्यदृक् स्वपरगतबाह्याखिलविशेषदृक् परमात्मा लक्षितो भवतीत्यपि योज्यं । तथा चाधिकारिणां परमात्मापरोक्षज्ञानं स्वबिंबद्वारेणैव भवतीति भावः ॥ १२ ॥ १३ ॥ परमात्मापरोक्षज्ञाने जीवपरयोर्वैलक्षण्याज्ञानं जीवस्य भगवदाश्रितत्वादिज्ञानं च मुख्यकारणमित्याशयेनाह ॥ भूतसूक्ष्मेति । अत्र भूतसूक्ष्मेत्यारभ्यातुर इत्यंतस्यैकवाक्यताभ्रमंवारयन्योजनां दर्शयति ॥ यो विनिद्र इति । तथा चायं श्लोकः पूर्वश्लोकोक्तसत्यदृक् स्वरूपपर इति भावः । तद्वैपरीत्येन जीवस्वरूपपरं मन्यमान इति श्लोकमन्वयं दर्शयन्व्याख्याति ॥ य इति । अनेन पूर्वश्लोकगतयच्छब्दस्यात्राप्यनुवृत्तिरिति सूचयति । अनष्टोऽविलुप्तस्वरूपो नष्टवन्मृतवत् । वत्यर्थसादृश्यप्रदर्शनायाह ॥ नाज्ञाशिषमिति ॥ मन्यमान इति । आतुरो विवशो द्रष्टाऽऽतुरद्रष्ट शब्दवाच्यो जीव इत्यर्थः ॥ ततश्चायं श्लोकद्वयार्थः ॥ असति प्रलये भूतादिषु जीवेषु नष्टेष्विह संसारिषु निद्रया प्रलयकालीनया लीनेषु श्लिष्टेषु यस्तत्र तस्यामवस्थायां विगतनिद्रो निरहंक्रियोऽहंकारशून्यः स सत्यदृक् नित्यदृक् परमात्मा । जीवस्तु नैतादृश इत्याह ॥ मन्यमान इति । योऽनष्टोऽविलुप्तस्वरूपोऽपि तदा प्रलयेऽहंकरणेऽहंकारममकाररूपाभिमानजनके मनःप्रभेदरूपेऽहंकारे नष्टे सति मृषाऽऽत्मानं स्वात्मानं नष्टवन्मृतवन्मन्यमानः । मृतो यथा मरणानंतरं मरणसमये किमपि नाज्ञाशिषमिति मन्यते एवं प्रलयानंतरं पुनः स्थूलशरीरप्राप्तौ । एतावंतं कालं प्रलये किमपि नाज्ञाशिषमिति मन्यमान इति यावत् । स आतुरो द्रष्टा विवशद्रष्टा जीवः । नाज्ञा-

शिषमित्यनुभवस्य मृषात्वोपपादनाय द्रष्टेत्युक्तं । तदाऽपि स्वस्वरूपकालादिद्रष्टेत्यर्थः ॥ १४ ॥ १६ ॥ एवं जीवपरयो- वैलक्षण्यं प्रत्यवमृश्य सम्यग्विचार्यासावधिकार्यात्मानं परमात्मानं प्रतिपद्यतेऽपरोक्षतो जानाति । कथं भूत आत्मेत्यत उक्तं ॥ साहंकारस्येति । साहंकारद्रव्यशब्दयोः प्रकृतसंगतमर्थं दर्शयति ॥ साहंकारमिति । निरहंकृतिरित्यस्य हि प्रतियोगितयेदमुच्यते । अतः साहंकारद्रव्यशब्दो जीवपर एव युक्त इति भावः । अवस्थानमाश्रयोऽनुग्राहकश्च यः स परमात्मेत्यर्थः । भूतसूक्ष्मेत्यादि श्लोकत्रयोक्तार्थे प्रमाणसंवादं दर्शयति ॥ नित्यदृगिति । अनेन सत्यदृगित्यनेनान्वयः प्रमापित इति ज्ञातव्यं। नष्टवदित्यस्यार्थः॥ मृतवदिति । वत्यर्थप्रदर्शनं ॥ न किंचन जानातीति । आतुर आतुरद्रष्टेत्यस्यार्थः ॥ जीव इति । आत्म शब्दार्थः ॥ परमात्मेति। साहंकारस्येत्यादेरर्थः ॥ तस्य जीवस्याश्रय इति ॥ १७ ॥ मुक्तलिंगः सदाभासमित्यत्र प्रकृत्यात्मकलिंगशरीरसंबंधाभावो मुक्त- स्योक्तः स न युक्त इत्याशंकते ॥ पुरुषमिति । अत्र पुरुष शब्दो जीवपरः । कर्हिंचित्कदाचिदप्यनयोः प्रकृतिपुरुषयोर्नित्यत्वा- दन्योन्याश्रयत्वाच्चान्यतरं विनाऽन्यतरस्य प्रवृत्त्यादावसामर्थ्याच्चेत्यर्थः । तथा च प्रकृतिपुरुषसंबंधस्यानादितो विद्यमानस्य संबंधिद्वयाऽविनाभूतस्य संबंधिद्वयसत्वे कथमपगम इति शंकार्थः ॥ १८ ॥ एतदेव दृष्टांतमुखेनोपपादयति ॥ यथेति । भूमे- स्तद्गुणस्य गंधस्य च व्यतिरेकतो भावो विनाभावो नास्ति । तथा च तयोः संबंधस्तदुभयाविनाभूत इति भावः । एवमपा- मित्येतदपि व्याख्येयं । तथा च यः संबंधः संबंधिद्वयाविनाभूतः स सति संबंधिद्वये न नश्यतीत्यत्रेदमुदाहरणद्वयमिति भावः। उपनयमाह ॥ तथा बुद्धेरिति । प्रकृतेरित्यर्थः । परस्य तद्विलक्षणस्य जीवस्याव्यतिरेकतो भावो नास्ति ॥ १९ ॥ निगमयति॥ अकर्तुरिति । अतस्तस्मात्प्रकृतिं विना कर्तुः पुरुषस्यायमनादिसिद्धः कर्मबंधः संसारो यदाश्रयो यन्मूलस्तेषु प्रकृतेर्गुणेषु सत्त्वादिषु सत्सु विद्यमानेषु प्रकृतेः सत्त्वादिरूपायाः सकाशात्कैवल्यं मोक्षः कथं न कथमपीत्यर्थः । संबंधिद्वयसत्वे तदविना- भूतसंबंधनिवृत्तिः कथमिति भावः । ननु प्रबुद्धः स्वप्नसुप्तिभ्यामित्यादिना संसारमोक्षसाधनं मया कथितमित्यत आह ॥ सकृदिति । तत्त्वावमर्शेनोक्तरीत्या वैतथ्यव्यभिचारादिस्मरणेन विषयाध्याने मनोवशीकरणादिनाऽपरोक्षज्ञानेन कर्मक्षये स्थूल- शरीरप्राप्तिरूपभयस्य सकृन्निवृत्तावपि तन्निमित्तस्य लिंगशरीरस्योक्तरीत्याऽनिवृत्तत्वात्पुनः स्थूलशरीरप्राप्तिरूपं भयं प्रत्यवतिष्ठत

एव । यथा प्रलये स्थूलशरीराभावेऽपि सूक्ष्मशरीरसत्वेन पुनः संसारारंभः सृष्टिसमये तथैवेत्याशयः । न च कर्मनाशात्पुनः कथं संसारारंभ इति वाच्यं । कर्मसंबंधस्यापि प्रकृतिसंबंधतुल्यतया सर्वात्मनाऽपगमासंभवादित्याशयात् ॥ २० ॥ उक्तवक्ष्यमाणसाधनसंदर्भजातेनाघटितघटकेन प्रसादेनानिवर्त्यतया प्रसक्तोऽपि प्रकृतिसंबंधः कर्मसंबंधश्च सर्वथा निवर्तते । तथा च निवृत्तनिमित्तत्वाभावान्न पुनः संसारारंभ इत्याशयेन समाधानमाह ॥ अनिमित्तेत्यादिना । अः परमात्मा तन्निमित्तं तत्प्रीत्यर्थं प्रवृत्तेनानुष्ठितेनात एवामलात्मना निर्दुष्टेन मनसा चिरं श्रुत्या वेदांतश्रवणेनैव संभृतया सम्यग्वर्धितया ॥ २२ ॥ दृष्टतत्त्वेन विषयीकृतपरापरतत्त्वेन योगेन प्राणायामादिरूपेणात्मसमाधिना मनस एकाग्रतालक्षणध्यानेन ॥ २३ ॥ अग्नेर्योनिः स्थानभूताऽरणिदृष्टांतास्तिरोभावमात्रे न नाशे प्रकृतेर्नित्यत्वादिति ज्ञेयं ॥ २४ ॥ ईश्वरस्य भगवत्प्रसादेन प्रकृतिजये समर्थस्य स्वे महिम्नि स्वस्वरूपभूतानंदानुभवे स्थितस्य तद्युक्तस्य ॥ २५ ॥ अप्रतिबुद्धस्य जाग्रदाद्यवस्थाशून्यस्य प्रस्वापो निद्रा बह्वनर्थकृत् स्वाप्नव्याघ्रादिनिमित्तभयजनकः । प्रतिबुद्धस्य जाग्रतः ॥ २६ ॥ नापकुरुते । मत्प्रभावादिति शेषः ॥ २७ ॥ एवमुक्तसाधनानुष्ठानेऽपि प्रकृत्यप्रसरणमस्मिन् जन्मनि नोपलभ्यत इत्याशंकायामाह ॥ यदैवमिति । अध्यात्मरतः परमात्मरतः ॥२८॥ प्रतिबुद्धार्थोऽपरोक्षीकृतपरतत्त्वः । स्वसंस्थानं स्वस्वरूपाविर्भावरूपं ॥ २९ ॥ स्वदृशा स्वस्य भगवद्दासत्वापरोक्ष्येण ॥ ३० ॥ जीवन्मुक्तो ज्ञानसामर्थ्यप्राप्ताणिमाद्यैश्वर्यभोगानासक्तश्चेत्क्षिप्रमेव मल्लोकं व्रजतीत्याह ॥ यदेति । योगोपचितासु विद्यासामर्थ्यलब्धासु मायास्वणिमादिविभूतिषु न विषज्जेत विशेषेण सक्तं न भवति । अनन्यहेतुषु न विद्यते मदन्यो हेतुर्यासां । अथ तदाऽऽत्यंतिकी पुनरावर्तिवर्जिता । मृत्योर्यमस्य हासो व्यापारो मृतिरूपो यत्र यस्यां गतौ नेत्यर्थः । अपरोक्षज्ञानिनोऽणिमादिसिद्धयोऽपि प्राप्ता भवंति । तासु यद्यासक्तस्तर्हि मल्लोकगमने विलंबो यद्यनासक्तस्तर्हि क्षिप्रमेव मल्लोकं गच्छतीति भावः ॥ ३० ॥ इति श्रीभागवतटिप्पण्यामष्टाविंशोऽध्यायः ॥ ३—२८ ॥ ॥

॥ हरिः ॐ ॥ इदानीमपरोक्षज्ञानजनकमष्टविधयोगं वक्ष्यामीति प्रतिजानीते ॥ योगस्येति । अत्र सबीजस्येत्यस्य प्रकृतासंगतमर्थं तद्व्यावर्त्यं च प्रमाणेनैव दर्शयति ॥ सबीज इति । कुत इत्यत आह ॥ बीजमिति । हि यस्माद्विष्णुर्व्यंजकत्वाद्बीज

शब्दवाच्यः । अन्यद्देवास्तु न तथा । किंतु शाखारूपा एवातो युक्तमुक्तमित्यर्थः । सबीजस्य विष्णुसहितस्य विष्णुदेवताकस्य । योगस्याष्टांगस्य लक्षणं स्वरूपं । नृपात्मजे मनो येन विधिना प्रकारेण प्रसन्नं सत् । सत्पथं ब्रह्ममार्गं ॥ १ ॥ तत्र नियमानाह ॥ स्वधर्माचरणमित्यादिना । विधर्माद्धर्मवद्वभासमानात् । शास्त्रनिषिद्धाच्च । निवर्तनं परित्यागः । संतोषोऽलंबुद्धिः । आत्मविदां ब्रह्मविदां ब्रह्मज्ञानिनां श्रीपादार्चनं ॥ २ ॥ ग्राम्यस्त्रैवर्गिको धर्मस्तस्मान्निवृत्तिः । मोक्षधर्मरतिर्निवृत्तधर्मसेवा । मितं च तन्मेध्यं च शुद्धं च तस्यादनं । तत्र द्वौ भागौ पूरयेदन्नैस्तोयेनैकं पूरयेन्मारुतस्य प्रचारार्थं चतुर्थमवशेषयेदिति स्मृत्युक्तप्रकारेण मितत्वं ज्ञातव्यं । विविक्तो भगवांस्तत्क्षेत्रसेवनं । विजनक्षेत्रसेवनमिति वा ॥ ३ ॥ यमानाह ॥ अहिंसेत्यादिना । अहिंसा शास्त्रनिषिद्धहिंसावर्जनं । सत्यं सद्धितकथनं । अस्तेयं स्वाम्यननुज्ञातस्य तृणादेरप्यग्रहणं । यावताऽर्थः शरीरावस्थितिरूपं प्रयोजनं भवति तावतो धान्यादेः परिग्रहः स्वीकारः ॥ ४ ॥ आसनादीन्यंगान्याह ॥ सदाऽऽसनेत्यादिना । सदा पद्माद्यासनरूपजयः । स्थैर्यं वैष्णवसिद्धांतादचलनं । प्राणायामैः प्राणानां जयः । मनसा सहेंद्रियाणां विषयात् । विषयेभ्यो हृदि स्थितं हरिं प्रत्याहरणमानीय स्थापनं ॥ ५ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभेदेन योगोऽष्टविधः । तत्र यमादीनां पंचानां धारणाद्यंगत्वमित्याशयेन तान्युक्त्वेदानीं धारणादिकमाह ॥ स्वाधिष्ण्यानामिति । स्वस्य विष्णोर्धिष्ण्यानां पदादिस्थानानां मध्ये एकदेशे एकैकावयवे मनसा सह प्राणानामिंद्रियाणां धारणं स्थापनं । एकैकावयवस्मरणमिति यावत् । तदुक्तं । खंडस्मृतिर्धारणा स्यादिति । धारणासाध्यं समग्रांगध्यानमाह ॥ वैकुंठेति । वैकुंठस्य हरेर्लीलानां स्वयोग्योपसंहार्यगुणानामभिसम्यग्ध्यानं । ध्यानसाध्यं समाधिमाह ॥ समाधानमिति । आत्मनो मनसः समाधानं समाधिः । अत्र ध्यानाभिन्नं समाधि शब्दार्थं प्रमाणेनैव दर्शयति ॥ समाधिरिति । हराविति शेषः । तथा च प्रयत्नेन हरौ मनसः स्थितिर्ध्यानमतो न पौनरुक्त्यमिति भावः ॥ ६ ॥ एतैरन्यैश्चेति । व्रतदानादिभिः पथिभिरुपायैर्बुद्ध्या हरावेके युंजीतमेव चिंतयेदित्यर्थः । शनकैर्जितप्राणो जितश्वासः । जितेंद्रिय इति वा । पूर्वावस्थाद्यनुवादोऽयं ॥ ७ ॥ आसनमारभ्य समाधिपर्यंतमुक्तं पुनर्विशदयति ॥ शुचावित्यादिना । अन्यैश्च व्रतदानादिभिर्विजितासनोऽभ्यस्तपद्मासनः । आसनं चैलाजिनकुशोत्तरं तस्मिन्स्वस्ति

यथा स्यात्तथा सम्यगासीनः । स्वास्तिक इति पाठे वीरपद्मादेरुपलक्षणं । अभ्यसेत् । प्राणधारणमिति शेषः ॥ ८ ॥ तदेवाह ॥ प्राणस्येति । प्रतिकूलेन रेचकादिक्रमेण । वा शब्दाद्रेचकपूरककुंभकैरिति पक्षांतरमपि सूचयति । यथा स्थिरं सद्चंचलं चंचलं यथा न भवति तथा शोधयेत् ॥ ९ ॥ प्राणायामफलमाह ॥ मन इति । ध्मातं संतप्तं लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात् । ततश्चाचलं स्यादिति भावः ॥ १० ॥ प्राणायामादिफलं विवृण्वन् धारणादिफलमाह ॥ प्राणायामैरिति । दोषान्मनोदोषान् रागादीन्धारणाभिः स्वधिष्ण्यानामेकदेश इत्युक्तिभिः किल्बिषान् ब्रह्महत्यादिकान्संसर्गान्दुष्टविषयसंसर्गान्ध्यानेन वैकुंठलीलाभिध्यानेनेत्यत्रोक्तेन हरेः सर्ववैलक्षण्यध्यानेनानीश्वरानीश्वरव्यतिरिक्तान् गुणान् दहेद्दूरीकुर्यात् । तान्द्रष्टुं नेक्षते तद्दर्शनेच्छा न भवतीत्याशयः । यद्वक्ष्यति । न पृथग्दिदृक्षोदेति ॥ ११ ॥ योगेन प्राणायामादिरूपेण सुसमाहितमप्रयत्नेन हरौ स्थितं भवति । काष्ठामुत्कृष्टतारतम्यावधिभूतां मूर्तिं । स्वनासाग्रावलोकन इत्यनेन दिशामनवलोकनं सूचयति ॥ १२ ॥ ध्येयमूर्तिं वर्णयति ॥ प्रसन्नेत्यादिभिः । पद्मगर्भवत्पद्मांतर्भागवदरुणे ईक्षणे नेत्रे यस्य तं ॥ १३ ॥ लसतः पंकजस्य किंजल्कवत्केसरवत्पीतकौशेये वाससी यस्य तं । श्रीवत्सो वक्षो यस्य । भ्राजत्कौस्तुभेन मुक्ता संश्लिष्टा कंधरा यस्य ॥ १४ ॥ मत्तैर्द्विरेफैर्भ्रमरैराकुलया व्याप्तया । परार्ध्यान्यनर्घ्यतया श्रेष्ठानि हारादीनि यस्य तं ॥ १५ ॥ कांचीगुणेन कांचीकलापेनोल्लसंती श्रोणिर्नितंबप्रदेशो यस्य । भक्तानां हृदयांभोजमेव विष्टरमासनं यस्य । भक्तानां मनांसि नयनानि च वर्धयति वर्षयतीति मनोनयनस्य वर्धनं ॥ १६ ॥ आपीच्यदर्शनं प्राप्तषोडशवर्षवद्दृश्यमानं । अथवा । कैशोरवयसि द्वादशवर्षलक्षणे संतं स्थितं ॥ १७ ॥ कीर्तन्यं कीर्तनयिं तीर्थं शुद्धं यशो यस्य स तथा तं । पुण्यश्लोका ब्रह्मादयो येषां यशःकरं यशः संपादकं ॥ १८ ॥ प्रेक्षणीयमीहितं चेष्टितं यस्य स तथा तं । शुद्धो भावो भक्तिर्यस्य तेन ॥ १९ ॥ तस्मिन्हरौ समग्रांगे लब्धं पदं प्राप्तं स्थानं सर्वावयवसंस्थितं युगपत्सर्वावयवविषयकतया स्थितं विलोक्यैकत्रावयवे संयुज्यात् । नन्विदमनुपपन्नं समग्रांगध्यानकाले एकत्र मनोयोगस्यासंगतत्वात् । अतोऽत्राभिप्रेतं तात्पर्यं दर्शयति ॥ सर्वस्मरणेति । अत्रांतरंगं ज्ञापकमाह ॥ यावन्न च्यवत इति । तत्र यावन्न च्यवते मन इत्युक्त्या समग्रांगे मनसश्च्यवनेऽसमग्रध्यानस्यार्थत उक्तत्वादित्याशयः । स्पष्टं च प्रमाण-

माह ॥ सर्वामिति । ततश्च तत्रासक्तं विलोकयेदिति मूलं योज्यमिति भावः ॥ २० ॥ एकत्र संयुज्यादित्युक्तमेव पादादिक्रमेण दर्शयति ॥ संचिंतयेदित्यादिना । पादतले रेखात्मकानि वज्रादीनि लांछनानि चिह्नानि तैराढ्यं युक्तं । उत्तुंगरक्तान्युत्कृष्टानि विलसंति नखानि तेषां चक्रवालं मंडलं तस्य ज्योत्स्नाभिराहतो दूरीकृतो महतां ध्यातॄणां हृदयांधकारो येन । यस्य चरणारविंदस्य शौचात्प्रक्षालनान्निःसृता सरित्प्रवरा गंगा तस्या उदकेन तीर्थेन पावनेन शिवो महादेवोऽपि शिवः परममंगलरूपत्वेन शिवनामधेयो ध्यातुर्मनसि वर्तमानो यः शमलशैलः पापपर्वतस्तद्विदारणाय निसृष्टं क्षिप्तं वज्रमिव वज्रं ॥ २२ ॥ जानुनी पूर्वोत्तरांतर्भूते इति भावेनोरूपास्तिमाह ॥ ऊरू इति । संचिंतयेदित्यन्वयः । भुजयोरधि उपरिस्कंधे । ओजसो बलस्य निधी आधारौ स्वतसिकाकुसुमं प्रफुल्लकल्पकुसुमं तद्वदवभासो ययोस्तौ । अथ नितंबं संचिंतयेत् । कथं भूतं । व्यालं विलंबमानं पीतं पीतवर्णं वरमुत्तमं । यद्वासस्तस्मिन्वर्तमानो यः कांचीकलापस्तेन परिरंभः संश्लेषो यस्यास्तीति परिरंभिकांचीकलापपर्यस्तवस्त्राच्छादितामिति यावत् ॥ २३ ॥ अमुष्य हरेर्नाभिहृदयं ध्यायेत् । निम्नत्वपद्माधारत्वसाम्येन नाभेर्ह्रदत्वोपमा । कथं भूतं । भुवनानां कोशभूता आश्रयभूता यदि काचिद्गुहा तत्तुल्यं यदुदरं तत्रस्थं । प्रसिद्धह्रदेऽपि पर्वतगुहोदरस्थो यत्र यस्मिन्नाभिह्रदे आत्मयोनेश्चतुर्मुखस्य धिषणं धिष्ण्यमखिललोकात्मकं पद्मं व्यूढमुत्थितं हरिन्मणिरिंद्रनीलरत्नस्तस्य प्रभां मुष्णतोऽमुष्य हरेः स्तनयोर्द्वयं ध्यायेत् । अनेन वस्तुतः स्तनद्वयमिंद्रनीलनिभमिति सूचयति । अथाऽपि विततानां विस्तृतानां हाराणां मयूखैः किरणैर्गौरं श्वेतमिव दृश्यमानमृषभस्य श्रेष्ठस्य हरेर्महाविभूतेर्महालक्ष्म्या अधिवासमावासस्थानं वक्षो मनसि कुर्यात् । पुंसां स्मर्तॄणां द्रष्टॄणां च निर्वृतिः सुखमादधानमुत्पादयत् । कौस्तुभमणेरधिकभूषणं भूषेवार्थः प्रयोजनं यस्य तं कंठं च मनसि कुर्यात् ॥ २५ ॥ बाहूंश्च संचिंतयेत् । मंदरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्तान्युज्वलीकृतानि बाहुवलयान्यंगदानि येषु । अधिश्रिता लोकपाला इंद्रादयो येषु । दशशतं सहस्रमराणि दलानि यस्य । असह्यं सोढुमशक्यं तेजो यस्य तच्चक्रं कर एव सरोरुहं पद्मं तत्र राजहंस इव वर्तमानं ॥ २६ ॥ कौमोदकीं नाम गदामस्य हरेः कंठे मालाममलं कौस्तुभमणिं च संस्मरेत् । कथं भूतां गदां । अरातयो भटा योद्धारस्तेषां शोणितं रुधिरमेव कर्दमं तेन दिग्धां लिप्तां कतं भूतां मालां । मधुव्रतानां

भ्रमराणां वरूथस्य समूहस्य गिरोपघुष्टां नादितां । कथं भूतं मणिं । चैत्यस्य तत्त्वं । अत्र चैत्य शब्दस्यार्थं प्रमाणेनैव दर्शयति ॥ अद्येति । चैत्यश्चैत्य शब्दवाच्यः । ननु चित्तेन हृदयं चैत्येत्यत्र पूर्वं चैत्यशब्देन हरिर्व्याख्यातः । तत्र किं निमित्त-मित्यपेक्षायां प्रसंगात्तत्रापि निमित्तमाह ॥ तन्नियमनादिति । चित्तनियमनादित्यर्थः । हरिश्चैत्यश्चैत्य शब्दवाच्य इत्यर्थः । एवं चैत्यशब्दार्थमुक्त्वाऽस्य कंठे चैत्यस्य तत्त्वं मणिमित्यस्य तात्पर्यमाह ॥ स चेति । च शब्दः प्रकृतत्वानुसंधानार्थः । अस्यै-त्यस्यार्थः ॥ हरिरिति । तत्त्वमित्यस्य तात्पर्यं ॥ कौस्तुभत्वेनेति । तथा च तत्त्व शब्दः स्वरूपपर इति भावः । अनेन चैत्यस्य चित्ताभिमानिनो ब्रह्मणस्तत्त्वं स्वरूपभूतं । अभिमन्यमानमिति यावदिति योजनां सूचयति । अभिमान्याभिमन्यमान-योरभेदव्यपदेशो महतश्चतुर्मुखादित्यादौ प्रसिद्धः ॥ २७ ॥ भृत्येष्वनुकंपिता कृपायुक्ता या धीस्तया गृहीता मूर्तिराकारविशेषो येन तस्य । यद्वदनारविंदं विस्फुरती विशेषेण दीप्यमाने ये मकराकारकुंडले तयोर्वल्गितेन प्रचलनेन विद्योतितावमलौ कपोलौ यस्मिंस्तत् । उदारो भक्ताभीष्टदानशूरो हासो यस्मिंस्तत् । श्रीनिकेतं । अत्र निरुपपदश्री शब्देन श्रीशब्द मुख्यवाच्या भगव-त्स्वरूपभूतैव श्रीर्विवक्षिता न लक्ष्मीः । तस्या वक्षस्थितेः पूर्वमुक्तत्वात् । मुख्यश्री शब्दवाच्यत्वाभावाच्चेत्याशयेन श्री शब्द-मुख्यवाच्या हरिस्वरूपश्रीरेवेत्यत्र प्रमाणमाह ॥ साक्षादिति । मुख्यया वृत्त्येत्यर्थः । श्रीः श्री शब्दवाच्या । तु शब्दोऽवधा-रणे । आद्यस्य रूपमेवेत्यन्वयः । तदाश्रयादेव श्रीरिति द्वितीयस्य । तथा च यद्वदनारविंदं श्रियो हरिस्वरूपभूतशोभाया निकेतमाश्रय इति मूलं योज्यमिति भावः ॥ २८ ॥ सौरभलोभादलिभिः परितः सेव्यमानं । यच्च स्वया स्वरूपभूतया भूत्या शोभयैव कुटिला वक्राः । न तु केनचिन्निमित्तेन । ते च ते कुंतला ललाटपतिताः केशविशेषास्तेषां वृंदेन समूहेन जुष्टं युक्तं । मीनद्वयस्यायामत्वपृथुमध्यत्वतनूभयभागत्वादिलक्षणं श्रियं कांतिमधिक्षिपती धिक्कुर्वती । अब्जसदृशनेत्रे यस्मिन्स तत्तथा । नित्यसापेक्षत्वात्समासः । मनोमयं प्राचुर्येण मनोविषयं । मनोहरमिति यावत् । अतंद्रित आलस्यवर्जितः । अनेन ध्याने आदरनैरंतर्ये सूचयति । उल्लसंत्यौ भ्रुवौ यस्मिंस्तत् ॥ २९ ॥ अवलोकमवलोकनं ध्यायेत् । कथं भूतं । कृपयाऽधिकं यथा स्यात्तथाऽक्ष्णोरक्षिभ्यां निसृष्टं प्रयुक्तं स्निग्धस्मितेन स्नेहयुक्तमंदहासेनानुगुणितमनुकूलितं । विपुलो

बहुतरः प्रसादो ज्ञेयो यस्मात्तं । विततभावनया वर्धमानभक्त्या शास्त्रजनितसंस्कारानुसारेण वा । गुहायां हृदि हरिं रहसि ध्यायेदित्यन्वयः ॥ ३० ॥ कथं भूतं । अवनता येऽखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा । अत्युदारं भक्ताभीष्टदानशूरं । भो मनुसुते । अस्य हरेर्भ्रूमंडलं च ध्यायेत् । कथं भूतं । निजमायया स्वेच्छया मकरध्वजस्य कामस्यापि संमोहनाय रचितं। सर्वमोहकोऽपि कामो हरेर्भ्रूमंडलरचनादर्शनेन स्वयमेव मोहितः सन् तस्मिंस्तदीयेषु चाकिंचित्करो जात इति भावः ॥३१॥ एवमेकैकावयवध्यानाय सचित्तस्य समग्रध्यानवपुमाह ॥ ध्यानायनमिति । रहस्येकांते स्थित्वा स्वहृत्कुहरके स्वहृदयगुहायामवासितस्य निश्चितावध्यानस्य विष्णोर्ध्यानायनमप्रयत्नेनैकैकावयवध्यानास्पदं तद्वपुर्ध्यायेत् । कथं भूतं । बहुलयाऽधिकयाऽधरोष्ठस्य भासा कांत्याऽरुणीकृतास्तनवः सूक्ष्मा द्विजा दंता एव कुंदकुड्मलानि तेषां पंक्तिर्यस्मिंस्तत्तथोक्तं । अनेन हासध्यानानंतरं दंतपंक्तिरप्येवं ध्येयेति सूचयति । ध्यातुर्ध्यानफलमाह ॥ भक्त्येति । प्रेमरसेनार्द्रया । पूर्णमिति यावत् । भक्त्या तस्मिन्नेवार्पितमनः स्थिरीकृतं चित्तो न पृथग्दिदृक्षेत् । अत्र स्वस्मात्परमात्मानं पृथङ्ङ दिदृक्षेदितिन्यथाप्रतीतिवारणाय तत्तात्पर्यमाह ॥ न पृथगिति । तथा च पृथक् तदातिरिक्तं वस्तु न दिदृक्षेद्द्रष्टुं नेच्छेत । किंतु तमेव दिदृक्षेदिति मूलं योज्यामिति भावः । भगवति चित्तैकाग्र्यरूपध्यानेन परमानंदलाभेन विषयदर्शनेच्छा न भवति । भगवद्दर्शनेच्छैव भवतीति ध्येयं ॥३२॥ ध्यानानंतरं साध्यसमाधिमाह ॥ एवं हराविति । प्रतिलब्धभावः प्रतिलब्धमनःस्थितिर्द्रवद्धृदय आर्द्रचित्त उदुत्कृष्टौ पुलकप्रमोदौ रोमांचहर्षौ यस्य स तथा । औत्कंठ्येनाविर्भूतया बाष्पकलयाऽश्रुधारया मुहुरर्द्यमान आर्द्रीक्रियमाणः पुमान् तच्चापि तदपि चित्तमुक्तरीत्या स्ववशमपि । च शब्दस्य वियुंक्ते चेत्यन्वयः । चित्तबडिशं दुर्ग्रहस्य भगवतो ग्रहणे मत्स्यबंधनवदुपायभूतं वियुंक्ते । अत्र वियुक्तं करोतीत्यन्यथाप्रतीतिवारणाय वियोग शब्दार्थमाह ॥ चित्तेति । वियोगो विशेषेण योगः । प्रयत्नाभावेऽपि योग इति यावत् । स च समाधिरूप एवेति भावः । तथा च चित्ताख्यं बडिशं हरौ शनकैरभ्यासपाटवानुसारेण वियुंक्ते विशेषेण योजयति अप्रयत्नेन स्थापयतीत्यर्थः । समाधिमान् भवतीति यावत् ॥ ३३ ॥ एवं विधस ाधिपरिपाकफलमपरोक्षज्ञानमित्याह ॥ मुक्ताश्रयमिति । अत्र मुक्ताश्रयमित्यस्य प्रकृतसंगतमर्थमाह ॥ मुक्ताश्रयमिति । स्वाचित्तमित्येतदपि

प्रकृतसंगतत्वेन योजयति ॥ स्वचित्तं जीवेति । स्वेत्यनुवादेन जीव इति व्याख्यानं । चिदित्यस्यार्थः ॥ चैतन्य इति । तकारार्थः ॥ ततमिति । निर्वाणमृच्छतीत्यस्य स्वरूपत एव नाशमृच्छतीत्यन्यथाप्रतीतिवारणाय प्रकृतोपयुक्तं तात्पर्यमाह ॥ निर्वाणमिति । तथा चाभिमाननाश एव निर्वाण शब्दार्थो न स्वरूपनाश इति भावः । तत्र स्वचित्तमित्येतद्धेतुतयोक्तमित्याशयेन तत्तात्पर्यमाह ॥ स्वचिदाभिमानेनेति । जीवस्वरूपचैतन्याभिमानेनेत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ यर्हि यदा मनो निर्विषयं विषयेभ्यो निर्गत्य मुक्ताश्रयं नित्यमुक्तविष्णुविषयं । उक्तसमाधियुक्तमिति यावत् । स्वाचित्तं जीवचैतन्ये ततं भवति चिदानंदात्मके स्वरूपदेह एव ममायं देह इत्यभिमानयुक्तं भवतीति यावत् । तेन स्वरूपदेहाभिमानेन सहसा निर्वाणमृच्छाति जडशरीराभिमानं जहाति मनोगतो जडशरीराभिमानो नश्यतीत्यर्थः । अत्र दृष्टांतमाह ॥ यथेति । यथाऽर्चिज्वाला सहसेंधनाद्यभावे निर्वाणमृच्छाति तथैवेति । अत्रास्यामवस्थायां पुरुष उपासको जीव एकं सर्वोत्तममव्यवधानं समाधिपरिपाकेन परमाच्छादिकाया व्यावृत्तितत्वेन लक्षणव्यवधानशून्यमात्मानं स्वबिंबादिरूपं परमात्मानमीक्षतेऽपरोक्षतः पश्यति । अनु पश्चादारब्धकर्मक्षये सति प्रतिनिवृत्तगुणप्रवाहः संसारशोषो यस्य स तथोक्तोऽप्रारब्धकर्मनिर्मितदेहपरंपराशून्यो भवतीत्यर्थः ॥३४॥ जीवन्मुक्तस्य स्थितिमाह ॥ सोऽप्येतयेति श्लोकद्वयेन । योऽपरोक्षतो हरिं दृष्टवान् स एतया समनसो निवृत्त्या जडशरीराभिमानत्यागरूपया सौषुप्तिकाभिमानत्यागवृत्तये चरमयेत्युक्तं । तस्मिन्पूर्वोक्तसुखदुःखबाह्ये महिम्नि स्वरूपज्ञानानंदलक्षणेऽवसितोऽहं निर्दोषज्ञानानंदादिस्वरूपो भगवदधीनोऽस्मीति निश्चितोऽसति कर्तरि स्वात्मन्स्वात्मनि दुःखयोर्हेतुत्वं कर्तृत्वमपि न विधत्ते न पश्यति । पूर्वश्लोकोक्तप्रतिनिवृत्तगुणप्रवाहत्वसमुच्चयार्थोऽपि शब्दः । यतः उपलब्धाऽपरोक्षतो ज्ञाता परमात्मनः काष्ठा कर्तृत्वादिरूपा स्थितिर्येन स तथोक्तः । अत्र कर्तर्यसति सतीत्यन्यथाप्रतीतिवारणायासति कर्तरीत्यस्य तात्पर्यं तद्व्यावर्त्यं च प्रमाणेनैवाह ॥ असत्कर्ता त्विति । तु शब्दोऽवधारणे । जीव एवेत्यन्वयः । तथा चासत्यस्वतंत्रे कर्तरीत्यर्थः । परमात्मनः सकर्तृत्वात्तद्व्यावृत्त्यर्थमेतद्विशेषणमिति भावः । दुःखयोरित्यस्य दुःखद्वयार्थप्रतीतिरणायार्थं प्रमाणेनैवाह ॥ दुर्दुःखमिति । तथा च दुर्दुःखं च खं सुखं च दुर्दुःखे तयोरिति मूलार्थ इति भावः ॥ ३५ ॥ येन देहेनापरोक्षज्ञानं जातं तं देहं चरमं पश्चा-

त्सिद्धोऽपरोक्षज्ञानी । स्थितं स्वप्रेरणयैकत्र स्थितमुज्झितं तत्स्थानरहितं च न पश्यति । किंतु दैवात्प्रारब्धाददृष्टप्रेरकेश्वरात् । तत्प्रेरणयैवेति यावत् । उपेतमेकत्र प्राप्तं । अपेतं तस्मादपगतं च पश्यति । कुतः । यतोऽध्यगमत्स्वरूपं चैतन्यात्मकं । सदेह एवाभिमानवान्यत इत्यर्थः । स्वस्य विद्यमानपि स्वकार्यमिदमिति न पश्यतीत्यत्र दृष्टांतमाह ॥ वास इति । मदिरापानेनोत्पन्नमदनांधः पुमान् परिष्कृतं कटितठे परिवेष्टितं वासस्तत्र स्थितमुज्झितं वा यथा न पश्यति तथैवेत्यर्थः ॥ ३६ ॥ नन्वेवं विधेऽपि देहे सति कथमुक्तरीत्या शंकायामाह ॥ देहोऽपीति । सासुरिंद्रियसहितो यावत्स्वारंभकं कर्म प्रारब्धं तावत्पर्यंतमेव प्रतिसमीक्षते स्थितो भवति । तदवसाने त्वाह ॥ तमिति । स्वप्रपंचपुत्रादिसहितं तद्देहं तज्जातीयं देहांतरं वाऽधिरूढसमाधियोगः प्राप्तसमाधियोगफलः । सोऽपरोक्षज्ञानी पुनर्न भजते न प्राप्नोति । बीजाभावादिति भावः । अत्र दृष्टांतमाह ॥ स्वाप्नं प्रतिबुद्धवदिति । यथा प्रतिबुद्धो निद्रावसानं प्राप्तः स्वाप्नदेहं वा तत्सदृशं देहांतरं वा न भजते तथैवेत्यर्थः ॥ ३७ ॥ ननु गौरोऽहं कृष्णोऽहमित्यादिव्यवहारबलान्न देहातिरिक्तात्माऽस्त्यतः कर्मापगमे पुनस्तं न भजत इत्ययुक्तमित्याशंकायामाह ॥ यथेति । आत्मत्वेनाभिमतादात्माभिन्नत्वेन व्यवन्हीयमाणादपीत्यर्थः । अपि पदेन हेतोरप्रयोजकतां सूचयति । स्नेहविशेषेणाहमेवेदं पुत्रादीति व्यवन्हीयमाणत्वात्पुत्रादेर्यथा मर्त्यः । पित्रादिः पृथक् प्रतीयते तथा पुरुषो जीवोऽपि आत्मत्वेन गौरोऽहमित्याद्यात्माभिन्नत्वेन व्यवन्हीयमाणाद्देहादेः पृथक् प्रतीयते मम देह इत्यनुभवात् । तथा च निर्बाधभेदानुभवबलादभेदव्यवहार औपचारिक एव न मुख्य इति भावः ॥ ३८ ॥ ननु तथाऽपि दैववशग इत्यनुपपन्नं । भूतेंद्रियांतःकरणात्मकदेहात्स्वामित्वेन तत्प्रधानाज्जीवाच्च पृथक् दैव शब्दाभिधेयेश्वरस्यानुपलंभात् । प्रत्युत राजादिदेहस्य वा तदभिमानिजीवस्य वेश्वरत्वेनाव्यवहारादित्यत आह ॥ यथोल्मुकादिति । स्वसंभवात् । अग्निसंभवात् । अविवेकिभिरात्मत्वेनाभिमतादुल्मुकादिरेवाग्निरित्याग्नित्वेन व्यवन्हीयमाणादुल्मुकादेर्यथा तद्दाहकोऽग्निः पृथङ्मतो निश्चितः । अन्यथाऽग्नेर्जनकत्वमेव न स्यादिति युक्तिसूचनाय स्वसंभवादित्युक्तं ॥ ३९ ॥ तथा भूतेंद्रियांतःकरणादविवेकिभिरयमेवेश्वर इति व्यवन्हीयमाणादप्यात्मा परमात्मा पृथक् । अत्र प्रमाणकथनाय द्रष्टा सर्वज्ञ इत्यादिकमुक्तं । वेदे श्रूयमाणं सर्वज्ञ इत्यादिपदजातं जीवादिष्वसंभाव्यमानार्थकं तदतिरिक्तमीश्वरं

गमयतीति भावः । स्वसंभवादित्यस्य दार्ष्टांतिकेऽप्यन्वये देहादिजनकत्वयुक्तिरप्यत्रोक्तेति ज्ञातव्यं ॥ ४० ॥ सिंहावलोकनन्यायेन मोक्षसाधनज्ञानजनकध्याने उपसंहार्यगुणान्दर्शयति ॥ सर्वभूतेष्विति । आत्मानमंतर्यामिणं हरिं सर्वभूतेषु सर्वभूतानि चात्मनीक्षेत । इदं चिंतनद्वयं मोक्षरूपेष्टसाधनमित्यर्थः । आद्ये स्थानभेदाद्भेदशंकायामाह ॥ अनन्यभावेनेति । अत्र भूतेभ्योऽनन्यभावेनेति प्रतीतिवारणाय तात्पर्यमाह ॥ अनन्यभावेनेति । तद्रूपाणां भूतांतःस्थितभगवद्रूपाणां परस्पराभेदेनेत्यर्थः । द्वितीये तदात्मतामित्यस्य तदैक्यप्रतीतिवारणाय तात्पर्यमाह ॥ तदात्मतामिति । तथा च भूतेष्विति विषयसप्तमीति भावः ॥ ४१ ॥ ॥ ४२ ॥ नन्वेवं सर्वभूतगतहरिरूपाणामभेदे देवादिस्थितं भगवद्रूपं बहुसामर्थ्यव्यक्तिमन्मनुष्यादिस्थितं तु न तथेति वैलक्षण्यं कथमित्यत आह ॥ स्वयोनिष्विति । यथैकं ज्योतिरग्न्याख्यं स्वयोनिषु कारणेषु योनीनां काष्ठानां गुणवैषम्यादार्द्रशुष्कत्वादिवैलक्षण्यान्नाना विलक्षणमिव प्रतीयते न वस्तुतो विलक्षणं । अभिमानिदेवतापेक्षयैतत् । तथा प्रकृतौ प्रकृतिकार्येषु देहेषु स्थित आत्मा हरिर्विलक्षण इव प्रतीयते न वस्तुतो विलक्षण इत्यर्थः ॥ ४२ ॥ ननु प्रकृतिस्थाननानात्वेऽप्यवैलक्षण्यं हरेः कुत इत्यत आह ॥ तस्मादिति । तस्मात्सर्वत्रस्थितस्यैकरूपत्वादेवेत्यर्थः । अत्र प्रकृतिं पराभाव्य जीवः स्वरूपेणावतिष्ठत इत्यन्यथाप्रतीतिवारणाय प्रकृतसंगतां योजनां दर्शयति ॥ प्रकृतिमिति । स्वरूपेणेत्यस्य तात्पर्यं ॥ तदुत्तमत्वेनेति । अवतिष्ठत इति लट् क्रियाप्रबंध इत्याशयेन सदेत्युक्तं । परः परमात्मेति कर्तुरध्याहारः । अवधारणेन तमसः परस्तादित्यादिश्रुतिसिद्धत्वमस्य दर्शयति । तथा च तस्मात्सर्वत्रैकरूपत्वादेव स्वां स्वाधीनां प्रकृतिं देवीं नानाविधकार्यात्मना द्योतमानां सदसदात्मिकां कार्यकारणरूपिणीं दुर्विभाव्यामव्यक्तरूपस्वरूपां पराभाव्यातिक्रम्य स्वरूपेण तदुत्तमत्वेन सर्वदाऽवतिष्ठत इति श्रुत्यादिसिद्धमुपपद्यते । अन्यथा । तन्न स्यादिति मूलाभिप्राय इति भावः । सर्वभूतेष्वित्यादिश्लोकद्वयार्थे समाख्यामाह ॥ सर्वभूतस्थमिति । अनेन सर्वभूतेष्वित्येतदुक्ततात्पर्यं । ईशशामित्यनेन स्वरूपेणेत्येतदुक्ततात्पर्यं । जेतारं प्रकृतेरपीत्यनेन प्रकृतिं पराभाव्येत्येतदुक्ततात्पर्यं । अविशेषमेकामित्यनेन स्वयोनिषु यथेति श्लोकतात्पर्यमुक्तं । क्रियाप्रबंधात्मकलडर्थकथनं ॥ सदेति । अवधारणेन श्रुत्यादिप्रसिद्धिं दर्शयति । ईक्षेतेत्यस्यार्थः ॥ चिंतयन्निति । विध्यर्थभूतेष्टसाधनत्वप्रदर्शनाय विप्रमुच्यत इत्युक्तं

॥ ४३ ॥ उपासकस्य पुनरित्थं भावांतरमाह ॥ अन्वयेति । यः साक्षात्सर्वसुकृतदुष्कृतादिकमीक्षत इति साक्ष्यात्माऽऽदानादिकर्ता हरिरन्वयव्यतिरेकात्सिद्धोऽस्ति । प्रपंचसहितदेशकालयोस्तद्राहितदेशकालयोश्च हरेः सत्त्वात् । व्यभिचारिणोऽस्य प्रपंचस्य निद्रांते ब्राह्मे मुहूर्ते उत्थाय वैतथ्यं निष्प्रयोजनत्वं व्यभिचारं सर्वतद्देशकालयोरसारत्वमनुचिंतयेत् । इदं चिंतनं मोक्षसाधनमित्यर्थः ॥ ४४ ॥ इति श्रीभागवतटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥ ३–२९ ॥ ॥

॥ हरिः ॐ ॥ इदानीं भक्तियोगस्य तारतम्यादिकं ज्ञातुं तत्प्रसंजनाय देवहूतिरुक्तं प्रशस्य भक्तिमार्गादिकथनं प्रार्थयते ॥ लक्षणमिति । अत्र यथा सांख्येषु कथितमित्यत्यस्यान्वयाप्रतीतेरपेक्षितमध्याहृत्य योजयति ॥ यथेति । तथा चोक्तशब्दस्य तथा शब्दस्य चाध्याहार इति भावः । सांख्येषु शास्त्रेषु यथोक्तं तथैव । कुतः कथनीयमित्यतः प्राप्तं यन्मूलं तत्प्रचक्षत इत्येतद्व्याख्याति ॥ यत्सांख्यमूलमिति । तथा च यत्सांख्यमूलं प्रतिपादकं यस्येति मूलार्थ इति भावः । तल्लक्षणं महदादीनां लक्षणं प्रचक्षते प्राज्ञाः । तथा च सांख्यशास्त्रस्य प्राचुर्येण महदादिलक्षणप्रतिपादनाय प्रवृत्तत्वात्तदनुसारेणैव त्वया मम कथितमित्युक्तस्य प्रशंसाऽनेन कृतेति ज्ञातव्यं ॥ ततश्चायं मूलार्थः ॥ महदादीनां प्रकृतेः पुरुषस्य च लक्षणं यथा सांख्येषु शास्त्रेषूक्तं तथा त्वया कथितं । नाहमत्र त्वया प्रकृतेर्लोभितेत्याशयः । कीदृशं लक्षणं । येन लक्षणेनामीषां महदादीनां पारमार्थिकं यथावस्थितं स्वरूपं लक्ष्यते इतरव्यावृत्ततया ज्ञायते तत् । सांख्योक्तप्रकारेणैव कस्मात्कथनीयमित्यत उक्तं ॥ यन्मूलमिति । यत्सांख्यमूलं प्रतिपादकं यस्य तत्तथा । तन्महदादिलक्षणं प्रचक्षते प्राज्ञाः । तथा च तन्महदादिलक्षणं यन्मूलं प्रचक्षते तेषु सांख्येषु यथोक्तं तथा त्वया कथितमिति योजना ॥ २ ॥ एवमुक्तं प्रशस्य स्वाजिज्ञासितकथनं प्रार्थयते ॥ भक्तियोगस्येति । पूर्वमुक्तेः पुनः किमर्थं प्रश्न इत्यत उक्तं ॥ विस्तरश इति । भक्तिदार्ढ्याय वैराग्यस्यापेक्षितत्वात्तत्साधनमपि कथयेति प्रार्थयते ॥ विरागवत इति । कर्मानुसारिणी संसृतिर्येन संसृतीनामाख्येन सर्वत्र देहगेहादौ विरागो विगतरागो भवेत् ॥ ३ ॥ जना यद्धेतोर्यस्य कालनाम्नस्तव भयात्कुशलं कर्म कुर्वंति परेषामुत्तमानां सकाशादपि परस्योत्तमस्य तस्य ते तवेश्वररूपस्यैश्वर्यमूर्तेः कालस्य स्वरूपमाचक्ष्वेत्यन्वयः ॥ ४ ॥ त्वदवतारस्य ज्ञानप्रवर्तनार्थत्वात्त्वमेवेदं वक्तुं समर्थ इत्याशयेनाह ॥ लोकस्येति । अचक्षुषो ज्ञानदृष्टि-

शून्यस्यातो मिथ्याभिमतेर्मिथ्याभूतस्वातंत्र्याभिमानयुक्तस्यातः कर्मसु पुण्यपापरूपेष्वनुविद्धयाऽऽसक्तया धिया श्रांतस्यात एवा-नाश्रयेऽपारे तमसि संसारे चिरमनादित एव प्रसुप्तस्य शयानस्य लोकस्य मोक्षयोग्य जनस्य । तादर्थ्ये षष्ठी । तदर्थं । तद्धितार्थमिति यावत् । योगभास्करो ज्ञानयोगप्रकाशने भास्कर इवस्थितस्त्वमाविरासीः । किलेति प्रमाणप्रसिद्धिं दर्शयति ॥ श्लक्ष्णं मृदु करुणार्दितः कृपां गतः प्राप्तः अर्द गताविति धातोः ॥६॥ भो भामिनि । संसाराख्ये वैरिणि कोपयुक्तसुंदरि । मार्गैः शास्त्रमार्गैर्भाव्यते निरूप्यते । बाहुविध्ये निमित्तमाह ॥ स्वभावेति । स्वभावो योग्यता तदुद्बोधका गुणाः सत्त्वादयस्तेषां भेदेनेत्यर्थः । भावो भक्तिः ॥७॥ बाहुविध्यमेवाह ॥ अभिसंधायेति । यो हिंसां परोपद्रवं दंभं धर्मध्वजवृत्तिं मात्सर्यं हरिभक्तेषु द्वेष्याभिसंधाय मनसि कृत्वा संरंभि हरिभक्तेषु द्वेषी भिन्नदृक् वरत्वपेक्षयाऽन्यथादर्शी भावं भक्तिं ॥८॥ अर्चादौ प्रतिमादौ । आदि पदात्स्थंडिलपरिग्रहः । पृथग्भाव इत्यस्य राजसभक्तधर्मत्वसिद्ध्यर्थमपेक्षितमध्याहृत्यार्थमाह ॥ तद्रूपाणामिति । तथा चार्चादिस्थित-भगवद्रूपाणां पृथक् पृथग्भक्तिमानित्यर्थः । कृष्णादिर्न मदिष्टदाने समर्थः । किंतु रामादिरेवेति मत्वा । तत्रैव सम्यग्भक्तिमानिति यावत् ॥ ९ ॥ कर्मनिर्हारं पापक्षयं परस्मिन्सर्वोत्तमे मयि तस्य कर्मणोऽर्पणं समर्पणं चोद्दिश्य यजेत् । यष्टव्यं विहितत्वादे-वेदं कर्म कर्तव्यं । न फलकांक्षयेति वा यजेत् । अत्रापि पृथग्भाव इति छेदभ्रांतिं वारणायाह ॥ अपृथग्भाव इति । तद्रूपेषु सर्वेषु साम्येनैव भक्तिमानेत्यर्थः । ननु कुत एवं छेदप्रदर्शनमित्यत उत्तरवाक्यबलादित्याशयेन तदनुवदति ॥ स सात्त्विक इति । तथा च सात्त्विकभक्तधर्मत्वसिद्ध्ये तथैव छेदः कार्यः । अन्यथा राजसधर्माच्छेदो न स्यादित्याशयः ॥ १० ॥ एवं गुण-कायभक्तियोगलक्षणमुक्त्वेदानीमुत्तमभक्तानां यः स्वाभाविक इदं प्रथमतः शून्यो भक्तियोगस्तस्य लक्षणमाह ॥ मद्गुणेति । मद्गुणश्रुतमात्रेण मद्गुणानां श्रवणमात्रेणापि मनोमतिर्मनसः प्रावण्यरूपा या भक्तिः सा निर्गुणस्य स्वाभाविकभक्ति-योगस्य लक्षणं स्वरूपमुदाहृतं हीत्यन्वयः । कथं भूते मयि । सर्वगुणाश्रये ज्ञानानंदादिकल्याणगुणपूर्णे । पुरुषोत्तमे क्षराक्षरचेतनोत्तमे । कथं भूता मनोगतिः । यथा गंगांभसोऽविच्छिन्नांबुधौ गतिस्तथाऽव्यवहिता निरंतरा । अहैतुकी फलानुसंधानशून्या ॥ १२ ॥ तेषां निष्कामतां कैमुत्येनोपपादयति ॥ सालोक्यमिति । सार्ष्टिं समानैश्वर्यं । एकत्वं

सायुज्यं । उत शब्दोऽप्यर्थः । इति प्रसिद्धान्मोक्षादीनापि दीयमानान् फलत्वेन न गृह्णंति । ते तदा तेषामितरपुरुषार्थकामना नास्तीति किं वक्तव्यमित्याशयः । तर्हि किमिच्छंतस्ते भक्तिं कुर्वंतीत्यत आह ॥ विनेति । मत्सेवामेवेच्छंतीत्यर्थः ॥ १३ ॥ नन्विदमात्यंतिकभक्तियोगलक्षणत्वेन शास्त्रेषूच्यतेऽतः कथं स्वाभाविकभक्तियोगलक्षणत्वेनोक्तामित्यत आह ॥ स एवेति । य उक्तरीत्या स्वाभाविको भक्तियोगो स एवेत्यर्थः । अतो न विरोध इति भावः । कुतोऽयमात्यंतिकभक्तियोगाख्य इत्यतस्तत्फलस्यानेन जायमानत्वादित्याशयेनाह ॥ येनेति । येन स्वाभाविकेन भक्तियोगेन त्रिगुणान्सत्वादिभक्तान् अतिव्रज्यातिक्रम्य मद्भावाय मयि स्थित्यै । सायुज्यायेति यावत् । उपपद्यते योग्यो भवति ॥ १४ ॥ एवं भूताया भक्तेरभिवृद्धौ कारणान्याह ॥ निषेवितेनेति । अनिमित्तेन विष्णूद्देश्यकेन । अनिमित्तमिति पाठे अः विष्णुरेव निमित्तमुद्देश्यो यथा स्यात्तथा नितरां सेवितेनेत्यर्थः । महीयसा श्रद्धातिशययुक्तेन क्रियायोगेन तंत्रसारोक्तभगवदर्चनरूपेण । नातिहिंस्रेण हिंसाराहितेन ॥ १५ ॥ मद्धिष्ण्यानां मत्प्रतिमानां दर्शनादिभिर्भूतेषु जीवेषु मद्भावनयांऽतर्यामित्वेन मदुपासनया सत्येन सज्जनहितवचनेन । असंगमेन दुर्जनसंगराहित्येन ॥१६॥१७॥ आध्यात्मिकं वेदांतशास्त्रं तस्य निरंतरश्रवणात् । आर्जवेन विष्णुवैष्णवेषु मनोवाक्कायवृत्तीनामवैपरीत्येन कार्याणां पंडितानां संगेन । निरहंक्रिया देहादिष्वहं ममतावर्जनेन ॥१८॥ मद्धर्मेण विष्णुपंचकोपवासादिरूपेणेत्येतैः साधनैर्यर्हि यदा पुरुषस्याधिकारिण आशयोऽतःकरणं परिसंशुद्धोऽत्यंतं निर्मलस्तदा श्रुतमात्रगुणं मामंजसाऽभ्येति । मद्गुणश्रवणमात्रेण प्रतिदिनं मय्येव वर्धमानं सदेत्यर्थः । उक्तसाधनसम्पत्त्यनंतरं यत्नाभावेऽपि मनसो भगवत्प्राप्तौ दृष्टांतमाह ॥ यथेति । वातो रथः प्रापको यस्य गंधस्य स तथा । आवृंक्ते आवृणोति । वशीकरोतीति यावत् । आशयात्पुरुपाख्यस्थानादागत्य योगरतमुक्तसाधनसहितं । अत एवाविकारी विषयविकारशून्यं यच्चेतस्तदात्मानं परमात्मानं आवृंक्ते ॥ २० ॥ यदुक्तं पूर्वाध्याये सर्वभूतेषु चात्मानमित्यनेन सर्वभूतनिष्ठस्य भगवतो भिन्नत्वं भूतानादिकर्तृत्वं च तदवश्यं ज्ञात्वा सर्वत्र भगवदनुसंधानेन पूजा कार्येति वक्तुं तदनुसंधानाभाववतो निंदति ॥ अहं सर्वेष्विति । तं मामविज्ञाय हित्वा प्रतिमादिकमेव देव इति ज्ञात्वा यत्तत्पूजादिकं कुरुते तदर्चाविडंबनं वास्तवपूजाया अनुकरणं न वास्तवपूजेत्यर्थः॥२१॥ तदेव विवृणोति ॥ यो मामिति । मौढ्यादयमेव देव इति बुद्ध्या ।

एवं भूतेषु भगवानस्तीति ज्ञानाभावे निंदामुक्त्वा तद्रूपाणामभेदाभावेऽपि निंदामाह ॥ द्विषत इति । परकाये मां द्विषत इत्यस्य विवरणं ॥ भिन्न दर्शिन इति । अंतर्यामिभेददर्शिन इत्यर्थः । भूतेषु बद्धवैरस्य हरिप्रतिमात्वेनानुसंधानेन तेषु दानमानादिरूपपूजाशून्यस्य । शांतिर्भगवन्निष्ठा ॥ २३ ॥ ननु किमेतेषां पूजया सालग्रामादिरूपार्चायामेव सम्यगर्चितो भगवांस्तृप्तो भविष्यतीत्यत आह ॥ अहामिति । अर्चायां सालग्रामादिरूपायां विद्यमानत्वेनाहमर्चितोऽप्युच्चावचैर्द्रव्यैरुत्पन्नया क्रिययाऽन्यजलदानादिरूपया भूतग्रामावमानिनो भगवत्प्रतिमात्वेन भूतसमूहपूजकस्य नैव तृप्ये तृप्तो न भवामि । अतो मत्प्रतिमात्वेन तेषामपि पूजा कार्येत्याशयः ॥ २४ ॥ ननु तर्ह्यर्चादावर्चनं किं न कार्यं नेत्याह ॥ अर्चादाविति । आदिपदेन स्थंडिलपरिग्रहः । स्वविहितनिष्कामकर्मकृत् जिज्ञासुः सर्वभूतनियामकतया स्थितं परमात्मानं यावन्न स्वहृद्यपरोक्षतो वेद तावदेव तावत्पर्यंतं । अर्चादावर्चयेदित्युक्त्यापरोक्षज्ञानिनोऽर्चादावर्चनं नापेक्षितमिति प्रतीयते न चैतद्युक्तं । अपरोक्षज्ञानिनामप्यर्चादावर्चनस्य श्रुत्यादिसिद्धत्वादतोऽस्याभिप्रायं प्रमाणेनैवाह ॥ अज्ञ इति । जिज्ञासुरित्यर्थः । ज्ञोऽपरोक्षज्ञानी । अर्चायामर्चयन् । तु शब्दोऽवधारणे । गुणवानेवानंदाभिवृद्धिमानेव । एवकारव्यावर्त्यमाह ॥ अन्यथेति । सोऽपरोक्षज्ञानी । अन्यथाऽर्चादावर्चनाभावे जिज्ञासुवद्दोषवान्नैव भवेदित्यर्थः । अनेन दोषभीत्याऽर्चादावर्चनमपरोक्षज्ञानपर्यंतं तदनंतरं तु न दोषभीत्या तत्रार्चनमिति मूलाभिप्राय उक्त इति ज्ञातव्यं ॥ २५ ॥ अंतर्यामिभेददर्शिनो न शांत्यभाव एव फलं किंतु तमःप्राप्तिश्चेत्याह ॥ आत्मनश्चेति । अत्रांतरोदरमित्यस्य प्रकृतोपयुक्तमर्थं तावदाह ॥ अंतरोदरमिति । अंतरा शब्दो भेदवाची । उदर शब्दो ब्रह्मवाची । अंतरांऽतरेण ग[illegible]मुदरमिति युक्तपदाध्याध्याहारमभिप्रेत्य भिन्नं ब्रह्मेत्युक्तं । इदानीमात्मनश्चेति पूर्वार्धतात्पर्यं दर्शयति ॥ आत्मस्थमिति । [illegible]चिन उदर शब्दस्यात्मनः परस्येत्येताभ्यां प्रत्येकं संबंधः । उभयत्र षष्ठ्यर्थः । तत्स्थत्वमभिप्रेत्य तदुभयतात्पर्यमाह ॥ आत्मस्थमिति । अंतरेत्यस्यार्थः ॥ भेदेनेति । करोतीत्यस्यार्थः ॥ पश्यतीति । उदर शब्दस्य ब्रह्मवाचकत्वे प्रमाणमाह ॥ उदरमिति ॥ ततश्चायं श्लोकार्थः ॥ य आत्मनः स्वस्य संबंध्युदरं ब्रह्म स्वास्थितं । ब्रह्मेति यावत् । परस्य स्वाभिन्नस्य देवदत्तादेः संबध्युदरं तत्स्थं ब्रह्मांतरांऽतरेण भेदेन करोति पश्यति तस्य भिन्नदृशो भूतांतर्यामिभेदज्ञानिनो मृत्युः सर्वदुर्जनमा-

रक्षः श्रीनृसिंह उल्बणं भयं तमोरूपं भयं विधत्ते ददाति ॥ २६ ॥ एवमंतर्यामिभेदज्ञानिनोऽनर्थमुक्त्वेदानीं सर्वभूतस्थं परमात्मानमभेदेन पूज्यं ज्ञात्वा तदधिष्ठानत्वेन सर्वभूतान्यपि पूजयेदित्याह ॥ अथेति । यत एवं भेदज्ञानमर्थकरमथ तस्मात्सर्वभूतेषु कृतालयं कृतावासं भूतात्मानं भूतानामादिकर्तारं मामभिन्नेन चक्षुषा मद्रूपाणामभेदज्ञानेन मदधिष्ठानभूतेषु सर्वभूतेषु भिन्नेन चक्षुषा मत्तः परस्परं च भेदज्ञानेन मैत्र्या मित्रभावेन च दानमानाभ्यां तान्यर्हयेदर्चयेदित्यर्थः ॥ २७ ॥ दानमानाभ्यामर्चनं च हरिभक्तेषु तारतम्यानुसारेणैव कर्तव्यमिति वक्तुं तावत्सर्वभक्ततारतम्यं दर्शयति ॥ जीवा इत्यादिना । अत्र ततो जीवेभ्यः प्राणभृतो जीवाः श्रेष्ठा इत्युच्यत इति प्रतीयते । न चैतत्संभवति । जीवेभ्यो जीवानामुत्तमत्वस्य बाधितत्वादतोऽत्र विवक्षितं प्राणभृच्छब्दार्थं दर्शयति ॥ प्राणभृत इति । तथा च चलजीवाः स्थावराश्च जीव पदेन ग्राह्याः । प्राणभृच्छब्देन तु चलनयुक्ताः पश्वादयो जंगमा अतो नानुपपत्तिरिति भावः । नन्विदं तारतम्यं न जीवस्वरूपेषु । तेषां स्वतश्चिद्रूपत्वेन पशुवृक्षत्वादिरूपत्वाभावात् । नापि देहावच्छिन्नेषु । तत्र कर्मवशादुच्चानामपि मनुष्यादीनां स्थावरादित्वप्राप्त्योक्ततारतम्यासंभवादित्याशंकापरिहाराय मूलव्याख्यानरूपां स्मृतिं पठति ॥ पशुवृक्षादीति । जीवाः स्वत एव स्थिताः । तथा च केषांचिज्जीवानां पशुपक्ष्यादिरूपो यो देहाश्चिन्मात्रकोऽस्ति अतो नोक्तशंकाऽवकाश इति भावः । ननु तेषामपि कर्मवशाद्व्यत्ययोऽस्त्येवेत्यत आह ॥ संसृताविति । तत्तत्स्वरूपता पशुपक्ष्यादिस्वरूपता । एकप्रकारेति शेषः । तथा चेदं तारतम्यकथनं मुक्तजीवस्वरूपविवक्षयैवेति भावः । एवमनुपपत्तिं परिहृत्येदानीं ततः प्राणभृत इत्यारभ्य व्याख्याति ॥ तत्र स्थावरेति । तत इत्यस्यार्थः ॥ स्थावरमुक्तेभ्य इति । प्राणभृत इत्यस्यार्थः ॥ जंगममुक्तिगा इति । प्राणभृत्स्वांतरतारतम्यकथनाय ततः सचित्ता इत्यादिको ग्रंथः । तत्र चतुष्पाद इत्यंतस्य जंगममुक्तिगा इत्यनेन ग्रहणामिति ज्ञातव्यं । ततो द्विपादित्यस्य व्याख्यानं ॥ तेभ्यो मानुषमुक्ताश्चेति । तेभ्यो मुक्ताश्चत्वारो वर्णा इति ग्राह्यं । ततस्तेषु विप्रमुक्ता अधिका इत्यनेन तेषां ब्राह्मण उत्तम इत्येतदुक्तार्थं । तत्र विप्रमुक्तेष्वपि केचिदनधीतवेदा वैदिकमंत्रार्थोपदेशतदुपासनामात्रजातेनापरोक्षज्ञानेन मुक्ता इति ग्राह्यं । उपदेशमात्रेण मुक्तेभ्य इत्यनुवादात् । वेदवेदिनो यथा शक्त्यधीतऋगादिवेदाः । अनेन वेदज्ञ इत्येतदुक्तार्थं । मानुषेषु

संप्रदायपूर्वकं वेदार्थमसंभाविकमित्याशंकायामुक्तं ॥ ऋषय इति । अर्थज्ञा वेदार्थज्ञानिनः । अनेनार्थज्ञ इत्येतदुक्तार्थं । ये संशयच्छिदः कथितास्ते देवा बृहस्पत्यादय इत्यर्थः । अनेन संशयच्छेत्तेत्येतदुक्तार्थं । अत्र वेदवेदिन इत्यादिवचनाद्वेदज्ञ इत्याद्येकवचनानि समुदायाभिप्रायाणीति सूचयति । स्वधर्मकृदित्यस्य तात्पर्यं ॥ पूर्णधर्म इति । संपूर्णस्वधर्मकृदित्यर्थः । सः क इत्यपेक्षायामिंद्र एवात्र विवक्षित इत्याह ॥ इंद्र इति । मुक्तसंग इत्यस्यार्थः ॥ निःसंग इति । सः कोऽत्र विवक्षित इत्यपेक्षायां गरुड इत्युक्तं । मय्यर्पिताशेषक्रियार्थात्मारतिरित्यस्य तात्पर्यं ॥ हरेर्भक्तिपूर्ण इति । सः क इत्यपेक्षायामुक्तं ॥ ब्रह्मेति । मय्यर्पितात्मन इति श्लोकतात्पर्यं ॥ तस्मान्नान्योऽधिक इति । नन्वर्थज्ञानादिशब्दैर्ऋष्यादयो व्याख्याताः । तत्र किं नियामकमित्यपेक्षायामाह ॥ सम्यगेष्विति । हि यस्मात्तेऽर्थज्ञात्वादयो गुणा एषु ऋष्यादिषु मनुष्याद्यपेक्षया सम्यक् संत्यतस्तद्वाचकैः शब्दैस्त एव व्याख्येया इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ अजीवा मोक्षयोगजीवविरुद्धजवा नित्यसंसारिणस्तमोयोग्याश्च तेषां सकाशाज्जीवाः स्थावरमुक्ताः श्रेष्ठाः । हीति तत्र प्रमाणप्रसिद्धिं दर्शयति । ततः स्थावरमुक्तेभ्यः प्राणभृतः प्रकर्षेणाणनं चेष्टा तद्भृतो जंगममुक्ता इत्यर्थः । हे शुभे मातः । जंगमेष्वपि तारतम्यमाह ॥ सचित्ता इत्यादिना । सचित्ता मनोव्यापारमात्रयुक्ता इंद्रियवृत्तयश्चक्षुरादींद्रियाणां वृत्तयो येषु ते तथा ॥ २८ ॥ अत्रापींद्रियवृत्तिष्वपि स्पर्शवेदिनः प्रवरा इति ग्राह्यं । तेभ्यो माधुर्यादिरसज्ञा मत्स्यादयस्तेषां सकाशाद्गंधविदो भ्रमरादयः शब्दविदः सर्पादयः ॥ २९ ॥ रूपभेदाविदः शुक्लादिरूपविशेषज्ञा उभयतो दंता येषां ते तथा । उत्तराधरदंतयुक्ता अपादेभ्यस्तेभ्यो बहुपदास्तेभ्यश्चतुष्पदा द्विपान्मनुष्यो वर्णहीनः ॥ ३० ॥ ब्राह्मणादिलक्षणश्चत्वारो वर्णाः । तेषामज्ञानिनां सकाशाद्ब्राह्मणोऽनधीतवेदो गुरूपदिष्टं वैदिकमंत्रार्थोपासनामात्रजनितापरोक्षज्ञानेन मुक्त उत्तमः । वेदज्ञो यथाशक्त्यधीताखिलवेदः । अर्थज्ञो यथाशक्त्यधीताखिलवेदार्थज्ञः स ऋषिरुक्तः ॥ ३१ ॥ संशयच्छेत्ता बृहस्पत्यादिर्देवाः । अत्र पूर्वत्र चैकवचनं समुदायापेक्षं । स्वधर्मकृदुक्तदेवापेक्षया स्वविहितपूर्णधर्मकृदिंद्रो मुक्तसंगो गरुडः । मुक्तसंगत्वमेव विवृणोति ॥ न दोग्धेति । आत्मनः स्वस्य धर्मं न दोग्धा भगवत्प्रीतिं विना तेन पुरुषार्थार्थं स्वधर्मव्यत्ययमकुर्वाणः ॥ ३२ ॥ तस्माद्गरुडान्मय्यर्पिताशेषाक्रियार्था अशेषक्रियाफलानि येन स तथा ।

स चासावात्मरतिरितरापेक्षया पूर्णपरमात्मभक्तिश्चेति कर्मधारयः । स च ब्रह्मैव । नरः परांतकालात्पूर्वं न क्षीयत इत्यर्थः । ब्रह्मणोऽप्यधिकोऽस्ति किं नेत्याह ॥ मय्यर्पितेति । परमुत्तममकर्तुः अः परमात्मा कर्ता यस्य स तथा । तस्य समं सर्ववेदोक्तं परं ब्रह्म तस्य दर्शनं यस्य स तथा तस्मात् ॥ ३३ ॥ एवं हरिभक्ततारतम्यमुक्त्वेदानीं तदनुसारेणैव तेषु हर्यधिष्ठानत्व-बुद्ध्या दानमानाभ्यामर्चनं कुर्वंस्तैः सह तदधिष्ठितं परमात्मानमपि प्रणमेदित्याह ॥ मनसेति । अत्र जीवकलया जीवस्वरूपेणे-त्यन्यथाप्रतीतिवारणाय तदर्थमाह ॥ जीवकलया सहेति । तथा च जीवाख्यभिन्नांशेन सहेत्यर्थः । भूतानि प्रणमेदिति भूता-नामेव नम्यत्वमुच्यत इति प्रतीयतेऽतोऽत्रान्वयं दर्शयन्नपेक्षितमध्याहृत्य योजनां दर्शयति ॥ भूतानीति । बहुमानयन्दान-मानाभ्यामर्चयंस्तदालयत्वेन तानि भूतान्यालयो यस्य स तथा तस्य भावस्तत्वं तेन विशिष्टं तदंतर्यामिणमित्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ एतानि तारतम्योपेतानि पूर्वोक्तानि भूतानि बहूमानयंस्तारतम्येनैव दानमानाभ्यामर्चयन् जीवकलयोक्तजीव-रूपांशैः सह तदाश्रितमीश्वरं प्रणमेत् । कुत एवं भूतानां तारतम्येनार्चनमित्यतोऽत्र कारणमाह । भगवानीश्वर एतानि भूतानि तारतम्येनैव प्रविष्ट इति मनसा बुद्ध्वेति । जीवकलया सह तदाश्रितमीश्वरं प्रणमेदिति । ईश्वराधिष्ठानाज्जीवानां स्वापेक्षयोत्तमत्वमेवैतत् । अन्यथा केवलमीश्वरं प्रणमेदिति ज्ञातव्यं ॥ ३४ ॥ उपसंहरति ॥ भक्तियोगश्चेति । हे मानवि । योगो ज्ञानयोगः । नन्वनयोर्मध्ये एकैकस्यापि मोक्षहेतुत्वं तरति शोकमात्मविद्भक्त्या त्वनन्यया शक्य इत्यादावुच्यते । तत्कुत उभयोक्तिरित्यत आह ॥ ययोरिति । अनेन कथमुक्तशंकानिवृत्तिरित्यतोऽवधारणाभिप्रायमाह ॥ एकतरभाव इति । नियत-त्वान्नियतत्वानां नियतत्वमभिप्रेत्यैकतरेनैव । इत्युक्तमिति शेषः । तथा चाविनाभावरूपायोगव्यवच्छेदार्थ एवकारो न त्वन्ययोगव्यवच्छेदार्थ इति भावः ॥ ततश्चायं श्लोकार्थः ॥ यथार्थभक्तिज्ञानयोगयोरेकतरेणैवैकतरस्यैकतराविनाभावेनैकतरेण पुरुषोऽधिकारी पुरुषमीश्वरं व्रजेदित्युच्यते । श्रुत्यादाविति शेषः । अत उभयोक्तिर्युक्तेत्याशयः ॥ ३५ ॥ यदन्यत्पृष्टं जीवस्य संसृतिः कालस्य स्वरूपं च ममाचक्ष्वेति तत्र जीवसंसृतेर्बहुत्वादादौ तावत्सूचीकटाहन्यायेन कालस्य स्वरूपं वक्ति ॥ यत्तदिति । प्रधानात्प्रकृतेः पुरुषाद्ब्रह्मणः परमुत्तमं दैवं सर्वदेवोत्तमं । कर्मविचेष्टितमित्येतदप्रतीत्या व्याख्याति ॥ सर्वकर्माणीति । सर्वेषां

कर्माणीत्यर्थः। यस्येत्यन्यपर्थप्रदर्शनेन बहुव्रीहिरयमिति सूचयति। विचेष्टा निमित्तानीत्यनेन विचेष्टितं विचेष्टाविषयीभूतं तज्जन्यमिति यावदिति विचेष्टित शब्दार्थः प्रदर्शितः। तथा च सर्वेषां कर्माणि यस्य विचेष्टितानि प्रेरणाजन्यानि तदिति मूलार्थः। रूपभेदाः प्रतिमाविशेषाः। त एवास्पदमाश्रयो यस्य तत्। कालशब्दवाच्यवाय्वादिरूपप्रतिमासंनिहितमित्यर्थः। अतीत-वर्तमानादिकालविशेषरूपप्रतिमासंनिहितमिति वा। अभिधीयते। परममुख्यया वृत्त्येति शेषः ॥ ३६ ॥ यतो यस्मा-त्कालाख्यान्महदादीनां भूतानां ब्रह्मादिजीवानां भयं भवति स इत्युत्तरेणान्वयः। कथं भूतानां महदादीनां। भिन्नदृशां। अत्र भेदज्ञानिनां भयमित्यन्यथाप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ भिन्नदृशामिति। ननु सर्वज्ञानां ब्रह्मादीनां कथ-मल्पज्ञत्वमुच्यत इत्यत उक्तं ॥ ईश्वरापेक्षयेति। तथा चेश्वरापेक्षया तेऽल्पज्ञा एवेति भावः। भिन्न शब्दस्याल्पवाचित्वमेव कुत इत्यतस्तत्र प्रमाणमाह ॥ भिन्नमिति। यो भूतानामंतः प्रविश्य तैर्भूतैर्भूतान्यात्ति संहरति यश्चाखिलानामाश्रयः ॥ ३७ ॥ कलयतां संहरतां रुद्रादीनां प्रभुः संहरणसमर्थः स धिया ज्ञेयः ॥ ३८ ॥ इतरपुरुषवत्स्वद्वेषिण एवात्ति न स्वदयितानिति किं नेत्याह ॥ न चास्येति। दयितः प्रियः। ननु भगवतोऽपि ब्रह्मरुद्रादीनां दयितानां कल्यादीनां द्वेष्याणां च सत्वात्कथमेत-दित्यतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ यथायोग्येति। यथेति भिन्नं पदं। योग्य शब्दो योग्यतापरः। तथा च यथा यावती यस्य द्वेषयोग्यता प्रीतियोग्यता वा। तदतिरेकेण तदाधिक्येन स हरेर्द्वेष्यः प्रियश्च न भवतीत्यर्थः। न च बांधव इति मूलं। नापि शरीरसंबंधीत्यर्थः प्रमत्तं विषयासक्तं। अंतकृत्संहर्ता सन् ॥ ३९ ॥ यतो भयमित्युक्तं विवृणोति ॥ यद्भयादिति। अयं भूतवायुः प्रवहः। देव इंद्रः। भगणो नक्षत्रगणः ॥ ४० ॥ यद्यस्माद्भीताः ॥ ४१ ॥ स्रवंति स्यंदंते। यतो यस्य भयान्नोत्सर्पति वेलामतिक्रम्य न गच्छति। इंधे दीप्यते सगिरिभिः सह गिरिभिर्भूर्न मज्जति ॥ ४२ ॥ अदो नभो यन्नियमाद्यस्य नियमनात् श्वसतां प्राणिनां महान् ब्रह्मा सप्तभिर्महदहंकारपंचभूतैरावृतस्तदात्मके देहे स्थितो ब्रह्मांडांतर्गत इति वा लोकस्य जनस्य देहं तनुते सृजति ॥ ४३ ॥ गुणाभिमानिनः शब्दाद्यभिमानिनो रुद्राद्या अस्य विश्वस्य सर्गादिषु वर्तंते। एतच्चराचरमेषां वशे तिष्ठति ॥ ४४ ॥ आत्मनः स्वाधीनेन जनेन मृत्युना रुद्रदुर्गादिना मारयन् अंतकर इत्युच्यते। स्वयं

त्वनादिरनंत इत्यन्वयः । एवं विधया ज्ञेय इत्येतदत्राप्यनुषंजनीयं । तथा चोक्ता गुणा उपसंहार्यतयोक्ता इति ध्येयं ॥ ४५ ॥
इति श्रीभागवतटिप्पण्यां त्रिंशोऽध्यायः ॥ ३–३० ॥

॥ हरिः ॐ ॥ इदानीमध्यायत्रयेण जीवसंसृतिं निरूपयंस्तत्र मूलकारणं तावद्दर्शयति ॥ तस्येति । अयं जनः संसारीजनस्तस्य सृष्ट्यादिकर्तुरेतस्य कालनाम्न ईश्वरस्य बलिना कालनामकेन काल्यमानो विद्राव्यमाणः । कल द्रावण इति धातोः । विद्राव्यमाणत्वे दृष्टांतो वायोर्घनावलिर्मेघपंक्तिर्यथा काल्यते तथा काल्यमानोऽपीति । अनेन जनस्य हरिविक्रमाज्ञानमेव संसारकारणमुक्तमिति ज्ञातव्यं ॥ १ ॥ तस्योरुविक्रममेव दर्शयति ॥ यं यमिति । अर्थं सुखसाधनमुपादत्ते संपादयति । दुःखेन प्रयासेन धुनोति विनाशयति । यत्कृते यन्निमित्तं ॥ २ ॥ भ्रांतिरपि संसारे कारणमिति दर्शयन् शोके निमित्तमाह ॥ यदध्रुवस्येति । यद्यस्मादध्रुवस्यानित्यस्य देहस्य संबंधीनि ग्रहादीनि । अनुक्तसमुच्चयार्थश्चकारः । ध्रुवाणि मन्यते तानि भगवान्धुनोति । तस्माच्छोचतीत्यन्वयः ॥ ३ ॥ दुर्मतित्वमेव दर्शयन्वैराग्याभावोऽपि संसारे कारणमित्याशयेनाह ॥ जंतुर्वा इत्यादिना । योनिं शरीरं निर्वृतिं विषयभोगजन्यं सुखं । लभते पुरुषार्थतयाऽनुभवति ॥ ४ ॥ न विरज्यत इत्युक्तमेव कैमुत्यन्यायेनोपपादयन्संसारे कारणांतरमाह ॥ नरकस्थोऽपीति । नारक्यां नरकस्थाहारादिभिर्जातायां देवमाया बंधकशक्तिः ॥ ५ ॥ अहंममेत्याभिमानोऽपि संसारकारणमित्याशयेनाह ॥ आत्मजायेति । आत्मनः स्वस्य जायादिषु निरूढमूलं नितरामभिवृद्धरागस्नेहादिकं हृदयं यस्य स तथा । बहुमन्यते ममैतेऽहमेषां पोषक इत्याद्यभिमानवान् भवतीत्यर्थः ॥६॥ एतादृशाभिमानफलमाह ॥ संदह्यमानेति । उद्वहनादिना तच्चिंतया दुरितानि पापसाधनानि । अनेन पापकर्मापि संसारे कारणमिति सूचयति ॥७॥ निरूढमूलहृदयत्वे कारणं दर्शयन्दुराशयत्वमेव विशदयति॥ आक्षिप्तेति । आक्षिप्त आत्मा मन इंद्रियाणि च यस्य स तथा। असतीनां च पुंश्चलीनामपि मायया मोहकशक्त्या कलभाषिणां मधुरभाषिणामालापैश्च । आक्षिप्तात्मेंद्रियः सन् सुखवन्मन्यत इत्युत्तरेणान्वयः ॥८॥ कपटवचनमेव धर्मो येषु। अत एव दुःखतंत्रेषु दुःखसाधनेषु ॥९॥ संदह्यमानेति श्लोके दुरितानि करोतीत्युक्तं विशदयति । अर्थैरिति । गुर्व्या हिंसया प्रबलतमपरापकारादिनेतस्ततः आपादितैः संपादितैरर्थैस्तान् जायादीन्पुष्णाति । तान्कान् येषां ।

पोषणे स्वयमेवाधो याति । शेषभुक् पोष्यजनभुक्तशेषान्नादेर्भोक्ता । वार्तायां कृष्यादिरूपायां जीविकायां । परार्थे परकीयद्रव्ये स्पृहामिच्छां चौर्येण तदा दातुमिच्छतीत्यर्थः ॥ ११ ॥ श्रिया शरीरकांत्या श्वसति दीर्घश्वासं करोति । मूढधीरहमेवैषां पोषक इत्यभिमानवान् ॥ १२ ॥ अकल्पमसमर्थं । पूर्वं यथाऽऽद्रियंते न तथाऽऽदरं कुर्वंति । कीनाश शब्दार्थमप्रतीत्या प्रमाणेनैवाह ॥ कीनाश इति । तथा च कीनाशा भूकर्षकाः कृषीवला यथा गोजरं वृद्धबलीवर्दं नाद्रियंते तथैवेत्यर्थः ॥१३॥ तत्रापि तस्यामवस्थायामपि ॥ १४ ॥ अवमत्याऽवज्ञयाऽपत्याद्यैः कृतया । उपन्यस्तं समीपे प्रक्षिप्तमन्नादिकं गृहपाल इव श्वान इवाहरन्स्वीकुर्वन्नास्ते । वैराग्याय तदीयमरणावस्थां दर्शयति ॥ आमयेत्यादिना ॥ उत्तारकफसंरुद्धनासिक इत्यत्रोत्तार शब्दार्थं प्रमाणेनाह ॥ उत्तारमिति । तथा चायं मूलार्थः ॥ उत्क्रामता निर्गच्छता वायुना श्वासेनोत्तारमुद्गतं कफः श्लेष्म तेन संरुद्धा नासिका यस्य स तथा । कासश्वासाभ्यां कृतायासः कृतदुःखस्य कंठो घुरुघुरायतो घुरुघुरु इति शब्दं करोति सः शयानो न ब्रूत इत्युत्तरेणान्वयः । कासश्वासकृतायासः कंठ इति पाठे कासश्वासकृतायासः कंठो यस्येति बहुव्रीहिः ॥१६॥ परिवीतः परिवेष्टितः ॥१७॥ अजितेंद्रिय उरुवेदनया मरणकालीनयाऽस्तधीर्नष्टमतिः ॥१८॥ सरभसे क्रोधसहिते ईक्षणे ययोस्तौ । शकृन्मूत्रपुरीषं च ॥ १९ ॥ वैराग्यार्थं तस्य नरकगमनमार्गं नरकभोगादिकं च निरूपयति ॥ यातनादेह इत्यादिना । नरकभोगार्थं कल्पितो देहो यातनादेहः । तस्मिन्नावृत्य प्रवेश्य ॥२०॥ तयोस्तर्जन्यैर्निर्भिन्नहृदय आर्तः सन् चलतीत्युत्तरेणान्वयः ॥ २१ ॥ क्षुत्तृड्भ्यां परीतो व्याप्तस्तप्ता वालुकाः सिकता यस्मिन्निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन्यमसदनं यमगृहं नीतो भवति ॥ २३ ॥ नयने कालविशेषमाह ॥ योजनानामिति । अध्वनः संबंधिनां योजनानां नवाधिकनवतिसहस्राणि । यद्यपि यमसदनमार्गसंबंधीनि योजनानि इतोप्यधिकानि तथाऽपि क्लेशयुक्तमार्गसंख्याकथनमित्येतदवगंतव्यं । पापाधिक्ये द्वाभ्यां पापाधिक्याभावे त्रिभिरित्युपलक्षणं । पक्षांतरमपि तत्र तारतम्येनास्तीति प्रमाणेनैवाह ॥ त्रिभिरिति ॥ २४ ॥ यातनाः संक्षेपेण दर्शयति ॥ आदीपनमित्यादिना । आदीपनं प्रज्वलनं स्वगात्राणां स्वावयवानां । प्राप्नोतीति शेषः । स्वकृतं स्वेन छिन्नं परतोऽन्येन वा । कृतामित्यनुवर्तते । यदात्मनः स्वस्य मांसं तस्य भक्षणमित्यर्थः ॥ २५ ॥ आत्मवैशसं स्वजाति-

हिंसां ॥ २६ ॥ अभिधावनं विदारणप्रापणं । रोधनं शृंखलाबंधे विष्ठागर्ते ॥ २७ ॥ २८ ॥ न चैतदसंभावितं । यतोऽत्राप्यस्तीत्याह ॥ अत्रैवेत्येव शब्द इति । सामीप्यार्थत्वे प्रमाणमाह ॥ सामीप्ये चेति । अत्रैवेत्यस्य सामीप्यस्य चावस्थितत्वात् । अत्रैवकारस्यान्यव्यावृत्त्यर्थत्वे बाधकमालोच्य योग्यमर्थं दर्शयति ॥ अत्रापीति । नन्वेतदपि बाधितं । प्रसिद्धनरकस्वर्गयोरत्रासत्त्वादित्यतस्तदुपपादयति ॥ यातना इति । यातना आदीपनं स्वगात्राणामित्यादिरूपाः । इह राजभृत्यैर्दण्ड्येषूपलक्षिता दृष्टाः । उपलक्षणमेतत् । ये स्वर्गलोकस्थभोगास्तेऽपि जायादिपु दृष्टा इत्यपि ग्राह्यं । तथा च पूर्वार्धस्थनरकस्वर्गशब्दौ दुःखसुखविशेषपरावेव न प्रसिद्धनरकस्वर्गलोकपरावतो न विरोध इति भावः ॥ २९ ॥ उपसंहरति ॥ एवमिति । उभयं कुटुंबमुदरं च । तत्फलं कुटुंबोदरपोषणयोः फलं ॥ ३० ॥ उभयं विसृजेत्युक्तमेव विवृणोति ॥ एक इति । यद्भूतद्रोहेण भृतं पोषितं तत्कलवरं कुटुंबं चेहैव हित्वेत्यन्वयः । मार्गे नरके च भोगायात्र संपादितं किंचिन्नायाति किमोमित्याह ॥ कुशलेति । कुशलादितरत्पापं तदेव पापं पाथेयं भोग्यं यस्य स तथा ॥ ३१ ॥ ननु पापमपि विहाय कस्मान्न गच्छतीत्यत आह ॥ दैवेनेति । तस्य पूर्वोक्तस्य कुटुंबपोषकस्य सकाशाद्यच्छमलं पापं दैवेनेश्वरेणासादितं प्रापितं तद्भुंक्ते । दैवाधीनत्वात्पापं परित्यक्तुं न शक्नोतीति भावः । अत्र दृष्टांतमाह ॥ हृतवित्त इति । अत्र वित्तं शरीरस्थानीयं । तस्यापगमेऽपि यथाऽऽतुरो दैवोपसादितं व्याधिं भुंक्तेत्युक्तं न समर्थस्तथैवेत्यर्थः ॥ ३२ ॥ एवं कुटुंबपोषणादिमात्रनिरतानां पापफलमुक्त्वेदानीं विष्णुवैष्णवद्वेषिणां पापफलं दर्शयति ॥ केवलेनेति । मुख्येनाधर्मेण हरिद्वेषादिरूपेणेत्यर्थः । तमसः पदं यस्य । अलुक् समासः । तमः पदवाच्यं । तामिस्रापेक्षया चरममंधंतामिस्रसंज्ञं नित्यनरकं यातीत्यर्थः । हि शब्दोऽत्र प्रमाणप्रसिद्धिद्योतकः ॥ ३३ ॥ इतरेषां पापिनां पुनरावृत्तिरस्तीत्याह ॥ अधस्तादिति । नरलोकस्य भूलोकस्याशुचिभोगेन क्षीणपापः सन् ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यामेकत्रिंशोऽध्यायः ॥ ३—३१ ॥ ॥

॥ हरिः ॐ ॥ अत्र पुनर्वैराग्याय गर्भवासादिनिमित्तं दुःखं निरूपयितुं तावद्गर्भप्राप्तिप्रकारमाह ॥ कर्मणेति । दैवतंत्रेण दैवाधीनेन पूर्वकर्मणा रेतः कणाश्रयो रेतोबिंदुंतर्गतः सन् कलिलं रेतः शोणितेन मिश्रितं भवति । तु शब्दो वंध्याशोणितमिश्रीभावाद्वि

शेषसूचकः। बुद्बुदं वर्तुलाकारं कर्कंधुरिव कर्कंधुर्बदरीफलाकारं काठिणं। पेशो जरायुरुद्दिष्टः सुवर्णं पेश उच्यत इति वचनात्पेश शब्दो जरायुवाची। तथा च पेशीत्यस्य जरायुणा वीतमित्यर्थः॥ अंड वेति। मनुष्यगर्भस्यैवात्र विकल्पेनांगीकृतत्वमुच्यत इति भाति। न च तद्युक्तं। अंडत्वस्य पक्ष्यादिगर्भधर्मत्वादतोऽडं वेति पक्षांतरोक्तेरभिप्रायं प्रमाणेनैवाह॥ नानाविधेति। मनुष्यपक्ष्यादिरूपेत्यर्थः। भविष्यति भवति। प्राणिनामिति शेषः। नानाविधं पेश्यंडं वेत्येवं रूपं गर्भसंस्थानं गर्भवृद्धिः। तथा च पक्ष्यादिगर्भमभिमेत्यांडं वेति पक्षांतरमुक्तं न मनुष्यगर्भमपेक्ष्यैवातो न विरोध इत्याशयः॥ २॥ बाव्हंघ्याद्यादिभिरंगैरवयवैर्युक्तो विग्रहो देहो भवति। नखलोमास्थिचर्माणि भवंति। लिंगस्य पुल्लिंगादिलक्षणस्य छिद्राणामिंद्रियद्वाराणां चोद्भव उत्पत्तिस्त्रिभिर्मासैः॥ ३॥ धातवस्त्वक्चर्मादयो जरायुणा गर्भवेष्टनेनावीत आवृतः॥ ४॥ जगत्यां कर्मभूमौ यानि गतानि जन्मानि कर्माणि च स्वकृतानि तथा देवस्य हरेर्माययेच्छयाऽऽत्मनः स्वस्य बंधनं सुखदुःखाद्यनुभवरूपं स्मरते स्मरति। ऋषिर्ज्ञानी। तथा च सप्तमे मासि तस्य सम्यग्ज्ञानमुत्पद्यत इत्याशयः॥ ५॥ आतुरो रोगी तस्य संमतस्तद्वत्स्थितः स यथा परतः स्वदेहयात्रामाप्नोति तथाऽयमपीति। जंतूनां संभवो यस्मिन्गर्ते स जंतुः स जीवः॥ ६॥ तत्रत्यैः कृमिभिः खादद्भिः क्षतं च कंडू चांगेषु यस्य सः क्षतकंड्वंगः॥ ७॥ कटुर्मरीचिकादिः तीक्ष्णः सर्षपादिः क्षार चूर्णादिराम्लश्चूतः सर्वांगेषूत्थितोत्पन्ना वेदना यस्य स तथा॥ ८॥ उल्बेन जरायुणा तस्मिन्गर्ते स्वशिरः कुक्षौ कृत्वा भुग्नं कुटिलीकृतं पृष्ठं शिरोधरा ग्रीवा च यस्य॥९॥ शकुंतोऽनुत्पन्नपक्षः पक्षी दीर्घं चिरकालमनुच्छ्वासं कुर्वन् तत्र गर्भे किं नाम सुखं विंदते न किमपीत्यर्थः॥ ११॥ सूतिवातैः सूतिहेतुभिर्वातैर्वेपितः। सोऽयं अमानभूर्विष्ठाभूर्विष्ठोत्पन्नः कृमिरिव॥ १२॥ नाथमान एवं विधो गर्भवासो मा भूदिति याचमानः। नाथृ नाधृ याञ्चायामिति धातोः। भीतः पुनर्गर्भवासात्। अत्र वध्रि शब्दस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति॥ वध्रयास्त्विति। तु शब्द इति शब्दार्थः। तथा च वध्रय इतींद्रियाण्याहुरित्यर्थः। चापि शब्दौ परस्परसमुच्चयौ। उत शब्द आहुरित्यस्यानुकर्षणार्थः। तथा च मनोबुद्धिसहितानि श्रोत्रादीनि पंचेति सप्त वध्रय इंद्रियाणि यस्य स तथा। स्वव्यापारानुकूलज्ञानेंद्रियवानित्यर्थः। स्तुवीत स्तवीत। क्वचित्तथैव पाठः। तं परमात्मानं विक्लवया व्याकुलया श्रोतॄणां कृपाजनकयेति वा॥१३॥

योऽसौ दैवाल्लब्धस्मृतिः सोऽहं येन हरिणाऽसतोऽशुभस्य ममेदृशी गर्भवासलक्षणा गतिः स्थितिरदर्शि तस्य हरेर्लसच्चरणारविंदं शरणं व्रजामि । कथं भूतस्य । तस्योपपन्नं शरणागतं जगदवितू रक्षितुः । अव रक्षण इति धातोः । अवितुमित्यपि कचित्पाठः । इच्छया भक्तानुग्रहेच्छया शुभ्यात्तलीलातनोः स्वीकृतलीलावतारस्य । अनेन स्ववत्तस्य गर्भवासदुःखं नास्तीति सूचयाति । कथं भूतं तं चरणारविंदं । न विद्यते कुतोऽपि भयं यस्मात्तन्न कुतो भयं । दूरस्थं तं ॥ १३ ॥ कथं शरणं व्राजिष्यसीत्यपेक्षायामाह ॥ यस्त्वत्र इति । तु शब्दो जीवाद्वैलक्षण्यसूचनार्थः । यो भूतेंद्रियाशयमयीं भूतेंद्रियांतःकरणरूपेण परिणतां मायामवलंब्य प्रवर्तकत्वेनाश्रित्यात्र तदात्मके देहे कर्मभिः पुण्यपापलक्षणैरावृतात्माऽनाविर्भूतस्वरूपो बद्ध इव संसारीवास्ते । तथाऽपि विशुद्धं अखंडबोधं अपरिच्छिन्नज्ञानं । अत एवाविकारं सर्वथा विकाराहितं । एतैर्विशेषणैस्तु शब्दसूचितं वैलक्षण्यं विवृतमिति ज्ञातव्यं । आ सम्यक् तप्यमाने मदीये हृदयेऽवासितं प्रतीतमेमि । शरणमिति शेषः ॥ १४ ॥ एतदेव विवृण्वन्प्रकृतिपुरुषौ विहायायमेव कुतस्तूयत इत्याशंकामपाकरोति ॥ यः पंचेति । छन्नः सन् अवहितः प्रेरकतया स्थित इंद्रियाणि गुणान् शब्दादीन् अर्थं पुरुषार्थं वेत्तीतींद्रियगुणार्थविदात्मकः परमात्मविंबोऽहं यथाऽवहितस्तथा । एवं समीपस्थत्वेन कारणेन तमेनं हरिं अकुंठमहिमानमृषिं सर्वज्ञं । अत एव प्रकृतिपुरुषयोः परमुत्तमं पुमांसं वंदे स्तौमि ॥ १५ ॥ इदानीं गर्भाद्बहिर्निर्गतस्य सांसारिके मार्गे चरतो मम हरिस्मृतिर्नष्टा भविष्याति सा पुनर्मम महतामनुग्रहेणैव भविष्याति । अतो महतामनुग्रहो ममास्त्वित्याशयेनाह ॥ यन्माययेति । यस्य हरेर्माययेच्छयोरुगुणाः सत्त्वादयः कर्माणि च निबंधनानि निमित्तानि यस्य तस्मिन् । तदतिश्रमेण संसारमार्गप्राप्तौ क्लेशेन नष्टस्मृतिर्नष्टहरिज्ञानोऽयं लोको मल्लक्षणो जनः पुनस्तां हरिस्मृतिं मदनुग्रहमंतरेण कया युक्त्या युक्तिर्योग उपायः केनोपायेन प्रवृणीत न कयाऽपि । अतो महदनुग्रहो मय्यस्त्वित्याशयः ॥ १६ ॥ सर्वपुरुषार्थसाधनमिदं ज्ञानं येन ममेदानीं दत्तं स एवेदानीं गर्भवासनिमित्तकतापत्रयोपशमनं करिष्यतीत्याशयेनाह ॥ ज्ञानमिति । अत्र कतम इत्यस्य प्रकृतसंगत्यर्थमाह ॥ कतम इति । तथा च क शब्दः सुखवाची । अतिशयार्थे तमविति भावः ॥ ततश्चायमर्थः ॥ यः कतमः सुखपरिपूर्णः । न केवलं मय्येव किंतु स्थिरचरेष्वनुवर्तिताशस्तत्प्रेरणाय तदंतःस्थापितरूपः स देवस्त्रैकालिकमतीत-

जन्मादिविषयमेतज्ज्ञानं मेऽदधादुत्पादितवांस्तं परमोपकारिणं । ननु ज्ञानिनस्तव कुतस्तापत्रयप्रसक्तिरित्यत उक्तं ॥ जीवकर्मेति । जीवबंधकप्रारब्धकर्ममार्गेऽनुवर्तमाना इत्यर्थः । तथा च तापत्रयप्रसक्तिः प्रारब्धकर्मबलादेवेति भावः ॥ १७ ॥ इदानीं गर्भवासस्य तापत्रयसाधनत्वं दर्शयन् गर्भाद्बहिर्निष्कासनं प्रार्थयते ॥ देहीति । मल्लक्षणो देही । अन्यदेहविवरे मातुरुदरे । वर्तमानो सृग्विण्मूत्रपंके पतितो मातुर्जठराग्निना भृशं संतप्तदेहोऽत एव कृपणधीरितो मातुर्देहाद्विवासितुं निर्गतुमिच्छन्स्वमासान्स्वविषयकदशमासान्कत्यतीताः कत्यवशिष्टा इति गणयन्कदा नु निर्वास्यते बहिर्निष्कास्यते शीघ्रं बहिर्निष्कासनं करोत्वित्याशयः ॥ १८ ॥ इदानीं भगवत्कृतोपकारस्य न प्रतिक्रियेत्याशयेनाह ॥ येनेति । हे ईश । असौ दशमास्योऽहं येन भवादृशेन भवतः सदृशेन भवतः सदृशो भवानेव नान्य इति सूचयितुमिदं पुरुषेणेदृशीं भगवद्विषयां मतिं संग्राहितः । स दीननाथो भगवान्स्वेनैव कृतेन स्वकृतेनैव स्वयं तुष्यतु मम स्वातंत्र्येण कर्तृत्वाभावात् । स्वयमेव तुष्यत्वित्यस्याभिप्रायं स्वयमेवाह । अस्य हरेरंजलिं विना तत्प्रति तस्य प्रत्युपकारं को नाम कुर्यात् । न कोऽपि कर्तुं समर्थ इति ॥ १९ ॥ इदानीं श्रीहरिणाऽनुगृहीतज्ञानफलं किं येन तत्प्रतिक्रिया नास्तीत्युच्यत इत्यतस्तत्फलं स्फुटतरदेहात्मसाक्षात्कारः सर्वगतश्रीहरिसाक्षात्कारश्चेत्याह ॥ पश्यत्ययमिति । अत्राशरीरवदित्यस्य योग्यमर्थं दर्शयति ॥ अशरीरवदिति । नन्वस्य देह इत्यत्रास्येत्यनेन न जीवपरामर्शः । तथात्वे स्वदेह इत्येव वक्तव्यत्वात् । अशरीरशब्दोक्तपरमात्मपरामर्शे व्याघातः । अशरीरस्य देहाभावादतोऽत्रोपपत्तिमाह ॥ परमात्मन एवेति । अशरीरस्यैवेत्यर्थः । देहोप्युच्युत इति शेषः । अपि शब्द उक्तव्याघातस्याभासत्वप्रदर्शनार्थः । तदेवाह ॥ तद्वशत्वादिति । तथा चास्येति प्रकृतशरीरपरामर्शेऽपि न व्याघातः । अस्मदादिदेहस्य भगवदधीनत्वेन गौण्येव वृत्त्याऽस्य देह इत्युक्तत्वादिति भावः ॥ ततश्चायं श्लोकार्थः ॥ सप्तवध्रिः स्वानुकूलव्यापारोन्मुखसप्तज्ञानेंद्रियोऽयं जीवोऽस्य शरीरस्य परमात्मनोऽधीने देहेऽशरीरवत्परमात्मन इव परमात्मप्रतियोगिकभेदमिव । एतदुपपादनायैव स्वदेह इत्युक्तं । शरीरभेदं जीवप्रतियोगिकभेदं । यत्सृष्टया यद्दत्तया धिषणया पश्यति सोऽहं तं पुराणपुरुषं प्रतिहृदि चैत्यामिव चित्ताभिमानिनं विरिंचमिव प्रतीतं विज्ञातं बर्हिश्चेतनगतिं स्थितिं पश्ये देहे स्फुटतरात्मभेदसाक्षात्कारः सर्वगतहरिसाक्षात्कारश्च सर्वः पुरुषार्थ-

साधक इति भावः । इदं सर्वगतहरिदर्शनादिकं गर्भस्थान्देवानुत्तमानृषीन्वाऽभिप्रेत्योक्तं न सर्वानित्याशयेनात्र प्रमाणमाह ॥ तत्त्वज्ञानमिति । तु शब्दस्तस्योक्तापरोक्षत्वादिरूपविशेषद्योतकः ॥ उत्तमानामिति । अप्रतीकालंबनानामित्यर्थः । अन्येषां गर्भस्थानां बहुजन्मगमतीतबहुजन्मविषयकमेव ज्ञानं भवति न तत्त्वविषयकमित्यर्थः ॥ २० ॥ इदानीं बहिर्निर्गमने ज्ञाननाशादिकं पश्यन् अत्रैव स्थास्यामीत्याशास्ते ॥ सोऽहमिति । हे विभो । बहुदुःखवासं वसन्ननुभवन्नपि सोऽहं गर्भाद्बहिर्न निर्जगमिषे निर्गंतुं नेच्छामि । कुत इत्यत आह ॥ यत्रेति । अंधकूपप्राये यत्र बहिर्देशे उपयांतं गतं मां देवमाया मिथ्यामतिर्देवस्य हरेर्मायया बंधकशक्त्या कृता मिथ्यामतिरहंममेत्यादिस्वातंत्र्यमातिः । ततः किमित्यत आह ॥ यदन्विति । यस्या मिथ्यामतेरनु एतज्जननमरणादिलक्षणं संसारचक्रं संसारपरिवर्तनं भवति । अतो न निर्जगमिष इत्यन्वयः ॥ २१ ॥ अत्रैव स्थित्वा किं करिष्यसीत्यपेक्षायामाह ॥ तस्मादिति । बहिर्निर्गमनस्यानर्थसाधनत्वात् । विगतविक्लवो विगतो धैर्य उपसादितौ हृदयं प्रापितौ विष्णुपादौ येन स तथा । विष्णुपादध्यानपरोऽहमाशु शीघ्रमात्मानं मां तमसोऽऽज्ञानमूलात्संसारात्सुहृदात्मनैवानिमित्तबंधुभूतपरमात्मप्रसादेनैवोद्धरिष्ये मुक्तो भविष्यामि । भूयः पश्चाद्यथैतदनेकरंध्रमनेकानर्थद्वारं व्यसनं संसाराख्यं मे मा भविष्यन्न भविष्यति तथा ॥ २२ ॥ एवं कृतमतिर्विनिश्चितबुद्धिः सपद्यपि तत्काल एवं ज्ञानिनमर्वाचीनमवाक् शिरसं । अनेन हरेर्माहात्म्यं जीवास्वातंत्र्यं च ध्वनितं ॥ २३ ॥ वैराग्याय जायमानस्य जातस्य च दुःखं दर्शयति ॥ तेनेति। तेन सूतिमारुतेनोपसृष्ट उपक्षिप्तः ॥ २४ ॥ विष्ठाभूरिव कृमिरिव रोरूयति रोरूयते । विपरीतां गतिमज्ञानलक्षणां ॥ २५ ॥ परच्छदं परस्याभिप्रायं । जनेन मात्रादिना । अनभिप्रेतं क्षुधितस्यौषधमुदरव्यथादियुक्तस्य स्तन्यादिरूपमनपेक्षितमापन्नः प्राप्तः प्रत्याख्यातुमिदं मम नापेक्षितमिति वक्तुं अनीश्वरोऽसमर्थः ॥ २६ ॥ अशुचिपर्यंके विण्मूत्रयुक्तत्वादशुद्धे तल्पे ॥ २७ ॥ आत्मत्वचं मृदुनूतनत्वचं । दंशाः सूचिमुखाः । मशकाः सूक्ष्ममक्षिकाः कृमिकं कृमिपूर्णक्षतांगं मणिकीटमित्यप्याहुः ॥ २८ ॥ शैशवं पंचवर्षाणि । ततो यौवनादर्वाक् पौगंडं तत्राध्ययनादिदुःखं च यौवनदुःखमाह ॥ अलब्धाभीप्सित इत्यादिना । अज्ञानाद्धरिस्वातंत्र्याज्ञानात् । शुचार्पितो व्याप्तः ॥२९॥ सहदेहेन मानेन देहेन सहैव वर्धमानेनाभिमानेन मन्युना च विग्रहं विरोधं करोति। आत्मनः

स्वस्यांताय नाशाय ॥ ३० ॥ अज्ञानमेव तत्कार्यप्रदर्शनेन प्रपंचयति ॥ भूतैरिति । असद्ग्राहो दुरभिमानो यस्याः सा तथा तां ॥ ३१ ॥ तदर्थं अहंममेत्याद्यसद्ग्राहदृढीकरणाय । येन कर्मणा बद्धः ॥ ३२ ॥ एतदेव स्पष्टयति ॥ येनेति । ईदृशं नरकादिलक्षणं ॥ ३३ ॥ ननु सन्मार्गे निरतः स्वात्मोद्धारं करिष्यतीति चेत् । सत्यं । असज्जनसंगत्यभाव एवैतत् । अन्यथा पुनः संसारप्राप्तिरित्याह ॥ यद्यसद्भिरिति । पथि कथंचित्सन्मार्गे आस्थितो जंतुर्यद्यसद्भिः सह पुना रमते तर्हि पूर्ववदेव तमोऽसद्ग्राहादिरूपं विशति ॥ ३४ ॥ ननु सत्यादिगुणवत्त्वे कथमसत्संगात्तमःप्रवेश इत्यत आह ॥ सत्यमिति । ॥ ३५ ॥ असत्संगः सर्वथा मुमुक्षुणा त्याज्य इत्याशयेन तं निंदति ॥ तेष्वित्यादिना । अत्र खंडितात्मावसायिष्वित्यस्य परिच्छिन्नजीवनिश्चयस्त्विति व्याख्याने निंदाया अलाभात्तदनूद्य तात्पर्यं दर्शयति ॥ खंडितात्मावसायिष्विति । तथा च खंडितः परिच्छिन्नो जीव एव देहेऽस्ति नापरिच्छिन्नः परमात्मेति निश्चयस्त्वित्यर्थः । एवं निंदा लभ्यत इति भावः । इदं चासाधारण्येन व्यपदेशा भवंतीति न्यायेन लभ्यत इति द्रष्टव्यं । योषितां क्रीडामृगवद्वर्तमानेषु ॥ ३६ ॥ योषित्संगिसंगवद्यो-षित्संगोऽपि मोहक इत्याह ॥ न तथाऽस्येति ॥ ३७ ॥ योषित्संगस्य मोहकत्वे कैमुत्यन्यायमाह ॥ प्रजापतिरिति । रोहिद्भूतां भयान्मृगीभूतां । ऋस्य रूपी मृगरूपीह गतत्रपो निर्लज्जः । असुरजनमोहनाय । ब्रह्मणा प्रदर्शितव्यापारानुवादपरमेतदिति ज्ञातव्यं ॥ ३८ ॥ तस्य ब्रह्मणः सृष्टौ सृष्टा मरीच्यादयस्तत्सृष्टाः कश्यपादयस्तेषु वर्तमानः पुमान्कोऽन्वखंडितधीर्नाकृष्टमना न कोऽपि । अत्र माययेत्यस्य मायाकल्पितयेत्यन्यथाप्रतीतिवारणाय मायाशब्दार्थं प्रमाणेनैव दर्शयति ॥ मय इति । तद्वशो बंधकशक्तिरूपः पदार्थो मायेत्युच्यते । योगरूढ्यामित्यर्थः । तथा च योषिन्मय्या स्त्रीरूपमायया हर्यधीनबंधकशक्त्याऽखंडितधीः क इति मूलार्थ इत्याशयः ॥ ३९ ॥ योषिन्मय्या मायाया अन्यैरजेयत्वं दर्शयति ॥ बलमिति । मे ममाधीना या दिशां जयिनः शूरानपि निजायत्तान्स्वाधीनान् ॥ ४० ॥ एतादृशजयोपायस्तत्संगत्याग एवेत्याशयेनाह ॥ संगमिति । संगं स्नेहं संसर्गं वा । एवं पारं चरमावधिं । ननु सुखदुःखप्रदायास्तस्याः कथमकस्मात्त्याग इत्यत आह ॥ मत्सेवयेति । प्रतिलब्धः प्राप्त आत्म-लाभः स्वरूपानंदानुभवो येन स तथा । तत्त्यागेन तदपेक्षयाऽधिकं स्वरूपसुखं लभ्यत इत्याशयः । प्रतिलब्धात्मभाव इतिपाठे

संप्राप्तपरमात्मभक्तिरित्यर्थः। तदा भगवद्भक्तिरेव परमपुरुपार्थरूपेति भावः। तत्संगेऽनर्थ इत्यत्र वृद्धसंमतिमाह ॥ वदंतीति । अस्य तत्रासक्तस्य ॥४१॥ इतोऽपि स्त्रीसंगस्त्याज्य इत्याह ॥ योऽपयातीति । शनैः शुश्रूषादिमिषेण। मृत्युं मृत्युतुल्यं॥ अनर्थप्रदामिति यावत् ॥४२॥ एवमन्यस्त्रीसंगोऽनर्थप्रद इत्युक्त्वेदानीं च स्वस्त्रीसंगोऽप्यनर्थप्रद इत्याह ॥ यामिति । ऋषभायतीं पुरुषवदाचरंतीं। सर्वनिर्वाहिकामिति यावत् । अनेनैतादृशी पूर्वं पुरुष इति सूचयति । तर्हि कथं स्त्रीत्वं प्राप्तेत्यपेक्षायामाह ॥ स्त्रीत्वमिति । स्त्रीसंगतः पूर्वदेहत्यागकाले स्त्रीध्यानेन । यं यं वाऽपि स्मरन् भावमिति वचनात् ॥ तमिति । विधेयलिंगापेक्षया पुल्लिंगनिर्देशः ॥ ४३ ॥ एवं स्त्रीसंगस्यानर्थहेतुत्वकथनप्रसंगाद्भृत्यादिसंगोऽपि तथेति दर्शयति ॥ भृत्येति । भृत्यादिरूपमपि दैवोपसादितं मृत्युं जानीयादित्यर्थः । यथा मृगयोर्लुब्धकस्य गायनमनुकूलत्वेन प्रतीयमानमपि मृगस्य मृत्युहेतुरिति जानाति तथेत्यर्थः । अत्र प्रकरणे स्त्रीसंगिसंगः स्त्रीसंगश्च सर्वात्मना न कर्तव्य इति भाति । न चेदं युज्यते । तथात्वे स्त्रीसंगिनां विशिष्टादीनां संगस्य गार्हस्थ्यस्य च मुमुक्षुणाऽननुष्ठेयत्वप्रसंगात्। अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति॥ सत्पुंस्विवेति । स्त्रीषु । सतीष्विति शेषः । तर्हि निषेधवचनस्य का गतिरित्यत उक्तं ॥ दोषकृदिति । दुष्टजंतुषु स्त्रीपुरुषेषु । तथा च दुष्टानां स्त्रीसंगिपुरुषाणां दुष्टस्त्रियश्च संगं न कुर्यादित्येवैतन्मूलार्थ इत्याशयः ॥ ४४ ॥ एवं दुष्टयोषित्संगिसंगस्य दुष्टयोषित्संगस्यानर्थहेतुत्वमुक्त्वेदानीं तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिमिति यत्कर्मपरंपरायाः संसृतिपरंपराहेतुत्वमुक्तं तद्विशदयति ॥ देहेनेति । अत्र जीवभूतेन जीवरूपेण देहेनेत्यन्यथाप्रतीतिवारणाय व्याख्याति ॥ जीवेति । तथा च जीवपदं जीवकर्मोपलक्षकं । जीवकर्मभूतं जीवभूतमिति मध्यमपदलोपी समास इत्याशयः ॥ ततश्चायमर्थः ॥ जीवभूतेन पूर्वार्जितजीवकर्मजातेन देहेन यातनानिमित्तेन तेजोमयेन वा युक्तो जीवो लोकादिमं लोकं परित्यज्य लोकं नरलक्षणं वाऽनुव्रजंस्तत्र कर्माणि कर्मफलानि भुंजान एव शेषेणेमं लोकमागत्य तत्रापि पूर्वकर्मफलानि भुंजान एव पुनः कर्माणि करोति । एवमविरतमनवसानं यथा स्यात्तथा करोतीत्यर्थः ॥ ४५ ॥ ननु भवेदिंद्रियादिसंबंधो हि जीवस्य बंधः । तदपगमश्च मृतावेव जातः । अतो मुक्तस्य कथं नरकाद्यनर्थप्राप्तिरित्यत आह ॥ जीव इति । देहो लिंगशरीररूपो यस्यानुगो येन सह गच्छति

स जीव उक्तरीत्याऽविरतं कर्माणि करोतीत्यन्वयः । अनेन प्रसिद्धमर्तो न सर्वथा भूतेंद्रियादीनां संबंधापगमो येन तदैव तस्य मुक्तिः स्यात् । लिंगशरीररूपेण तेषां जीवेन सह गमनात्। किंतु स्थूलात्मना विकृतानामेव केषांचिद्भागानामित्युक्तं भवति । नन्वथाऽपि जीवो जात मृत इत्यादिव्यवहारात्तस्य देहेन सह नष्टत्वेन कथं परलोकगमनमित्यतोऽयं व्यवहारोऽमुख्य इत्याह ॥ तन्निरोध इति । तत्तस्य स्थूलदेहस्य निरोधो नाश एवास्य जीवस्य मरणं मरणव्यवहारे कारणभाविर्भावो भूतसंयोगलक्षणो विशेषतया प्रकाशः संभव उत्पत्तिव्यवहारे कारणं। जीवो नित्यो धातुरस्य त्वनित्य इत्येतत्प्रमाणांतरबलादेवं कल्प्यत इत्याशयः ॥४६॥ ननु तन्निरोधोऽस्य मरणमित्युक्तं। भस्मीभावात्पूर्वं स्थूलदेहे शवरूपे विद्यमानेऽपि जीवो मृत इति व्यवहारप्रदर्शनादित्यत-स्तस्याभिप्रायं मूलकृत्स्वयमेवाह ॥ द्रव्योपलब्धीति। द्रव्योपलब्धिस्थानस्य जीवे पदार्थदर्शनेऽवच्छेदकस्य देहस्य द्रव्येक्षायां पदार्थ-दर्शनजनने यदाऽयोग्यता भवति तत्तदेव तस्य पंचत्वं मरणं विवक्षितं न स्वरूपनाशः । ईक्षाभाव इत्येवोक्ते सुप्तादावपि मृत इति व्यवहारप्रसंगः । अतस्तद्योग्यताभावपर्यंतं धावनमिति ज्ञातव्यं । घटादावप्युक्तायोग्यत्वस्य सत्वेन पंचतत्त्वव्यवहारप्रसंगवारणाय द्रव्योपलब्धिस्थानस्येत्युक्तं। नन्वेवं तदुत्पत्तिरप्येतद्विपरीतैव देहस्य वक्तव्या। ओमित्याह ॥ अहंमानादिति। द्रव्योपलब्धिस्थानस्य यदहंमानादहंमानेन शरीरेण कर्ता ममेदं शरीरमित्यभिमानविषयत्वाद्द्रव्यदर्शनं पदार्थदर्शनयोग्यतावत्वं भवति तत्सैव तस्योत्पत्ति-रित्यर्थः । अहंमानादित्योक्तरूपाभिमानविषयत्वयोग्यताभावः पंचत्वं तद्योग्यतावत्वमेवोत्पत्तिरित्यपि सूचयति ॥४७॥ ननु जन्म-मरणरूपयोरुक्तयोग्यतायोग्यतयोर्देहनिष्ठयोः कथं जीवे तद्व्यवहारजनकत्वमित्याशंकायां दृष्टांतमुखेन तदुपपादयति ॥ यथेति । अत्र द्वितीयार्धे चक्षुषो द्रष्टुरित्येतत्सामानाधिकरण्यभ्रांतिवारणाय व्याख्याति । चक्षुःसकाशाद्द्रष्टुरिति । अनयोरित्यस्यार्थं दर्शयन् चतुर्थपादेऽन्वयं दर्शयति ॥ द्रष्टृत्वमक्ष्णोर्योग्यतेति । अक्ष्णोर्गोलकयोः ॥ ततश्चायं श्लोकार्थः ॥ यथा चक्षुषामिंद्रियस्य द्रव्याणि च तदवयवाश्च चक्षुर्योग्याः । सर्वे पदार्था इति यावत् । तेषां दर्शनायोग्यता तज्जननायोग्यता यदा मरणकाले भवति तदैव तस्मिन्नेव कालेक्ष्णोर्गोलकयोरपि सा भवतीति व्यवहारः। यथा च यदा चक्षुषः सकाशाद्द्रष्टुर्जीवस्य द्रष्टृत्वं। चक्षुषो जीवकर्तृकपदार्थविषयकदर्शनजननयोग्यता भवतीति व्यवह्रीयते। तथैव देहधर्मयोरुक्तरूपयोर्जननमरणयोर्जीवे व्यवहार इति ॥४८॥ 

ननु तथाऽपि जीवस्य नोक्तरूपसंसारो वास्तवः संभवति किंतु मिथ्याभूत एवेति कल्पनीयं। तस्य ममैवांशो जीवलोक इत्यादिना भगवदंशत्वावगमात्। न हि भगवदंशेषु मत्स्यादिषु वास्तवः संसारोऽस्तीत्यत आह ॥ पुंस इति । यथेंद्रियाणि षोडशकलाः पुरुष इत्यादौ जीवांशत्वेनोक्तान्यपि पुंसो जीवस्य पृथक् कला भिन्नांशाः कल्प्यंते न जीवस्वरूपभूतास्तथेशांशा ईशांशत्वेनोक्ता जीवा अपि पृथक् कला भिन्नांशा एव कल्पनीयाः। अतस्तद्गतसंसारोऽपि वास्तव एवेत्यर्थः। अंशत्वेनोक्तिरप्रयोजिकेत्याशयः। नन्ववश्यमिंद्रियाणां जीवपृथक्कलात्वमेव कल्पनीयं। जीवानां चेतनत्वादिंद्रियाणामचेतनत्वात्।प्रकृते च न जीवानां परमेश्वराद्भेदसाधकमस्तीत्यत आह ॥ विंदंति स्वगतमिति । यतो जीवाः परं केवलं स्वगतं सुखं विंदंति लभंते। अनुभवंतीति यावत्। नान्यगतमीश्वरादिगतमतः पृथक् कला इत्यर्थः। जीवा नेश्वराद्यभिन्नास्तद्गतसुखदुःखाद्यनुसंधनशून्यत्वादिति युक्तिरत्रापि भेदसाधिकाऽस्तीत्याशयः। दुःखग्रहणेनानयैव युक्त्या जीवांतरभेदोऽपि साधनीय इति सूचयति। तेनात्मैकत्ववादिनां मतं निरस्तमिति ज्ञातव्यं ॥ ४९ ॥ नन्वेवं संसारसत्यत्वे कथं तन्निवृत्तिरित्यत आह ॥ आत्मन इति । अत्र केवल शब्दस्यात्म पदेनान्वयभ्रमं वारयन् अर्थशब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ केवलज्ञानमिति । पुरुषार्थः संसारनिवृत्तिरूपपुरुषार्थहेतुरित्यर्थः। तथा चात्मनः परमात्मनो जीवस्य वा केवलं तदुभयस्वरूपेतरविषयकं ज्ञानमर्थः पुरुषार्थहेतुरित्यर्थः। सत्योऽपि संसारोऽस्वाभाविकत्वादुक्तज्ञानेन निवर्तत इत्याशयः। ननु कथमुक्तज्ञानेन सुखदुःखादिरूपसंसारनिवृत्तिरित्यतस्तदुपपादयितुं प्राप्तस्य देहाद्यसंगिन इत्यादिमूलस्याभिप्रायमाह ॥ देहादिष्वसंगिन इति । अंते विद्यमानस्यात्मन इत्यस्य व्याख्यानं ॥ जीवस्येति । तन्निमित्तसुखादयः स देहादिसंगो निमित्तं येषां ते तन्निमित्तास्ते च ते सुखादयो न संति न भवंति। च शब्दोऽपि शब्दार्थः। आत्मेत्यनेन संबध्यते। तेन कैमुत्यलाभ इत्याशयेनोक्तं ॥ किमुतेति ॥ ततश्चायं मूलाशयः ॥ सुखदुःखादिलक्षणो हि संसारो देहविशिष्टजीवनिष्ठः। स च तस्य देहाद्यासक्तिनिमित्तः। तदासक्तिश्च जीवेश्वरस्वरूपाज्ञाननिमित्ता उक्तरीत्या जीवेश्वरस्वरूपज्ञानेन तत्रासक्तिनिवृत्तौ तन्निमित्तसुखदुःखादिरूपसंसारस्य देहविशिष्टे तावन्नोत्पत्तिः। तद्विशेषणीभूतदेहे तु विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवतीति न्यायेन प्रसक्तोऽपि दुःखादिरूपः संसारो न संभवति। अचेतनत्वात्। अत उक्तज्ञानेन देहे विशिष्टजीवगतः सुखदुःखादिलक्षणः

संसारो निवर्तत इति ॥ ५० ॥ सिद्धमित्युपसंहरति ॥ तस्मादिति । संसारस्य जीवस्वरूपाज्ञाननिमित्तत्वेनास्वाभाविकत्वाज्जीवगतिं जीवस्वरूपास्थितिमुक्तरीत्या बुद्ध्वा मुक्तसंगो देहाद्यासक्तिरहितः सन् धीरः श्रीहरिविषयकबुद्धौ रममाण इह स्ववासोचितलोकेषु चरेद्वर्तेत ॥ ५१ ॥ उक्तमेव विशदयन्नेवं वर्तमानं स्तौति ॥ सम्यागिति । अत्र बुद्ध्वा जीवगतिमित्येतावदनुवर्तनीयं ॥ ततश्चायमर्थः ॥ सम्यग्दर्शनं यया सा तथा । तया योगो भक्त्यादिरूपः । एतादृश्या बुद्ध्या जीवगतिं बुद्ध्वविषयीकृत्य मायाविरचिते हरीच्छानिर्मिते भूरादिलोके कलेवरं । चरेद्वर्तेत स एव धीर इति ॥ ५२ ॥ इति श्रीभागवतटिप्पण्यां द्वात्रिंशोऽध्यायः ॥ ३–३२ ॥

॥ हरिः ॐ ॥ अत्र निवृत्तकर्मणां भक्त्यतिशयवतामपुनरावृत्तिलोकप्राप्तिफलं वक्तुं तत्र श्रद्धोत्पादनाय प्रवृत्तकर्मणां पुनरावृत्तिमल्लोकप्राप्त्यादिरूपं फलं तावद्दर्शयितुमाह ॥ अथेति । अथ शब्दः प्रकरणांतरारंभसूचकः । यो गृह एवावसन् गृहमेधीयान् गृहस्थाश्रमयोग्यान् धर्मान्दोग्धि । दोह्यमाह ॥ काममर्थं च धर्मं चेति । तान्दोग्धान्धर्मादीन् भूयः पिपर्ति पूरयति । पृ पालनपूरणयोरिति धातोः । पुत्रादिषूपदिश्य स्वयमनुतिष्ठतीति यावत् ॥ १ ॥ तदनुष्ठानं विशदयंस्तान्निंदति ॥ स चापीति । च शब्दो हेत्वर्थः । अपि शब्दः पूर्वाध्यायोक्तपापिसमुच्चयार्थः । न केवलं पूर्वोक्तपापी भक्त्या भगवदाराधनरूपाद्भगवद्धर्मात्पराङ्मुखः किंतु यस्तान्पिपर्ति सोऽपि कुतो यतः काममूढः सन् क्रतुभिर्देवान्यजते श्राद्धादिभिश्च पितॄन् ॥ २ ॥ ततोऽपि किमित्यत आह ॥ तच्छ्रद्धयेति । तच्छ्रद्धया तेषां पितॄणां देवानां श्रद्धयाऽऽक्रांता मतिर्यस्य । पितॄणां देवानां च तुष्ट्यर्थं व्रतं यस्य स पितृदेवव्रतः । चांद्रमसं चंद्रेणाधिकृतं लोकं स्वर्गैकदेशं । सोमपाः सोमयाजी । उपलक्षणमेतत् । श्राद्धादिकर्मकर्ता पितृलोकं गत्वा पुनरेष्यतीत्यपि ग्राह्यं । तथा च पुनरावृत्तिमल्लोकप्राप्तिसाधनकर्मकर्तृत्वादपुनरावृत्तिमल्लोकसाधनभगवद्धर्मात्सोऽपि पराङ्मुख इत्याशयः । अत्र सर्वथा भगवद्भक्तिशून्यस्यापि यजमानस्य स्वर्गलोकप्राप्तिरुच्यत इति भाति । न च तत्संभवति । पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरेरिति वचनात् । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ ईषद्भक्त इति । स्वर्गसाधनीभूताधमप्रसादजनकभक्तिमानित्यर्थः । सुकर्मा

वेदविहितयज्ञादिकर्मकर्ता । अभक्तः सर्वथा भक्तिशून्यः । तथा च गत्वा चंद्रमसं लोकमित्येतदीषद्भक्तमभिप्रेत्यैवोक्तमित्याशयः ॥ ३ ॥ लोकेषु सत्स्वपि पुण्यक्षयात्तत आवृत्तिमुक्त्वेदानीं तल्लोकानामपि लयावधिमाह ॥ यदा चेति । दैनंदिनप्रलय इत्यर्थः । तस्मान्न प्रवृत्तकर्मनिरतो भूयादित्याशयः ॥ ४ ॥ इदानीं निर्वृत्तकर्मिणां भगवल्लोकप्राप्तिं दर्शयति ॥ य इति । दुह्यंति दुहंति न्यस्तकर्माणो भगवत्येव समर्पितकर्माणः ॥ ५ ॥ निवृत्तिर्विषयवैराग्यं तल्लक्षणे धर्मे नितरां रताः स्वधर्माख्येन स्वस्वरूपभूतधर्मरूपेण सत्वेन सतो भावः सत्वं मोक्षयोग्यत्वं तेनाप्रतीकालंबनत्वादिरूपेण ॥ ६ ॥ परावरेशं मुक्तामुक्तेशं । प्रकृतिं मूलकारणमुत्पत्त्यंतो भावयति करोतीत्युत्पत्त्यंतभावनस्तं । अत्र सूर्यद्वारेण पुरुषं यांतीत्युपलक्षणं । ब्रह्मनाड्युत्क्रांता अर्चिरादिना मुख्यवार्ग्वतेन मार्गेण स्वस्वयोग्यतानुसारेण कार्यं परं वा ब्रह्म यांति । नाड्यंतरोत्क्रांतास्तु महरादिलोकस्थं ब्रह्मेत्यपि ग्राह्यं । एतत्सूचनायैव स्वधर्माख्येन सत्त्वेनेत्युक्तं ॥ ७ ॥ कियत्पर्यंतं तेषां तेषु लोकेष्ववस्थानमित्यपेक्षायामाह ॥ द्विपरार्धावसान इति । लोके वैकुंठादिषु ॥ ८ ॥ नन्वेषां परममुक्तिः कदेत्यपेक्षायां ब्रह्मणा सहैवेत्याह ॥ क्ष्मामित्यादिना । अर्थाः शब्दादयो भूतादिस्तामसोऽहंकारः । अत्र क्ष्मादिपदैः पंचानां महाभूतानां मनसो दशानामिंद्रियाणां । पंचानां विषयाणां । भूतादिपदोपलक्षितस्य त्रिविधस्याप्यहंकारस्याभिमानिनो देवा उच्यंते । प्रतिसंजिहीर्षुः स्वसृष्टं जगत्संहर्तुकामः । अव्याकृतं परमेश्वरं । यर्हि यदा गुणत्रयस्यात्माभिमानी । परं परसंख्योपेतं परः क्ष्मादिभ्यः ॥९॥ एवं तदा परेत्य देहत्यागेन भगवंतं तदीयं लोकं तेनैव ब्रह्मणैव पुरुषं वासुदेवमगताभिमाना अत्यक्तजीवभावाः । अनेन जीवभावात्यागकथनेन लिंगशरीरादेस्त्यागः सूचितः ॥१०॥ एवं ज्ञानिभिः सह परमपुरुषं प्रविष्टस्य ब्रह्मणः पूर्ववत्ततरमभावेनैवावस्थितिं सृष्टिकाले पुनर्बहिर्निर्गमनं च दर्शयति ॥ आद्य इति । अत्राभिमानेनेत्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ अभिमानेनेति ॥ पूर्णज्ञानेनेति । स्वयोग्यमुक्तिजनन इति शेषः । तथा च स्वस्वरूपाभिव्यक्तिमविद्यमानं ज्ञानमभिमानमिति निरुक्तिरत्राभिप्रेतेति ज्ञातव्यं । पुरुषं संगत्येत्यस्यापि प्रकृतोपयुक्तमर्थं दर्शयति ॥ संगत्येति । अगुणव्यतिकर इत्येतदत्रापि संबध्यत इत्यभिप्रेत्य तदर्थमाह ॥ लय इति । परमेश्वरमित्यनेन पुरुषर्षभमित्येतदुक्तार्थं । यथा पूर्वं प्रजायत इत्यस्य यथा पूर्वं जन्मोच्यत इति प्रतीतिवारणायार्थमाह ॥ यथा

पूर्वमिति । पूर्वं संसारदशायां यथा प्रतियोगिकनीचोच्चभाववान्स्थितस्तथैव तत्प्रतियोगिकनीचोच्चभाववानेव प्रजायते प्रादुर्भूतो भवतीत्यर्थः । पुरुषं प्रविश्य किं तत्र तिष्ठतीत्यपेक्षायां जाते गुणव्यतिकर इत्युक्तं तत्रापेक्षितं छेदमध्याहारं च दर्शयन्व्याख्याति ॥ अगुणव्यतिकर इति । गुणानां व्यतिकरो विकारस्तच्छून्य इत्यर्थः । स क इत्यपेक्षायामुक्तं ॥ बहिरिति । भगवदुदराद्बहिः स्थिते श्वेतद्वीप इत्यर्थः । निर्गच्छतीत्यध्याहारः । यथा पूर्वं प्रजायत इत्येतदनंतरमस्य व्याख्यानं त्वाकांक्षाक्रममनुसृत्येति ज्ञातव्यं । यथा पूर्वं प्रजायत इत्यस्योक्तार्थत्वे प्रमाणसंवादमाह ॥ गुणव्यतिकरेति । प्रलय इत्यर्थः । मुक्त्यवस्थायामपीति यावत् । अनेनागुणव्यतिकर इत्येतद्यथापूर्वमित्यत्रापि संबध्यत इति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ यो वेदगर्भो ब्रह्मा स्थिरचराणां स्थावरजंगमानामाद्य आदौ भवः स ऋषिभिर्मनुष्योत्तममारभ्य सरस्वत्यंतैर्ज्ञानिभिः सिद्धैः स्वयोग्यसाधनसंपूर्णैः सह ॥ ११ ॥ भेददृष्ट्या पंचविधभेददर्शनेनाभिमानेन स्वयोग्यमुक्तिसाधनज्ञानेन सगुणं ज्ञानानंदादिसर्वगुणपूर्णमत एव ब्रह्म शब्दवाच्यं । तस्य सर्वगुणपूर्णत्वं कुत इत्यत उक्तं ॥ कर्तृत्वादिति । जन्मादिकर्तृत्वादित्यर्थः । यथोक्तं । जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ब्रह्मणो लक्षणं प्रोक्तमिति । पुरुषं वासुदेवं पुरुषर्षभं परमेश्वरं ॥१२॥ अगुणव्यतिकरे प्रलये संगत्य प्रविश्येश्वरस्य मूर्तिना नियामकेन तेन कालेन परिवर्तनेन । काले सृष्टिकाले प्राप्ते सति पुनरगुणव्यतिकरे गुणविकारशून्येऽप्राकृते श्वेतद्वीपे बहिर्जाते प्रादुर्भूते सति तत्र पुनर्निर्गच्छति ॥ १३ ॥ तत्र तेषामपेक्षितविषयभोगानंतरं पुनः प्रलये परमेश्वरप्रवेशमाह । ऐश्वर्यमाह । अत्र गुणव्यतिकरे सति इत्यस्य विवक्षितं छेदमर्थं च दर्शयन् पुनरायांतीत्यपेक्षितं कर्म पूरयति ॥ गुणव्यतिकर इति । गुणव्यतिकरेऽसतीति पदद्वयलब्धार्थप्रदर्शनं ॥ लये प्राप्त इति । ततश्चायं श्लोकार्थः ॥ ये श्वेतद्वीपे तिष्ठंति ते ब्रह्मादयो मुक्ताः । धर्मनिर्मितज्ञानोत्तरकृतकर्मजनितधर्मविनिर्मितं यत्पारमेष्ठ्यं परमेष्ठी सर्वोत्तमो भगवान् तत्प्रसादप्राप्तमैश्वर्यमपेक्षितनानाविषयाधिपत्यं तदपि निषेव्य भुक्त्वा। ज्ञानमात्रलब्धस्वरूपसुखसमुच्चयार्थोऽपि शब्दः पुनर्गुणव्यतिकरे कार्यप्रपंचेऽसति नश्यति सति प्रलये प्राप्ते परमेश्वरमायांति प्रविष्टा भविष्यंति । तत्र च स्वरूपसुखादिमात्रं भुंज्यत इत्यपि द्रष्टव्यं । एवं प्रतिसर्गं श्वेतद्वीपादौ निर्गत्य तत्र स्थित्वा ज्ञानधर्मार्जिता-

न्विषयाननुभूय पुनः प्रतिलयं परमेश्वरं प्रविश्य तत्र ज्ञानफलं स्वरूपसुखं भुंक्त इत्याशयः । आद्यः स्थिरचराणां य इति चतुः श्लोक्युक्तार्थे प्रमाणांतरसंवादं दर्शयति ।। ब्रह्मेति । ब्रह्मा देवैः परिवृत इत्यनेनाद्यश्लोकतात्पर्यकथनं । प्रलये परमेश्वरं प्राविश्येत्यनेन ससंगत्यस्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदत इत्यनेन जातेऽगुणव्यतिकर इत्यस्य ज्ञानधर्मफलानित्यादिना भुंजत इत्यंतेनैश्वर्यं पारमेष्ठ्यमित्यादेर्निषेव्येत्यंतस्यैवमेवैषां काल इत्यादिनोत्तमा इत्यंतेन पुनरायांति गुणव्यतिकरे सतीत्यस्य यथा पूर्वं हरेः सर्वगुणैरित्यादिना यथा पदमित्यंतेन यथा पूर्वं प्रजायत इत्यस्य विवरणं कृतमिति ज्ञातव्यं । ज्ञानधर्मफलानित्युक्त्या ज्ञानधर्मयोः समुच्चयेन भोगजनकत्वमिति सूचयति । ज्ञानव्यक्तमित्यनेन प्रलयकालीनस्वरूपसुखाभिव्यक्तौ ज्ञानमात्रकारणं नभोगाभिव्यक्तसुख इव धर्मोऽपीति सूचयति । काले संसर्गनिर्गमौ प्रलयकाले संसर्गः प्रवेशरूपः सृष्टिकाले निर्गम इत्यर्थः । नित्यौ । प्रवाहत इति शेषः । नित्यसुखमेव प्रलये । च शब्दस्तु शब्दार्थः । सृष्टौ तु तथा भोगा भोगा अपि ।। यथा पूर्वं हरेरित्यादेरयमर्थः ।। ।। ब्रह्मा यथा पूर्वं हरेः सकाशात्सर्वगुणैर्नीचताऽन्येषां सरस्वत्यादीनां सकाशादुच्यता यथा चान्येषः शेषादीनां । पूर्वं यथा पदं तरतमभावोपेतस्वपदमनतिक्रम्य सर्वगुणैर्नीचोच्चता । तथैव मुक्त्यनंतरमपि नीचोच्चता । अस्तीति शेषः ।। १४ ।। उपसंहरति ।। अथेति । अतस्तस्मात्तं स्वशरणागतानां मुक्तिप्रदं भावेन भक्त्या । एतदेव विधातुं पुनः पुनः काम्यकर्मिणो निंदयति ।। ये त्विहेति षड्भिः । तु शब्दो मोक्षमार्गनिरतेभ्योऽत्यंतवैलक्षण्यसूचकः । अत्र पितृलोकं व्रजंतित इति सर्वथा हरिभक्तिशून्यानामपि पितृलोकप्राप्तिरुच्यत इति भाति । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ।। अत्यल्पभक्ता इति । अधमप्रसादजनकभक्तिमंत इत्यर्थः। मधुद्विषः कथायां ये विमुखास्ते दैवेन विहता इत्यस्य तात्पर्यं ।। भक्तिवर्जित निरयं यांतीति । नूनमित्यस्यार्थः ।। ध्रुवमिति । ये चासद्ग्रंथान् शृण्वंति ते नूनं दैवेन विहता इत्यस्य तात्पर्यमाह ।। अन्य सामान्येत्यादिना । विष्णोरन्यसाम्यवेत्तार इत्यर्थः ।। तदन्येति । विष्ण्वन्योत्तमवादिन इत्यर्थः । ध्रुवमेव निरयं स्थिरमेव नरकं । तम इति यावत् । अपि धर्मेति । केवलविहितानुष्ठातारोऽपीत्यर्थः। अनेन कुर्वंत्यप्रतिषिद्धानीत्यादेस्तात्पर्यमुक्तमित्यवगंतव्यं । एवं त्रैवर्गिकाणां त्रैविध्ये प्रमाणांतरमप्याह ।। मुक्तियोग्या इति । अधमप्रसादजनकभक्तिमंत इत्यर्थे तु शब्दः । देवपदम-

तात्त्विकदेवपरं । तथा च ये वस्तुतो मुक्तियोग्या अतात्त्विकदेवाद्याः सादियोगिनस्ते पूर्वं यदा मानुषा अभूवंस्तदाऽत्यल्पभक्तिमंतः संतो यज्ञभोगिनो यज्ञादिकं कृत्वा तत्फलस्वर्गादिभोगिनो भवंति । अनेन पितृलोकं व्रजंतीत्येतत्प्रमापितं । ये श्राद्धादिकृतः श्राद्धादिमात्रकृतः । हरिभक्तिवर्जिता इति यावत् । ते मनुष्यभेदाः नरकगंतृमनुष्यप्रभेदा इत्यर्थः । ये तु हरिद्वेषिणः श्राद्धादिकृतस्तेऽसुरास्तमोयोग्या इत्यर्थः । अनेन विमुखा हरिमेधस इत्यादेस्तात्पर्यमुक्तमित्यवगंतव्यं ॥ ततश्चायं श्लोकषट्कार्थः ॥ इह स्वर्गादावप्रतिषिद्धानि विहितानि ज्योतिष्टोमादीनि नित्यानि संध्यावंदनादीनि ॥ १६ ॥ रजसा रजोगुणेन कुंठमनसो मोक्षविषये प्रतिबद्धमनसोऽत एव कामात्मानो विषयासक्तमनसोऽत एवाजितेंद्रियाः । पितॄनित्युपलक्षणं । देवादीनित्यपि द्रष्टव्यं ॥ १७ ॥ ते त्रैवर्गिका मोक्षव्यतिरिक्तपुरुषार्थसाधनशीला अल्पभक्तिकाः । मोक्षयोग्याश्चेदर्यम्णः सूर्यस्य दक्षिणेन यथा दक्षिणायनसंज्ञेन मार्गेण पितृलोकं । उपलक्षणमेतत् । चांद्रमसं च लोकं व्रजंति । ततस्ते क्षीणसुकृताः संतः । भो सति मातः । पुनरिमं लोकं प्रति पतंति आयांति । दैवैर्देवदूतैर्विभ्रंशिता उदया भोगसाधनानि येषां ते तथा । ततः प्रजायांतु प्रजायंते स्वसंताने पुनः क्षिप्रमेव प्रजायंते । तत्र श्माशानांतक्रियाकृतो गर्भाधानमारभ्यांत्यकर्मपर्यंतं सर्वविहितकर्मकृत इत्यर्थः । ततः पितृलोकं व्रजंति । ततस्ते क्षीणसुकृता इमं लोकं प्रति पतंति । तत्र च प्रजायांतु प्रजायंत इत्यावृत्त्य योज्यं । अत एव प्रमाणे स्वसंताने पुनः पुनरित्युक्तं ॥ १८ ॥ ये त्विहासक्तमनस इत्यादिविशेषणोपात्तास्त्रैवर्गिका नित्यसंसारिणो हरिमेधसः सूर्यवर्चसः कथनीया उरवो विक्रमाः पराक्रमा यस्य तस्य मधुद्विषः कथायां विमुखा हरिभक्तिवर्जिताश्चेत्ते न्यूनं दैवेनादृष्टप्रेरकेण हरिणा विहता नरकभागिनो भवंतीत्यर्थः । अत्यल्पहरिभक्तियुक्ताश्चेत्तेऽपि पितृलोकं व्रजंतीत्यपि ग्राह्यं । ये त्विहासक्तमनस इत्यादिविशेषणविशिष्टा अपि ये त्रैवर्गिकाः पुरुषा अच्युतकथासुधां हित्वा विड्भुजो विड्वराहाद्याः पुरीषमिवासद्गाथास्तानि शृण्वंति सेवंते । तेऽसुरजीवा नूनं दैवेन विहता हरिकोपेन तमोगंतारो भवंतीति ॥ २१ ॥ एवमितरपुरुषार्थकामिनां मोक्षाभावाद्भगवद्भजनमेव मोक्षाय त्वया कार्यमित्याह ॥ तस्मादिति । सर्वभावेन सर्वप्रकारेण तद्गुणाश्रयया तद्गुणश्रवणजातया ॥ २२ ॥ भक्तियोग्यस्य मोक्षसाधनत्वं किं साक्षान्नेत्याह ॥ वासुदेव इति । वैराग्यं । अतिशयितमिति

शेषः । तदनंतरं ज्ञानं ध्यानं जनयति । ब्रह्म दृश्यतेऽनेनेति ब्रह्मदर्शनं ब्रह्मापरोक्षज्ञानसाधनमित्यर्थः ॥ २३ ॥ एतदेवोपपादयति ॥ यदाऽस्येति । अस्य वैराग्यादिसाधनसंपन्नस्योपासकस्य चित्तं बंधकत्वादिना समेष्वर्थेषु शब्दादिषु इंद्रियवृत्तिभिरिदं मम प्रियमिदं ममाप्रियं। उत शब्द इति शब्दार्थे। इति वैषम्यं यदा न गृह्णाति किंतु शब्दाद्यर्थाः सर्वे बंधकत्वेन ममाप्रिया एव। भगवानेव परमप्रिय इति । गृह्णातीति यावत् ॥ २४ ॥ स तदैवात्मना स्वरूपचित्तामिश्रितेन जडचित्तेनात्मानं स्वबिंबरूपं परमात्मानं निःसंगमसंगं समदर्शनं यथार्थज्ञानिनं हेयोपादेयरहितं हेयत्वसहितोपादेयत्वरहितं । अत्युपादेयमिति यावत् । आरूढपदं स्वचित्तारूढस्वरूपं। स्वध्यानविषयीभूतस्वरूपमिति यावत्। आत्मानमित्युक्तो न जीव इत्युपपादनाय निःसंगमित्यादिविशेषणानि ॥ २५ ॥ ननु दृश्यस्पृश्यादिनानाविविधवस्त्वंतर्गतस्य भगवतोऽपि नानात्वादनेकेषां च परमैश्वर्यासंभवान्न तत्र निरतिशयभक्तियोगः संभवतीत्याशंकायां सर्वत्रावस्थितो भगवानेक एवेति सोपपत्तिकमाह ॥ ज्ञानमात्रमिति । एक एव भगवान्दृश्यादिभिर्भावैरधिष्ठानभूतः पृथगीयते पृथक्त्वेन भ्रांत्यैव ज्ञायत इत्यर्थः । कुतः । यतो भगवान्ज्ञानमात्रं परं ब्रह्मेत्यादिवैदिकशब्दवाच्यमात्रशब्दवाच्यः । ज्ञानपदमानंदादेरप्युपलक्षकं । एवं च सर्वोत्तमज्ञानानंदादिमात्रशब्दवाच्यत्वं परब्रह्म परमात्म परमेश्वर परमपुरुषादिशब्दवाच्यत्वं च नानेकेषु संभवतीत्याशयः ॥ २६ ॥ उक्तभक्तियोगस्य सर्वतो वैराग्यमेव साक्षात्फलमित्येतत्प्रमाणप्रसिद्ध्योपपादयाति ॥ एतावानेवेति । इहाधिकारिणां मध्ये योगिनो मोक्षोपायमनुतिष्ठतः समग्रेणाधिकेन योगेनाभिमतार्थः साक्षात्फलमेतावानेव युज्यते युक्तो भवति । कुत एतदित्यत उक्तं ॥ यदसंग इति । कृत्स्नशः साकल्येन । सर्वत्रेति यावत् । असंग आसक्तिशून्यः । पुरुषो भवतीति यत् । एतावानित्यर्थः । हीति प्रमाणप्रसिद्धिमत्र दर्शयति ॥ ७ ॥ यदुक्तं ज्ञानमात्रमिति ज्ञानानंदादिरूपत्वं भगवतस्तदयुक्तं । यतो भगवदंशानां मत्स्यादीनां भौतिकं रूपं दृश्यत इत्यत आह ॥ ज्ञानमेकमिति । अस्य श्लोकस्यार्थाप्रतीत्या तात्पर्यं प्रमाणेनैवाह ॥ मत्स्येति । च शब्दोऽप्यर्थः । ज्ञानैकमात्रात्मकमपि वस्तुतो मुख्यज्ञानानंदादिमात्रात्मकमपीत्यर्थः । यन्मत्स्यकूर्मादिरूपं तद्वै भौतिकं तु भौतिकमेव मन्यंते तेऽधरंतमो गच्छंति । अतस्तत्ज्ञानं भ्रमरूपमेवेत्याशयः ॥ ततश्चायं श्लोकार्थः ॥ यदेकं ज्ञानं केवलं ज्ञानानंदात्मकं निर्गुणं सत्त्वादि-

गुणविकारशून्यं ब्रह्म गुणपूर्णं मत्स्यकूर्मादिरूपं तच्छब्दादिधर्मिणां शब्दादिविषयासक्तानां पुंसां पराचीनैर्बहिर्मुखैरिंद्रियैरर्थरूपेण भौतिकत्वेन भ्रांत्याऽवभाति । अवस्तुतोऽतो ज्ञानमात्रमित्युक्तमिति भावः ॥ २८ ॥ ननु कथमेवं विधा भ्रांतिः पुरुषाणामित्यतो दृष्टांतमुखेन तदुपपादयति ॥ यथेति । अस्याप्रतीत्या तात्पर्यं वक्तुं तावत्प्रमाणं पठति । एकादशेति । एकादशविध इत्यस्य तात्पर्यं ॥ एकादशेंद्रियात्मेति । पंचविध इत्यस्य व्याख्यानं ॥ पंचभूतात्मक इति । तथा शब्दोऽनुक्तसमुच्चायकः । अंडात्मकस्तत्स्थजगदात्मकश्चेत्यर्थः । अज्ञैर्भ्रांत्या । ज्ञायत इति शेषः । भ्रांतित्वोपपादनायोक्तं सर्वेषामिंद्रियाणां पंचभूतानां चाभिमानीति । तथा च तेभ्यो भिन्न इति भावः । स्वराडित्यस्येंद्र इति व्याख्यानं । इतरेंद्रव्यावृत्त्यर्थं पुरंदर इति । अंडात्मकजगदात्मकश्चेत्यनयोरपि भ्रांतित्वोपपादनायाह । इदमंडं सर्वं तत्स्थं जगच्च शक्रदेहं शक्राभिमन्यमानं विदुरिति । तथा च ताभ्यामपि स भिन्न इत्याशयः । अनेन तस्य वपुरंडं जगद्यत इत्येतदुक्तार्थं । स्वराडित्यस्य महानित्यादिनाऽपि सामानाधिकरण्याय तस्याभिधेयांतरमप्यभिप्रेत्याह ॥ तत्पतिरिति । तस्येंद्रस्य पतिरित्यर्थः । त्रिवृदित्यस्यार्थः ॥ त्रिगुण इति । सत्त्वाद्यात्मकवैकारिकादिरूपेण त्रिविध इत्यर्थः । तस्य रुद्रस्य च ब्रह्मा । पतिरित्यनुवर्तते । तथा च स्वराट् शब्दवाच्येंद्राधिपतित्वाद्रुद्रब्रह्मणोरपि स्वराट् शब्दवाच्यत्वमस्तीति भावः । एवं दार्ष्टांतिकभूतो हरिरपि स्वराट् शब्दवाच्य इत्याशयेनाह ॥ तत इति । ततस्तस्य ब्रह्मणो हरिः पतिरित्यर्थः । तथा च हरिरपि स्वराट् शब्दवाच्य इत्याशयः । एवं प्रमाणमुदाहृत्य दृष्टांतदार्ष्टांतिकभावस्यास्फुटत्वादिदानीं स्ववाक्येन श्लोकतात्पर्यं दर्शयति ॥ यथैतानिति । एतान् ब्रह्मरुद्रेंद्रान् स्वाभिमन्यमानमहदादिभिन्नानपि तदात्मकत्वेन पश्यंति तद्वदेव तथैव ज्ञानात्मकं । वस्तुतोऽप्राकृतमिति यावत् । गुणमयं प्राकृतं ॥ ततश्चायं श्लोकार्थः ॥ यथा स्वराट् ब्रह्मा महान्महत्तत्त्वात्मक इति यथा वा स्वराट् रुद्रस्त्रिवृत्त्रिविधोऽहंरूपस्त्रिविधाहंकारात्मक इति । यथा च स्वराडिंद्रः पंचविधः पंचभूतात्मक एकादशविध एकादशेंद्रियात्मकोंऽडात्मको जगदात्मकश्चेति भ्रांत्या शब्दादिधर्मिणामज्ञानामवभाति । कुत एतेषां ज्ञानानां भ्रांतित्वमित्यत उक्तं ॥ तस्येति । तस्येंद्रस्यांडं तत्स्थं जगच्च यतो वपुरभिमन्यमानं । ततो भिन्नमिति प्रमाणप्रसिद्धमिति यावत् । इदमुपलक्षणं । तस्य ब्रह्मणो महान्यतो वपुस्तस्य रुद्रस्याहंकारो यतो

वपुस्तस्येंद्रस्येंद्रियादिकमपि यतो वपुरित्यपि ग्राह्यं । तथा स्वराट् मत्स्यादिरूपी हरिर्यतः केवलज्ञानरूपं निर्गुणं ब्रह्म तदात्मकत्वेन । पूर्णमदः इत्यादिश्रुत्याऽपि सिद्धः । अत भ्रांत्यैवार्थरूपणे जडदेहात्मनाऽज्ञानामवभातीति ॥२९॥ मत्स्यादिरूपं परं ब्रह्म शब्दादिधर्मिणां चेदन्यथा भाति तर्हि कस्तत्सम्यक् पश्यतीत्यपेक्षायामाह ॥ एतद्वेति । एतन्मत्स्यादिरूपं परं ब्रह्म श्रद्धादिसाधनसंपन्न एवाधिकारी परिपश्यति ज्ञानानंदात्मकमेवेदं न प्राकृतमिति पश्यतीत्यर्थः ॥ ३० ॥ उपसंहरति ॥ इत्येतदिति । हे गुर्वि पूज्ये मातः । एतच्छ्रुत्यादिप्रसिद्धं । ब्रह्म दर्शयतीति ब्रह्मदर्शनं परतत्त्वविषयकं । प्रकृतेश्चेतनाया अचेतनायाश्च पुरुषस्य ब्रह्मादिजीवसमूहस्य च तत्त्वं । अनेन परतत्त्वविषयकत्वमुक्तमिति ज्ञातव्यं । तथा च परापरतत्त्वविषयकं ज्ञानं कथितमित्युक्तं ॥ ३१ ॥ अपरतत्त्वविषयमपि ज्ञानं । अंततो मद्विषयकं चेन्मुक्तिसाधनमित्याह ॥ ज्ञानमिति । ज्ञानं ज्ञानरूपयोगोऽपि मन्निष्ठो मद्विषयको नैर्गुण्यो निर्गुणमुक्तिसंबंधी । तत्साधक इति यावत् । नन्वेवं भक्त्युपदेशो व्यर्थ इत्यत उक्तं ॥ भक्तिलक्षण इति । भक्तिरूपो योगश्च नैर्गुण्यो भक्तिसहितमेव ज्ञानं भक्तिसाधनं न केवलमतो नोक्तदोष इत्याशयः । ननु निर्विशेषब्रह्मज्ञानमेव परं मुक्तिसाधनं भक्तिस्तु भगवच्छब्दवाच्यसगुणविषया न तत्साधनमिति केचिदास्थितास्तान्प्रत्याह ॥ द्वयोरपीति । माहात्म्यज्ञानसुदृढसर्वतोऽधिकस्नेहयोरित्यर्थः । अर्थो विषय एक एव । स क इत्यत उक्तं ॥ भगवच्छब्देति । भगवच्छब्दो लक्षणं ज्ञापको यस्य भगवच्छब्दवाच्य इत्यर्थः । तथा च निर्विशेषज्ञानं परं मुक्तिसाधनमित्येतदप्रामाणिकमित्याशयः । नन्वेवं तमेवं विद्वानमृत इत्यादौ केवलज्ञानस्य भक्त्या त्वनन्ययेत्यादौ केवलभक्तेश्च कथं मोक्षसाधनत्वमुच्यते । कथं चोभयं विना अपामसोममममृता अभूमेत्यादौ कर्मादेरित्याशंकां प्रमाणेनैव परिहरति ॥ ज्ञानभक्तीति । ज्ञानभक्ती विना तयोर्ज्ञानभक्त्योर्मध्ये विष्णुगेनैकतरेणैव कस्यापि मुक्तिर्नैव विद्यत इत्यन्वयः । तथोभयं विना कर्मादिनाऽपि मुक्तिः कस्यापि न विद्यत इत्यर्थः । नन्वेवं तयोरेकतरेणापि मुक्तिर्भवतीत्युदाहृतवचनानां का गतिरित्यत आह ॥ एवमपीति । उभयोरावश्यकत्वेऽपीत्यर्थः । तयोर्ज्ञानभक्त्योर्मध्ये एकस्य भावेऽन्यस्यान्यसत्वस्य नियतेर्नियमात् । एकेनापि मुक्तिर्भवतीति वचनं । उपपद्यत इति शेषः । अपरोक्षज्ञानाभावे मोक्षजनकभक्तेरसंभवात् । भक्त्यभावेऽपरोक्षज्ञानासंभवाच्चैकतरस्यान्याविनाभावो

ध्रुव इति द्रष्टव्यं । अपामसोमित्यादिश्रुतिविरोधं परिहरति ॥ तदर्थमिति । भक्तिज्ञानरूपोभयार्थमित्यर्थः । अन्यसाधनं कर्मादिकं । उच्यत इति शेषः । तथा च तद्वचनं ज्ञानादिद्वारा कर्मणां मोक्षसाधनत्वपरं न साक्षादतो न विरोध इत्याशयः ॥३२॥ ननु शास्त्रेषु मुक्तिगतनानाविधफलसाधनतयाऽनेके विलक्षणगुणा उपास्या उक्तास्तथाविधफलसंपादकविलक्षणानेकगुणवत्त्वं च नैकस्य भगवतः संभवति । तथा च भगवत्ज्ञानमेव मोक्षसाधनमित्युक्तमित्यत एकस्यापि तथा गुणवत्वमुपपद्यत इति दृष्टांतमुखेनोपपादयति ॥ यथेति । पृथक् चारैः पृथक् चारश्चरणं वर्तनं येषां तानि तथा तैर्भिन्नमार्गैरिंद्रियैर्बहूनां रूपरसादीनामाश्रयो गुडादिरेक एवार्थश्चक्षुषा रक्त इति त्वचाऽनुष्णाशीत इति रसनेन मधुर इत्यादिरूपेण नानेयते ज्ञायते तद्वद्भगवानपि शास्त्रवर्त्मभिर्मौक्तनानाविधफलसंपादकगुणविधायकशास्त्रमार्गैरेक एव नाना तत्तद्गुणविशिष्टतयेयत इति न कोऽपि विरोधः ॥ ३३ ॥ यदुक्तं भगवत्ज्ञानार्थमेव कर्मादिकमुच्यत इति तत्प्रपंचयन् अपरोक्षज्ञानसाधनानि दर्शयति ॥ क्रियेति त्रिभिः । क्रियया नित्यनैमिमित्तिकादिरूपया । दर्शनं भगवत्प्रतिमानां । आत्मा मनः कर्मणां काम्यानां निषिद्धानां च संन्यासेन त्यागेन । योगेन ध्यानरूपेण । एव शब्दस्येत्येत एवेति संबंधः । धर्मेणादृष्टविशेषेण पूर्वोक्तक्रियाजनितेन तस्योभयचिन्हवत्त्वमेव दर्शयति ॥ य इति । प्रवृत्तिमान्मोक्षमार्गे प्रवृत्तिजनको निवृत्तिमान्संसारेवैराग्यजनक आत्मतत्त्वं परमात्मनो याथात्म्यं तदवबोधेन श्रवणमननरूपेणेयतेऽपरोक्षेण ज्ञायते स गुणोऽधिकार्यपेक्षितफलसंपादकगुणपूर्णो निर्गुणः सत्त्वादिगुणशून्यः स्वं स्वीयं भक्तं कृपया पश्यतीति स्वदृक् ॥३६॥ ज्ञानयोगमुपसंहृत्य तस्य भक्तिसाहित्यादिकं तत्साधनानि चोक्त्वेदानीं भक्तियोगादिकमुपसंहरति ॥ प्रावोचमित्यादि द्वाभ्यां । चतुर्विधं त्रिगुणनिर्गुणभेदेनांतधर्वाति । उत्पत्तिमरणादिकं करोति ॥ ३७ ॥ आत्मा जीव आत्मनः परमात्मनो गतिं स्थितिमात्मनः स्वस्य गतिं गम्यमिति वा ॥ ३८ ॥ एतदुपदेशानाधिकारिण आह ॥ नैतदिति । खलः परोपद्रवकर्ता । स्तब्धो गुरुनियोगमकुर्वाणः । भिन्नोऽवैष्णवसमयनिष्ठो धर्मध्वजो डांभिको लोलुपो विषयाभिलाषी । अधिकारिण आह ॥ श्रद्दधानायेति द्वाभ्यां ॥४०॥ एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिः किम्वनुष्ठातुरित्यभिप्रेत्याह ॥ य इदमिति ॥ ४२ ॥ इति श्रीभागवतटिप्पण्यां त्रयस्त्रिंशोऽध्यायः ॥ ३–३३ ॥ ॥

॥ हरिः ॐ ॥ विस्रस्तमुन्मीलितं मोहरूपमज्ञानामिथ्याज्ञानाख्यं पटलमावरणं यस्याः सा तथा । तत्त्वविषये येऽखिलाः सिद्धा ज्ञानिनः सांख्याचार्यास्तेषां भूमिमाश्रयं ॥ १ ॥ अथ शब्दो मंगलार्थः । स्तोत्रारंभार्थो वा । भूतेंद्रियार्थात्ममय- मित्येतद्भूताद्यात्मकमिति प्रतीतिवारणाय व्याख्याति ॥ भूतेति । तथा च भूतान्याकाशादीनींद्रियाणि श्रोत्रादीनि । अर्थाः शब्दादय आत्मा मनः । अत्र भूतादिशब्देन तदभिमानिनो देवा ग्राह्याः । एतेभ्यो मयं प्रधानमित्यर्थः । मयं प्रधानमुद्दिष्टमिति वचनादिति भावः । अत्र प्रमाणसंवादमाह ॥ त्वमिति । अत्र प्रधान शब्दद्वयं तत्कार्यभूताद्युपलक्षकमतो न प्रकृतासंगतिरिति ध्येयं । मूले यज्जठराब्जजातो यन्नाभिस्थकमलजातो ब्रह्मा स्वयं साक्षाद्यस्य ते तत्ते वपुर्दध्र्यौ । स एव तादृशवपुष्मानेव । योभवा न्विश्वस्य सर्गादि विधत्ते न तु तव सर्गादिकर्ता कश्चिदन्योऽस्ति सत्वं मे जठरेण कथं भृत इति त्रयाणामन्वयः । कथं भूतं वपुः । अप्ययांते प्रलयांते सलिले शयानं भूतेंद्रियार्थात्ममयं भूताद्यभिमानिसर्वदेवोत्तमं । गुणानां कार्याणां प्रवाहो यस्मिन्सन्निर्दुष्टा- शेषबीजं सर्वजगद्व्यंजकं । स एवेत्येवकारेण भगवद्देहानां भेदो नास्तीति सूचयाति । गुणप्रवाहेषु रजोगुणादिकार्यसृष्ट्यादि- प्रवाहेषु विभक्तं ब्रह्मादिरूपेण पृथक् कृतं । वीर्यं जगत्सर्जनादिरूपं माहात्म्यं यस्य स तथा । सृष्ट्यादि सृष्ट्याद्यष्टकं । अनीहः प्रयोजनेच्छारहितः क्लिष्टचेष्टारहित इति वा । अवितथाभिसंधिः सत्यसंकल्प आत्मेश्वरः सकलचेतनस्वाम्यतर्क्य- सहस्रशक्तिरचिंत्यानंत्यशक्तिः । अनेन विचित्रानेककार्यकर्तुर्न श्रमाचिंतादिदोषप्रसक्तिरिति सूचयाति ॥ २ ॥ ३ ॥ हे नाथ । यस्य तवोदरे एतद्विश्वमासीदस्ति सत्वं न्विदानीं कथं मे मया जठरेण भृतः । अल्पमात्रमपि भारं वोढुमसमर्थाऽहं सर्वजगदा- धारं त्वां कथमवहमतस्त्वमतर्क्यसहस्रशक्तिरसीत्याशयः । यस्त्वं युगांते प्रलयेंऽघ्रिं पदांगुष्ठं पिबतीत्यंघ्रिपा नो माययेच्छया शिशुः सन् एक एव वटपत्रे शेते । स्मेति प्रमाणप्रसिद्धिमत्राह । स त्वं कथं मे जठरेण भृतो न कथमपि । यथा प्रलये इच्छ- यैव शिशुरूपं धृतमेवमिदानीमपीच्छयैव शिशुस्वरूपं मज्जठरे त्वया धृतमतो न मत्पुत्रस्त्वमसीत्याशयः ॥ ४ ॥ एतदेव पुनः स्पष्टयति ॥ त्वमिति । अत्र देहतंत्र इत्यस्य देहाधीन इत्यन्यथाप्रतीतिवारणायार्थमाह ॥ देहतंत्र इति । तंत्र शब्दस्य प्रका- शार्थत्वे प्रमाणमाह ॥ ततिरिति । प्रकाशस्ततिरित्यादिशब्दैरुच्यत इत्यर्थः । त्वं देहतंत्रः पूर्वं विद्यमानस्य देहस्य

प्रकाशो व्यक्तिर्यस्य सोऽसि । न तु जीववदविद्यमानदेहोत्पत्तिमांस्त्वमित्याशयः । परिपूर्णस्य तव किमर्थमवतार इत्याशंकायां प्रयोजनार्थमिति दृष्टांतमुखेनाह ॥ यथेति । यथा तव सूकरादयोऽवताराः पाप्मनां पापिष्ठानां हिरण्याक्षादीनां प्रशमाय नाशनाय निदेशभाजां स्वाज्ञाकारिणां ब्रह्मादीनां विभूतये च कृतास्तथाऽयमप्यवतार आत्मयथोपलब्धये निदेशकारिणां परमात्मज्ञानमार्गप्रदर्शनाय कृत इति ॥ ५ ॥ त्वद्दर्शनादिनाऽहं कृतार्थाऽस्मीति कैमुत्येनाह ॥ यन्नामधेयेति । श्वानमत्तीति श्वादः श्वपचः सवनाय सोमलतावाहनाय यज्ञकारणायेत्यर्थः । कल्पते समर्थो भवति । पूज्यो भवतीति भावः ॥ ९ ॥ तदेवोपपादयति ॥ अहो बतेति । अतोऽवैष्णवसोमयाजिनो यस्य त्वद्भक्तस्य स्वपचस्य जिव्हाग्रे तुभ्यं तव नाम यद्यस्माद्वर्तते ऽतो गरीयानिति वा । ननु तप आदिभिः शुद्धांतःकरणानामेव भक्तानां नामसंकीर्तनादिकं भवति । अतः कथं तदनधिकारिणः श्वपचस्य नामसंकीर्तनादिकमित्यत आह ॥ तेपुरिति । ये नाम गृणंति ते पूर्व जन्मानि तप आदि कृतवंत इति ज्ञायत इत्यर्थः । यद्वा । गरीयस्त्वे तप आदिकं प्रयोजकं । न च श्वपचस्य तदस्ति । अतः कथं तस्य नामसंकीर्तनमात्रेण गरीयस्त्वमित्यतस्तप आदिजनितपुण्यवंतोऽपि त एवेत्याह ॥ तेपुरिति । ते त एव तपस्तेपुः कृतवंतो जुहुवुर्होमं कृतवंतः सस्नुस्तीर्थेषु स्नाता आर्यास्त एव सदाचारा ब्रह्म वेदमनूचुरधीतवंतस्त्वन्नामकीर्तनेनैव तत्फल तैर्लब्धमित्याशयः ॥ ७ ॥ परब्रह्मरूपत्वं कपिलस्य स्पष्टयंती स्तुतिमुपसंहरति ॥ तं त्वेति । प्रत्यक् स्रोतसि विषयसंचरणमुक्त्वा प्रत्यक् स्यंदमाने आत्मनि मनसि संविभाव्यं सम्यग्ध्येयं स्वतेजसा स्वसामर्थ्येनैव ध्वस्तो नित्यं निरस्तो गुणप्रवाहः संसारो यस्य तं वेदगर्भं वेदमहातात्पर्यविषयं वंदे स्तौमि नमामि च । अविक्लवया गंभीरया मातृवत्सलो मातरि स्वभक्तिप्रत्युक्तवात्सल्यवानित्यर्थः । आस्थितेनानुष्ठितेन परां काष्ठां यावत्स्वानंदस्याभिव्यक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥ मद्यं मम तन्मतं न विदंतीत्यतद्विदो मृत्युं संसारमृच्छंति प्राप्नुवंति ॥ ११ ॥ उशतीमभीष्टामनुमत आज्ञप्तः ॥ १२ ॥ योगादेशेन योगोपदेशेन निमित्तेन योगयुक्तभक्त्यादिरूपयोगयुक्ता सती सरस्वत्याः संबंधिनि तस्मिन्नाश्रमे आसीना समाहिताऽसंप्रज्ञातसमाधियुता बभूव ॥ १३ ॥ एतदेव स्नानतपोवैराग्यादिसाधनोक्तिपूर्वकं विशदयति ॥ अभीक्ष्णेत्यादि षोडशभिः । अभीक्ष्णं

त्रिषवणमवगाहनं स्नानं तेन कपिशान्स्वत एव कुटिलान् अलकान्केशान् आत्मानं देहं चीरणं चीरधारिणं कृशं च बिभ्रती सती ॥ १४ प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृंभितमतिशयितं । स्वगार्हस्थ्यं हित्वा । अपत्यविरहातुरा सती वदनं किंचिच्चकारेत्युत्तरेणान्वयः । कथं भूतं गार्हस्थ्यं । अनौपम्यं नोपमाया योग्यं तदनौपम्यं सदृशं न विद्यते औपम्यं यस्य स तथा । वैमानिकैर्देवैः ॥ १५ ॥ पुनः कथं भूतं । यत्र गार्हस्थ्ये पयः फेननिभाः क्षीरफेननिभा मृदुशुभ्राः शय्याः । संतीति यावत् । दांता गजदंतनिर्मिता रुक्मपरिच्छदाः स्वर्णपरिकरोपेता मंचका आसनानि पीठादीनि सुस्पर्शानि सुखकर-स्पर्शान्यास्तरणानि येषु ॥ १६ ॥ महामरकतेषु कुड्येषु रत्नरूपदीपार्चिष्वित्यर्थः । ललनानां स्त्रीणामाभरणस्थानानि यानि रत्नानि तैः संयुताः ॥ १७ ॥ बहुभिरमरद्रुमै रम्यमुद्यानं यत्र भाति ॥ १८ ॥ यत्र गृहोद्याने वाप्यां प्रविष्टं कर्दमेनोपला-लितमात्मानं विबुधानुचरा जगुरित्यन्वयः ॥ १९ ॥ पुनः कथं भूतं गार्हस्थ्यं । आखंडलयोषितामिंद्रस्त्रीणामपीप्सिततमं प्राप्तुमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा वदनं किंचिच्चकार ॥ २० ॥ वत्से नष्टे वत्सला गौरिव विरहातुराऽभूदित्यन्वयः ॥ २१ ॥ समस्तचिंता संकुचितचिंता व्यस्ताचिंता विस्तृतचिंता । समग्राचिंतेति यावत् ॥ २२ ॥ तथा भक्तिप्रवाहरूपयोगेन बलीयसा दृढेन वैराग्येण च युक्ता श्रवणाद्यनुष्ठानजातेन ब्रह्महेतुना ब्रह्मप्रसादजातेन । ब्रह्महेतिनेति पाठे ब्रह्मवशीकरणा-युधरूपेण ज्ञानेनेदमित्थमेवेति निश्चयरूपेण निमित्तेन ॥ २३ ॥ २४ ॥ विशुद्धेनैकाग्र्येणात्मना मनसाऽऽत्मानं स्वाबिंबरूपं विश्वतो मुखं सर्वत्र व्याप्तं स्वानुभूत्या स्वरूपप्रज्ञया तिरोभूतं दूरनिरस्तं मायागुणानां सत्त्वादीनां विशेषणं देहबंधादिरूपकार्यं यस्य तं भगवद्रूपं ॥ २५ ॥ भगवद्रूपं सुतं ध्यायत्यापरोक्ष्येण पश्यंती आत्मसंश्रये स्वात्माधारे भगवति ब्रह्मणि अवस्थितमति-रचलचित्ता यदा तदाऽऽत्मानं देहं न सस्मार । असंप्रज्ञातसमाधिस्था बभूवेत्याशयः । उत्थितो जाग्रदवस्थां प्राप्तः स्वप्नदृष्ट-मात्मानं देहं यथा न स्मरति तथेत्यर्थः । पुनः कथं भूतेत्यपेक्षायामुक्तं ॥ निवृत्तजीवोपाधित्वादिति । अत्र जीवोपाधेर्लिंगशरीर-प्रभृतिकस्य सर्वथानिवृत्तिरुच्यत इति प्रतीतिवारणाय विवक्षिततात्पर्यं प्रमाणेनैवाह ॥ जीवोपाधिप्रभृतय इति । जीवस्य बाह्योपाधिर्लिंगशरीरं । प्रभृति शब्देन कामकर्मादिसंग्रहः । आमुक्तेर्लिंगशरीरभंगरूपमोक्षपर्यंतं । तर्ह्यभाववचनानां का गति-

रित्यत उक्तं ॥ अभावस्त्विति । तु शब्दोऽवधारणे । निष्फलत्वादेव दग्धपटादिवदकिंचित्करादेवाभाव उदीर्यत इत्यर्थः । ततश्च निवृत्तजीवोपाधित्वादकिंचित्करलिंगशरीररूपबाह्योपाधित्वात् । निवृत्तजीवभावत्वादिति पाठेऽपि जीवं भावयत्युत्पादयतीति व्युत्पत्त्या जीवभावशब्दो लिंगशरीराद्युपाधिपर इति ज्ञेयं । वीतक्लेशा विगतदुःखा । आत्मनिर्वृतिः प्राप्तस्वरूपानंदा । नित्यारूढोपलब्धप्रतिष्ठः समाधिर्यस्य स तथा तस्य भावस्तत्वं तस्मात् । परावृत्तः शांतो गुणेषु शब्दादिषु विषयेषु भ्रमः सुखसाधनत्वभ्रमो यस्याः सा तथा । एतादृश्यात्मानं न सस्मारेत्याशयः ॥ २६ ॥ २७ ॥ तस्या देहस्तद्देहः परतः पराभिदाऽसीभिराध्यसंभवान्मनोग्लान्यसंभवादकृशः । अकृत इति पाठेऽभ्यंगस्नानादिसंस्कारशून्य इत्यर्थः ॥ २८ ॥ आत्मानं न सस्मारेत्युक्तमेव विवृणोति ॥ स्वांगामिति । तपोयोगमयं तत्प्रचुरं । न बुबुध इत्यत्र हेतुः ॥ वासुदेवेति ॥ २९ ॥ अविरतमपरिच्छिन्नं निर्वाणं प्राकृतशरीररहितं । हेत्यास्वादने ॥ ३० ॥ तद्बिंदुसरोनामकं । हे वीर विदुर । उपेयुषी प्राप्ता ॥ ३१ ॥ योगविधुतं योगमार्गेण त्यक्तं तन्मर्त्यं शरीरं सरिन्नद्यभून्नद्याकारेण परिणताऽभूदित्यर्थः । स्रोतसां नदीनां प्रवरा श्रेष्ठा ॥ ३२ ॥ पूर्वं कपिलो गत इत्युक्तं । स कुत्र गत इत्यपेक्षायां तद्गमनं विशदयति ॥ कपिलोऽपीति । प्रागुदीचीमैशानीं ॥ ३३ ॥ दत्तेऽर्हणनिकेतने पूजानिवासस्थाने यस्मै स तथा ॥ ३४ ॥ योगं स्वध्यानरूपमुपशांत्यै मंगलाय समाहितः स्वस्थचित्तः ॥ ३५ ॥ मैत्रेय आख्यायिकाकथनमुपसंहरति ॥ एतादिति ॥ ३६ ॥ उक्तार्थे तात्पर्यद्योतनायैतच्छ्रवणादिमात्रेणापि फलं भवतीत्याह ॥ य इदमिति । आत्मयोगं गुह्यं परमात्मज्ञानोपायरहस्यं कृतधीः संपादितापरोक्षज्ञानः सुपर्णकेतौ गरुडध्वजे भवति विषये । उपलभते प्राप्नोति ॥ ३८ ॥ इति श्रीभागवटिप्पण्यां चतुस्त्रिंशोऽध्यायः ॥ ३–३४ ॥ ॥

॥ तृतीयस्कंधतात्पर्यफक्किकार्थप्रकाशिनी ॥ कृतिर्यदुपतेर्भूयात्प्रीत्यै माधवमध्वयोः ॥ १ ॥ इति श्रीभागवतटिप्पण्यां श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां तृतीयः स्कंधः समाप्तः ॥ ३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



॥ इति श्रीमद्भागवतटिप्पणी यदुपतिविरचिता समाप्ता ॥

॥ तृतीयः स्कंधः ॥